हरिः ॐ

'प्रवः पान्तमन्धसो धियायते
महेशूराय विष्णवे चार्चत ॥'

—ऋक्संहिता - मण्डलम् २. सू. १५५ मन्त्रः १.

अरायि काणे विकटे गिरिं गच्छ सदाऽन्वे ।
शिरिंबिटस्य सत्त्वभिः तेभिष्ट्वा चातयामसि ॥

—ऋक्संहिता - मण्डलम् १०. सू. १५५ मन्त्रः १.

रयिः ककुद्मान् विदधद्विनष्टं रयिमद्विधानम् ।
तस्मै ककुत्रे विकटाय पित्रे स्वाहा ॥

—श्रीवैखानसमन्त्रसंहिता-प्रश्नम् ७ - अनु. ७ मन्तः ३

---

विना वेङ्कटेशं न नाथो न नाथः
सदा वेङ्कटेशं स्मरामि स्मरामि ।
हरे वेङ्कटेश! प्रसीद प्रसीद
प्रियं वेङ्कटेश! प्रयच्छ प्रयच्छ ॥

---

वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो न भूतो न भविष्यति ॥

—श्रीवेङ्कटाचलमाहात्म्यम्.



## पुराणानुक्रमणिका

### द्वितीयभागगता

श्रीरस्तु

# श्रीवेङ्कटाचलमाहात्म्य द्वितीयभागस्थ विषयाणां सूचिका

## श्री ब्रह्मपुराणे विषयाः

श्री ब्रह्मोत्तरखण्डे विषयाः



श्रीस्कान्दपुराणे (स्कन्दपुराणे) १–भागे विषयाः

श्रीस्कान्दपुराणे (स्कन्दपुराणे) २–भागे विषयाः



श्रीस्कान्दपुराणे ३–भागे विषयाः

श्रीस्कान्दपुराणे ४–भागे विषयाः



श्री आदित्यपुराणे विषयाः

श्रीभविष्योत्तरपुराणे विषयाः



श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रियै पद्मावत्यै नमः

श्रीमते विष्वक्सेनाय नमः

# श्रीवेङ्कटाचलमाहात्म्यम्



द्वितीयो भागः

( श्रीब्रह्मपुराणान्तर्गतम् )



श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥



हरिः ॐ

प्रथमोऽध्यायः



## दुर्वाससं प्रति दिलीपकृतप्रश्नः

श्रीसूतः — राजा दुर्वाससं पृष्ट्वा दिलीपो गृहमागतम् ।
श्रुत्वा श्रीरङ्गमाहात्म्यं श्रीमुष्णस्य च वैभवम् ॥ १
वेङ्कटाचलमाहात्म्यमथ पप्रच्छ सादरम् ।
दिलीपः— 'निर्दिश्य देवदेवस्य स्वयंव्यक्ताष्टवैभवम् ॥ २
श्रीरङ्गवैभवं तत्र श्रीमुष्णस्य च वैभवम् ।
उक्तं त्वया दयासिन्धो! साम्प्रतं वद वैभवम् ॥ ३

श्रीवेङ्कटाद्रिसंज्ञस्य क्षेत्रस्यानुत्तमस्य च ।
वेङ्कटेश्वरदेवोऽसौ यत्र सन्निहितो हरिः ॥ ४

## दिलीपं प्रति दुर्वाससा प्रोक्तं श्रीवेङ्कटाचलवैभवम्

तस्यागतिं वैभवञ्च तीर्थसङ्ख्यां तथैव च ।
येन प्रथा कृता लोके तदाचक्ष्व कृपा यदि ' ॥ ५

दुर्वासा :—

'शृणु राजन्! प्रवक्ष्यामि वेङ्कटाचलवैभवम् ।
तस्यागतिं प्रवक्ष्यामि देवस्यापि महात्मनः ॥ ६
मेरोः पुत्रो महाशैलो जाम्बूनदनदीतटे ।
योजनत्रयविस्तीर्णः त्रिंशद्योजनमायतः ॥ ७
"वेङ्कटे" ति कृतं नाम पित्रा यस्य महात्मनः ।
अमृतस्येन्दिरायाश्च यतो विस्तारकारकः ॥ ८
जीवानां भारते वर्षे ततोऽयं गुणनामकः ।
निर्दोषविष्णोरयनं नारायणमिमं विदुः ॥ ९
वृषस्य भरणात्पोषाद् वृषभं चापि तं विदुः ।
प्रसवादञ्जनादेव्या विदुरञ्जनसंज्ञकम् ।
सशेषागमनाच्चापि शेषाद्रिं प्राहुरुत्तमाः' ॥ १०

दिलीपः—

'सशेषागमनं तस्य कुत एतन्महाविभो! ।
तदाचक्ष्व महाप्राज्ञ! श्रोतुं कौतूहलं हि मे ' ॥ ११

## वायुशेषयोः क्षीराब्धिप्रवृत्तकलहोपोद्घातादिवर्णनम्

दुर्वासाः—

'अनन्तशयनः श्रीमान् कदाचित् क्षीरसागरे ।
लक्ष्मीविलासनिर्विण्णो भगवान्! मधुसूदनः ॥ १२

ब्रह्मानन्दवने रेमे रमयाऽन्तःपुरे सह ।
समादिदेश च तदा भगवान् रमया युतः ॥ १३
शेषमन्तःपुरद्वारे भाविकृत्यञ्च चिन्तयन् ।
तदाशयानुगः शेषः सर्वलोकधुरन्धरः ॥ १४
तस्थावन्तःपुरद्वारे तस्य चानुमते तदा ।
ख्यापयामास चात्मानं बलिष्ठं सर्वतोऽधिकम् ॥ १५
एतस्मिन्नन्तरे वायुः दुग्धाब्धिशयनं ययौ ।
तदा वायुं समारौत्सीत् फणीन्द्रो बलदैवतम् ॥ १६
'न च ते समयश्चात्र प्राप्तुमन्तपुरं हरेः ।
नात्मज्ञो हि भवान् वायो! कदा तेऽभूद्गतिः पुरा ।
इतःपरमतीत्य त्रिकक्ष्या अन्तःपुरे गृहे' ॥ १७
इति तद्वचनं श्रुत्वा वायुस्तं प्रत्यवोचत ।

वायुः—

'नात्मज्ञोऽसि त्वमेवात्र त्वयोक्तमविचारतः' ॥ १८

शेषः—

'बहिरन्तश्च यो नित्यं अहं नाथसमीपगः ।
त्वं भृत्यो मीढुषोर्विष्णोः नान्तरङ्गो न मत्समः ॥ १९
तिष्ठ तावद्धरेर्द्वारि' इत्यहीशो वायुमब्रवीत् ।
तच्छ्रुत्वा प्रहसन् वायुः वायुभक्षमथाब्रवीत् ॥ २०

वायुः—

'दासीदासजना ये तु ये चान्ये परिचारकाः ।
तान् वदन्ति तु मित्राणि न तेऽर्हन्त्यासनं विभोः ॥ २१
बिडालोऽन्तःस्थितो वापि बहिष्ठेभसमो न हि ।
मां त्वं जानासि नाध्यक्षं प्राणिनां प्राणमीश्वरम् ॥ २२

बले ज्ञाने विरागे च विष्णुभक्तौ न मत्समः ।
साक्षाद्विष्णुप्रसादस्य पात्रभूतोऽस्मि सर्वदा ॥ २३
मर्यादयाऽवस्थातव्यं वक्तुं नार्हसि चाधिकम्' ।
इत्युक्तस्तेन संक्रुद्धः प्रत्युवाच बिलेशयः ॥ २४

## वायुशेषाभ्यां कृता परस्परबलपरीक्षा

शेषः—

'किं जल्पितेन बहुना परीक्षाऽत्र विधीयताम् ।
आवाभ्यां बलशालिभ्यां दृश्यतेऽद्य बलाबलम्' ॥ २५
इत्युक्तस्तेन फणिना मातरिश्वाऽब्रवीत्ततः ।
वायुः— 'आवयोः स्यात् कथं चाऽत्र परीक्षा पौरुषे गतौ ॥ २६
तद्वदस्व महाबाहो! येन ते निश्चयो भवेत्' ।
एवं वृत्ते विवादे तु तत्रागाद्धरिरीश्वरः ॥ २७
"किमेत"दिति तौ पृष्ट्वा शेषेणोक्तोऽतिविस्तरात् ।
प्राहोद्वृत्तं तदा शेषं भावि कार्यं स चिन्तयन् ॥ २८

श्रीभगवान्—

'लोकान्तरात्मा बलदेवता यः
प्राणो ममापि ह्यधिको मतोऽयम् ।
त्वं लोकभर्तेति महान् मदस्ते
तवापि वै कूर्मवरो हि वोढा' ॥ २९
तच्छ्रुत्वा प्राह देवेशं शेषस्तस्याशयानुगः ।

शेषः—

'भगवन्! मम वायोश्च पश्याद्य बलपौरुषे ।
योऽसौ मत्पालितः शैलो भारेण महता युतः ॥ ३०

मेरुपुत्रो महापुण्यो जाम्बूनदनदीतटे ।
योजनत्रयविस्तीर्णः त्रिंशद्योजनमायतः ॥ ३१
अहं मेरुमवष्टभ्य बद्ध्वा तं कायरज्जुना ।
स्थास्यामि तं महाशैलं वायुरुद्धरते यदि ॥ ३२
तदा मत्तोऽधिको वायुः प्रभो! सत्यं न संशयः' ।
एवमुक्तो हृषीकेशः शेषेणात्यन्तगर्विणा ॥ ३३
वायुमुद्वीक्षयामास वायुर्ज्ञात्वेङ्गितं हरेः ।
'तथा कुर्वि'ति तं शेषं हरिणा प्रेरितोऽब्रवीत् ॥ ३४
ततः शेषो ययौ भूमिं तत्रापश्यद्गिरिं शुभम् ।
तप्तहाटकसङ्काशं रत्नसानुं मनोहरम् ॥ ३५
मेरोर्दक्षिणदेशे तु जाम्बूनदनदीतटे ।
मेरुपुत्रं महापुण्यं वेङ्कटाचलसंज्ञकम् ॥ ३६
मेरुवेङ्कटशैलेन्द्रौ अवष्टभ्य महारुषा ।
स्वकायरज्जुना बद्ध्वा शेषस्तस्थौ ज्वलन् रुषा ॥ ३७
सन्नद्धः सह सर्वाङ्गैः पश्चाद्वायुमुवाच ह ।
'यद्यस्ति ते बलं घोरं गिरिमुद्धर साम्प्रतम्' ॥ ३८
इत्युक्तो वायुरायातः स्पृशन् पादेन वेङ्कटम् ।
चिक्षेपाङ्गुष्ठतः शैलं दर्पेणानादरात्तदा ॥ ३९
अविचाल्यं यदा मेने शेषसंवेष्टितं गिरिम् ।
ततः प्रयेते बाहुभ्यां तं तोलयितुमादरात् ॥ ४०
न शशाक यदा वायुः बाहुभ्यामपि पीडयन् ।
तं चालयितुमीषद्वा भग्नदर्पस्तदाऽभवत् ॥ ४१
अकीर्तिशङ्का च ततो वायुर्ब्रह्माण्डपूरणः ।
आत्मीयामखिलां शक्तिं कम्पने शोषणे तथा ॥ ४२

व्यञ्जयन् कम्पयामास सर्वान् स्थावरजङ्गमान् ।
अथ ब्रह्मादिभिर्देवैः अनुनीतेऽपि मारुते ॥ ४३
अकृतोपरमे शेषः साम्ना विज्ञापितस्तु तैः ।
लघुर्भूत्वा क्वचित् किञ्चित् फणां संश्लथयन् स्थितः ॥ ४४
ततस्तद्विवरं वायुः महावेगो विवेश ह ।
ततः क्षणेनोच्चलितः तूलराशिरिवाम्बरे ॥ ४५
प्रचलन् वर्त्म चोल्लङ्घ्य दूरं लक्षार्धयोजनम् ।
उत्तरे दक्षिणाम्भोधेः द्वात्रिंशद्योजनान्तरे ॥ ४६
पूर्वाम्भोधेः पश्चिमे तु पुण्ये स्वर्णमुखीतटे ।
पपात वेगतो वायोः शैलः शेषसमन्वितः ॥ ४७
सहस्रधा शीर्यमाणो बलेन बलशालिनः ।
ततस्तुष्टाव मरुतं मेरुः सुतहितेच्छया ॥ ४८
'त्राहि त्राहि जगत्प्राण! पुत्रभिक्षां प्रयच्छ मे ।
अपराधो हि शेषस्य न च मे पुत्रहेतुकः ' ॥ ४९
इति तेन स्तुतो वायुः 'पालयामी ' ति चाब्रवीत् ।
तं गिरिं स्वयमाविश्य तेन सार्धं पपात ह ॥ ५०
वायोरावेशनाच्चैनं प्राहुरञ्जनसंज्ञकम् ।
शेषो विशीर्णदेहस्तु तेन सार्धं पपात ह ॥ ५१

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये दिलीपदुर्वाससंवादे
वायुशेषयोः परस्परं बलपरीक्षादिवर्णनं नाम
प्रथमोऽध्यायः ।

---

अथ द्वितीयोऽध्यायः

—:*:—

## वेङ्कटाद्रौ शेषकृततपःप्रकारः

दिलीपः— 'किमर्थं देवदेवेशो हित्वा वैकुण्ठमुत्तमम् ।
सान्निध्यमकरोत्तत्र वेङ्कटाख्ये नगोत्तमे ? ॥ १
किं तत्र कारणं ब्रूहि श्रोतुं कौतूहलं हि मे ' ।
दुर्वासाः— शेषो गतमदः पश्चात् तस्मिन्नेव नगोत्तमे ॥ २
वायव्ये स्वामिसरसो नागतीर्थे मनोरमे ।
नानासानुसमाकीर्णे नानापादपमण्डिते ॥ ३
उत्तरे शिखरे पुण्ये सान्निध्यार्थं जगत्पतेः ।
तपस्तेपे महाघोरं दिव्यं वर्षसहस्रकम् ॥ ४

## शेषतपस्तुष्टभगवदाविर्भावः

तपसा तोषितो देवः प्रत्यक्षः समजायत ।
'वरं वरय भद्रे'ति तेनोक्तः शेष आह तम् ॥ ५
शेषः—
'यदि प्रसन्नो भगवान् इदं मे देहि भो वरम् ।
यथा शेषे मदङ्गे त्वं वैकुण्ठे भुवनोत्तमे ॥ ६
शैलाकारे च मद्देहे नित्यमत्र वस प्रभो ! ' ।
इति शेषेण सम्प्रोक्तः भगवान् प्रत्युवाच ह ॥ ७

## शेषप्रार्थनया भगवत्कृतवेङ्कटाद्रिवासाभ्युपगमः

"पुरा विचारितं स्थानं भूमौ क्रीडास्पदं शुभम् ।
एतस्मिन्नन्तरे प्रायात नारदो मुनिसत्तमः ॥ ८

दृष्टे मुनौ मया चोक्तं 'ऋषे! कस्मादिहागतः' ।
सोऽपि मां प्राह विप्रेन्द्रो 'दृष्ट्वा भूगोलमागतः' ॥ ९

इत्युक्तस्तेन चावोचं मम रन्तुं भुवः स्थले ।
योग्यं किं स्थानम्?' इत्युक्तः स चोवाच मुनीश्वरः ॥ १०

नारदः— 'अस्ति कश्चिद्गिरिवरो वेङ्कटाख्यो मनोहरः ।
त्रिंशद्योजनमायामी योजनत्रयविस्तृतः ॥ ११

अष्टोत्तरसहस्रेण तीर्थानां परिशोभितः ।
जाम्बूनदनदीतीरे मेरुशैलस्य दक्षिणे ॥ १२

किञ्चिदूनश्च वैकुण्ठात् विहारोऽयं मनोहरः ।
विहरस्व रमानाथ! वासयोग्यस्तवैव सः' ॥ १३

तदा तद्वचनं श्रुत्वा गन्तुमिच्छा बभूव मे ।
एतस्मिन्नन्तरे वायोः तव संवादहेतुना ॥ १४

गिरिरत्रागतः पुण्यः त्वयाऽपि तपसाऽर्थितः ।
इष्टं मे प्रार्थितं पूर्वं तथाऽस्तु" इति वरं ददौ ॥ १५

तेन विष्णुः समायातो हित्वा वैकुण्ठमुत्तमम् ।
स्वामिपुष्करिणीतीरे रमया सह मोदते ॥ १६

## भगवतः स्वामितीर्थतीरैकवासनिमित्तम्

दिलीपः—

'तस्मिन्नगोत्तमे पुण्ये नानापादपमण्डिते ।
आदावन्ते च मध्ये च सन्ति तीर्थान्यनेकशः ॥ १७

देशा मनोहराः पुण्याः सानूनि विविधानि च ।
हित्वा तत्सकलं स्थानं स्वामिपुष्करिणीतटम् ।
आश्रितो रमया तत्र मम तत्कारणं वद' ॥ १८

दुर्वासाः —

'पुरा सरस्वती देवी तीर्थोत्कृष्टत्वकाङ्क्षया ।
सरस्वती नदी नाम ब्रह्मावर्ते बभूव ह ॥ १९
तस्यास्तीरे तपस्तप्तुं पुलस्त्यो भगवान् ययौ ।
पुत्रभावेन तं देवी नार्चयन्ती स्थिता मुनिम् ॥ २०
ततस्तां कुपितः प्राह 'या ते काङ्क्षा सरस्वति! ।
तव सा विफला भूयात् नदीरूपेण सर्वदा ॥ २१
गुणसामान्यभावेऽपि विष्णुपादप्रभावतः ।
तवाधिकेन यशसा भविष्यति सरिद्वरा ॥ २२
तीर्थोत्कृष्टा सैव भूयात् भुवि गङ्गाख्यया शुभा' ।
इति शप्ता पुनर्देवी तं शशाप महामुनिम् ॥ २३
'राक्षसस्ते भवेद्वंशो विष्णोरप्रियकारकः' ।
पुनः प्रसादिता तेन विशापमपि सा ददौ ॥ २४
'अन्तिमो वैष्णवो भूयात् कल्पस्थायी विभीषणः' ।
पुनश्च तपसा देवी तीर्थोत्कृष्टत्वकाङ्क्षया ।
तोषयामास देवेशं तस्य सान्निध्यमावहत् ॥ २५
'वाञ्छा मे विफला ब्रह्मन्! ब्रह्मदण्डेन भूयसा ।
भूमावेव यथा तीर्थस्वामित्वं मे भवेद्ध्रुवम् ॥ २६
वरयामि वरं देव! देहि मे पुरुषोत्तम!' ।
तयैवं प्रार्थितो देवो देवीं तां प्रत्युवाच ह ॥ २७
'ब्रह्मदण्डो नदीरूपे पुष्करिण्यां न वै कृतः ।
अतः शेषगिरिं गच्छ वासार्थं यामि तं गिरिम् ॥ २८
गिरेर्दक्षिणभागे तु मूर्धदेशे सुखं वस ।
स्वामिपुष्करिणीनाम्ना वसेयं तव दक्षिणे ॥ २९

तिस्रः कोट्योऽर्द्धकोटी च तीर्थानि भुवनत्रये ।
स्वस्वपापविमोक्षार्थं याचयिष्यन्ति मां शुभे ! ॥ ३०
तेषां पापविमोक्षार्थं त्वयि स्नानं ददाम्यहम् ।
"'धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ॥ ३१
स्नानार्थमागतं तीर्थजालं प्रेप्यत्वमाप्नुयात्" ।
तीर्थाधिराज्ये तत्तीर्थजालं त्वामभिषेक्ष्यति' ॥ ३२
इति दत्त्वा वरं देवः तत्तीरे न्यवसत्प्रभुः ।
देवस्य पाचिका काचित् नाम्ना वकुलमालिका ॥ ३३
प्रसाद्य देवं पाकेन श्रिया सञ्चोदिता विभोः ।
तीर्थभूम्याधिपत्यञ्च लेभे परममुत्तमम् ॥ ३४
तत्रैव वासं देवस्य ययाचे सा पुनर्हरिम् ।
[1]वाणीदेवी तीर्थरूपा भूमिरूपा च पालिका ॥ ३५
भोगपत्न्या जलनिधेः कृष्णवेण्या च या समा ।
इति सर्वं समाख्यातं देवसान्निध्यकारणम्' ॥ ३६

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये भगवतः
स्वामितीर्थतीरैकवासनिमित्तवर्णनं नाम
द्वितीयोऽध्यायः ।

---

१. वाणीदेवीत्यादि । जलनिधेर्भोगपत्न्या कृष्णवेण्या यमुनया च या समा सा पाचिका वकुलमालिका भूमिरूपा तीर्थभूम्याधिपत्यवरलाभेन तीर्थभूम्यभिमानितया तीर्थभूमिशरीरिणी । अत्र वकुलमालिकायास्तीर्थभूमिरूपतया स्वामिपुष्करिणीरूपेण परिणतया सरस्वत्या संगतत्ववर्णनं यमुनानदीतुल्यत्ववर्णनञ्च सकलतीर्थाधिराज्यकामिन्याः स्वामिपुष्करिणीतीर्थरूपेण परिणतायाः सरस्वत्याः यमुनानदीसमशीलवकुलमालिकासमागमोऽस्तीति प्रतिपादनाय कृतमित्यवगम्यते ।

अथ तृतीयोऽध्यायः

—: ❀ :—

## वायोर्भगवद्दत्तप्रधानाङ्गत्वप्राप्तिः

दिलीपः—

'देवर्षिनरसङ्घेषु शैलस्यास्य प्रथा कथम्? ।
देवेन केन देवेषु मुनिष्वपि च केन वा ॥ १
नृणां केन नरेणात्र? ब्रूहि विस्तरतः क्रमात्' ।

दुर्वासाः— 'पुरा वायुर्महातेजा विष्णोरमिततेजसः ॥ २
[1]प्रधानाङ्गत्वमाकाङ्क्षन् तपस्तेपे नगोत्तमे ।
दिव्यवर्षसहस्रान्ते सहस्रभुजकन्धरः ॥ ३
आविरासीत्तदा तस्मै नीलाम्बुदसमप्रभः ।
वरं प्रादात् "प्रधानाङ्ग भवे" ति पुरुषोत्तमः ॥ ४
'अहमत्र निवत्स्यामि वस त्वञ्च मया सह ।
तारकासुरविध्वंसजातदोषापनुत्तये ॥ ५
कुमारधारिकातीर्थे स्कन्दोऽप्यत्र तपस्यति' ।
इति वायुं समादिश्य पश्चादन्तरधीयत ॥ ६
मृडाद्या वशगा यस्य सोऽपि ब्रह्मा चतुर्मुखः ।
श्रीवेङ्कटाचले श्रीशं वायोरमिततेजसः ॥ ७

---

१. प्रधानाङ्गत्वमित्यादि । प्रधानाङ्गत्वं सर्वप्राणिनां स्वेतरदेहेन्द्रियादिसकलोपकरणसत्तानिर्वाहकत्वलक्षणप्राधान्यविशिष्टप्राणाख्याङ्गत्वरूपम् अमिततेजसो विष्णोः सकाशादाकाङ्क्षन् तपस्तेपे इत्यन्वयः । छान्दोग्यवाजसनेयकयोः प्राणविद्यायां 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो ह वाव ज्येष्ठश्च श्रेष्ठश्च' इत्यादिनोक्तं स्वेतरदेहेन्द्रियादिसकलोपकरणसत्ताकार्यादिनिर्वाहकत्वलक्षणं ज्यैष्ठ्यश्रैष्ठ्यादिरूपं प्राणवायुगतं प्राधान्यमेवेह प्रधानाङ्गत्वमित्यनेन विवक्षितमित्यवगम्यते ।

तपःफलप्रदानार्थं समायातं विदंस्ततः ।
तत्तपोबलसामर्थ्यात् सदा सान्निध्यमत्र वै ॥ ८
भविष्यच्चापि विज्ञाय तत्र तेपे स्वयं तपः ।
तथाऽन्ये ब्रह्मणाऽऽज्ञप्ताः तपस्तेपुः सुदुष्करम् ॥ ९
सब्रह्मेशाः सुराः सर्वे सनकाद्याश्च योगिनः ।
अगस्त्याद्याश्च मुनयः शङ्खाद्याश्च नृपास्तथा ॥ १०
तथाऽन्येऽपि सहाद्राक्षुः आविर्भूतं वृषाचले ।
अप्राकृतविमानेन सार्धमेव श्रियःपतिम् ॥ ११
इत्थं वायुमुखा देवा ब्रह्मेशानमुखा अपि ।
भेजिरे चापरे सिद्धिं बहवः सिद्धिकाङ्क्षिणः ॥ १२
यतोऽत्र तस्माच्छैलोऽयं ख्यातो देवेषु वायुना ।

दिलीप —
'भगवन्नस्य शैलस्य केनाभून्मुनिषु प्रथा ?' ॥ १३

दुर्वासाः — 'देवं द्रष्टुं तपस्तेपे ह्यगस्त्यो मलयाचले ।
तदा गत्वाऽवदद्ब्रह्मा 'मुने! वेङ्कटमाव्रज ।
तत्र ते भविता सिद्धिः' इत्युक्त्वाऽन्तर्दधे विभुः ॥ १४

## श्रीवेङ्कटाद्रौ अगस्त्यतपस्तुष्टभगवद्वाण्याविर्भावः

सोऽपि शैलं समासाद्य तपस्तेपे सुदुश्चरम् ।
ततो वर्षसहस्रान्ते तमेवाहाऽशरीरिवाक् ॥ १५
'अष्टोत्तरसहस्राणि सन्ति तीर्थानि चात्र वै ।
स्नात्वा तीर्थेषु सर्वेषु लोके ख्यापय तानि च ॥ १६
नान्यत्तपो द्विजातीनां ऋते शास्त्रोपदेशतः ।
किं कायक्लेशधर्मेण का सिद्धिर्भविता द्विज! ॥ १७

उक्तं माध्यन्दिने मन्त्रे माहात्म्यं भूधरस्य च ।
वदंस्त्वमन्तेवासिभ्यो गिरेः कुरु प्रदक्षिणम् ॥ १८

एवं ते भविता तत्र कृते षष्ठे प्रदक्षिणे ।
ब्रह्मणो दर्शनं मध्ये रौद्रे देवादिदर्शनम् ॥ १९

देवेन्द्रदर्शनं पूर्वे ह्याग्नेये च हविर्भुजः ।
दक्षिणे चर्षिसङ्घानां सरुद्राणां भवेद् ध्रुवम् ॥ २०

यक्षरक्षःपिशाचानां नैर्ऋत्ये दर्शनं भवेत् ।
विष्वक्सेनऋषेः पश्चाद्वायव्ये गिरिदर्शनम् ॥ २१

उत्तरे भगवद्योगिगणदर्शनमेव च ।
माहात्म्यज्ञानपूर्वन्तु स्वामिपुष्करिणीतटे ।
ध्यानयोगं समासाद्य ततो ज्ञास्यसि तं विभुम् ' ॥ २२

एतावदुक्त्वा विरराम वाणी
माहात्म्ययोगं स ततो विवृण्वन् ।
प्रदक्षिणं तस्य गिरेश्च कृत्वा
ध्यानाद्विभुं वीक्ष्य परां गतिं ययौ ॥ २३

ततोऽगस्त्येन मुनिना शैलोऽयं प्रथितोऽभवत् ।

## श्रीवेङ्कटाचले शङ्खाख्यनृपतपस्तुष्ट श्रीश्रीनिवासाविर्भाववर्णनम्

दिलीपः:—
मानुषेष्वस्य शैलस्य केन जाता प्रथा भुवि ? ॥ २४

दुर्वासा — पुरा शङ्खो महाप्राज्ञः सूर्यवंशोद्भवो विभुः ।
साक्षात्कृत्य महाविष्णुं ययाचे वरमुत्तमम् ॥ २५

'यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
तावत्तिष्ठतु मे सेवा कृता विष्णोर्मया विभोः ' ॥ २६

इति सञ्चिन्त्य मनसा राज्ये पुत्रं निधाय वै ।
गत्वा वसिष्ठं पप्रच्छ 'यत्र विष्णुः प्रसीदति ॥ २७
तत्क्षेत्रं ब्रूहि विप्रेन्द्र! यत्र द्रक्ष्याम्यहं विभुम्' ।
इति पृष्टो मुनिः प्राह 'यत्रागस्त्यो दिदृक्षया ॥ २८
तपश्चरति धर्मात्मा तमुद्दिश्य महामुनिः ।
भगवान् यत्र सर्वात्मा सान्निध्यञ्च करिष्यति ॥ २९
त्वञ्च तं गच्छ शेषाद्रिं पुण्यं स्वर्णमुखीतटे ।
तत्र ब्रह्मशिला काचित् सरिन्मध्ये च वर्तते ॥ ३०
अगस्त्यतपसा पश्चात् गयासान्निध्यमत्र वै ।
पादा ईशानविष्ण्वादिदेवानां तत्र सन्ति हि ॥ ३१
सुवर्णमुखरी तत्र कुल्यया सङ्गता विभो! ।
तयोस्तु सङ्गमे राजन्! ये केचन नरा भुवि ॥ ३२
सङ्कल्प्य विधिवत् स्नात्वा देवर्षीनभितर्प्य च ।
मध्ये ब्रह्मशिलायास्तु पितॄनुद्दिश्य भक्तितः ॥ ३३
श्राद्धतर्पणपिण्डादीन् श्रद्धया सह वै विभो! ।
समाचरन्ति राजेन्द्र! तेषां सप्तकुलावधि ॥ ३४
गयायां पिण्डदानेन यथा तृप्ता भवन्ति वै ।
तथा तृप्यन्ति पितरः सत्यमेव न संशयः ॥ ३५
तस्मिन् दिनेऽन्नं दद्याच्च ताम्बूलं चन्दनादिकम् ।
गोभूतिलहिरण्यादिवस्त्रधान्यानि सर्वशः ॥ ३६
तत्र दत्तो यथाशक्ति रेणुर्मेरोः समो भवेत् ।
त्वञ्चापि तत्र राजेन्द्र! महानद्योः समागमे ॥ ३७
स्नानदानक्रियादीनि श्राद्धपिण्डांस्तिलोदकम् ।
कृत्वा सर्वाणि कर्माणि ध्यानयोगं समास्थितः ॥ ३८

वासुदेवे मनः कृत्वा तपः कुरु वृषाचले ।
तदा कालान्तरेऽगस्त्यः सशिष्यः सङ्गमिष्यति ॥ ३९
मुनिनोक्तञ्च माहात्म्यं शृण्वन् कुर्वन् प्रदक्षिणम् ।
साकं तेन समाश्रितस्थः साक्षात्पश्यसि तं विभुम् ।
त्वयाऽपि संस्तुतो देवः तवाभीष्टं प्रयच्छति ' ॥ ४०

गुरुणा चोदितस्त्वेवं स गत्वा तं वृषाचलम् ।
तत्क्रमेण तपस्तप्त्वा मुनिना तेन सङ्गतः ॥ ४१
आविर्भूतं हरिं दृष्ट्वा ययाचे वरमुत्तमम् ।
'यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ ४२
तावन्मया कृता सेवा शैलेन्द्रे तव सम्भवेत्' ।
इत्युक्तो भगवान् प्राह 'शृणु भूप! वचो मम ॥ ४३

## श्रीनिवासाज्ञया शङ्खनृपकृतभगवद्दिव्यविमानम्

अर्चाविग्रहरूपोऽहं सच्चिदानन्दविग्रहः ।
स्वयंव्यक्तप्रदेशेषु दृश्यो ब्रह्मादियोगिनाम् ॥ ४४
तामेव प्रतिमां केचित् जानन्ति नृपपुङ्गव! ।
तथात्वेनापि वा योग्यं दर्शनं मे कलौ युगे ॥ ४५
युगेष्वपि च सर्वेषु दर्शनं यत्तु पापिनाम् ।
तद्रूपस्य पिधानाय सादृश्यध्यानहेतवे ॥ ४६
विमानञ्च शिलादारुलोष्टेष्टकचितं कुरु ।
प्रतिमाञ्च शिलारूपां तां पश्यन्ति कुयोगिनः ॥ ४७
रूपद्वयं प्रपश्यन्ति ज्ञानिनो ब्रह्मवित्तमाः ।
भानुमान् भानुसङ्घैस्तु रसग्राही यथा भुवः ॥ ४८

साक्षात्पूजाश्रयो नित्यं अहं बिम्बान्तरेण च ।
यथा दृष्टं विमानं ते मद्रूपं पुरुषर्षभ! ॥ ४९
तथा कुरु महाभाग! तेन ते भविता गतिः' ।
इत्युक्त्वाऽन्तर्दधे देवः सर्वेषामेव पश्यताम् ॥ ५०
तेनोक्तमार्गेण विधाय पुण्यं
विमानवर्यं प्रतिमाञ्च पुण्याम् ।
प्रख्याप्य शङ्खो नरलोकसङ्घे
जगाम विष्णोः पदमव्ययं शुभम् ॥ ५१

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये शङ्खनृपादितपस्तुष्ट-
भगवदाविर्भावादिवर्णनं नाम
तृतीयोऽध्यायः ।

---

अथ चतुर्थोऽध्यायः

## श्रीवेङ्कटाचलस्थमुक्तिप्रदस्वामिपुष्करिण्यादिसप्ततीर्थवर्णनम्

दिलीपः —

'अस्मिन्नगोत्तमे पुण्ये कति तीर्थानि सन्ति हि? ।
तेषां सङ्ख्याञ्च मे ब्रूहि कति मुख्यानि तत्र वै? ॥ १
तत्राप्यत्यन्तमुख्यानि वद मे मुनिसत्तम! ।
सद्धर्मरतिदान्यत्र कति सङ्ख्यान्वितानि च ॥ २
कति च ज्ञानदान्यत्र भक्तिवैराग्यदानि च ।
मुक्तिप्रदानि कान्यत्र तानि मे वद सुव्रत!? ॥ ३

षट्षष्टिकोटितीर्थानि पुण्यान्यत्र नगोत्तमे ।
अष्टोत्तरसहस्रन्तु तेषु मुख्यानि सुव्रत! ॥ ४
तीर्थानि सम्मतानीह सद्धर्मरतिदानि वै ।
अष्टोत्तरसहस्राच्च मुख्यतीर्थानि वै ततः ॥ ५
सद्विज्ञानप्रदान्यत्र तीर्थान्यष्टोत्तरं शतम् ।
तस्माच्चाष्टोत्तरशतं मुख्यतीर्थानि भूपते! ॥ ६
भक्तिवैराग्यदान्यत्र षष्टिमष्टोत्तरां विदुः ।
मुक्तिदान्यत्र सप्तैव मुक्तिदान्यत्र ते ब्रुवे ॥ ७
(१) स्वामिपुष्करिणी चैव (२) वियद्गङ्गा ततः परम् ।
पश्चात् (३) पापविनाशञ्च (४) पाण्डुतीर्थं ततः परम् ॥ ८
(५) कुमारधारिकातीर्थं (६) तुम्बोरुतीर्थं ततः परम् ।
(७) कृष्णतीर्थमिति ख्यातं सर्वपापहरं शुभम् ॥ ९
तत्र स्नान्ति च ये मर्त्याः ते यान्ति परमं पदम् ।
वर्षे वर्षे च तीर्थानां सप्तानां पर्वतोत्तमे ॥ १०
तिथिनक्षत्रयोगेन सर्वतीर्थसमागमः ।
तच्च कालं प्रवक्ष्यामि समाहितमना भव ॥ ११
मकरस्थे रवौ राजन्! पौर्णमास्यां महातिथौ ।
पुष्यनक्षत्रयुक्तायां स्नानकालो विधीयते ॥ १२
तद्दिने स्नाति यो मर्त्यः कृष्णतीर्थे महामतिः ।
सर्वपापविनिर्मुक्तः सर्वकामाँल्लभेत सः ॥ १३
कुम्भमासे पौर्णमास्यां मघायोगो यदा भवेत् ।
कुमारधारिकां यान्ति सर्वतीर्थानि वै तदा ॥ १४
तत्र यः स्नाति राजेन्द्र! राजसूयफलं लभेत् ।
पुत्रो विजयते तस्य तस्मिन्नेव हि जन्मनि ॥ १५

मुक्तिश्च भविता तत्र नात्र कार्या विचारणा ।
कुमारधारिकायाञ्च सार्धं दक्षिणया विभो! ॥ १६

अन्नदानञ्च कर्तव्यं पितॄनुद्दिश्य यत्नतः ।
युक्ते चोत्तरफल्गुन्या शुक्लपक्षीयपर्वणि ॥ १७

तुम्बोस्तीर्थं मीनसंस्थे रवौ तीर्थानि सर्वशः ।
अपराह्णे समायान्ति तत्र स्नात्वा न जायते ॥ १८

विवाहमौञ्जीबन्धौ च कारयेद् द्रव्यदानतः ।
मेषसङ्क्रमणे भानौ संयुतायान्तु चित्रया ॥ १९

पौर्णमास्यां समायान्ति वियद्गङ्गां तथैव च ।
तत्र स्नात्वा नरः सद्यः शतक्रतुफलं लभेत् ॥ २०

सुवर्णदानं कर्तव्यं कन्यादानं विशेषतः ।
वृषभस्थे रवौ राजन्! द्वादश्यां रविवासरे ॥ २१

शुक्ले वाऽप्यथवा कृष्णे भौमस्यापि च वासरे ।
पाण्डुतीर्थं समायान्ति गङ्गादीनि जगत्त्रये ॥ २२

तत्र स्नात्वा च गां दत्त्वा मुच्यते प्रतिबन्धकात् ।
कालस्तु सङ्गवस्तत्र ऋषिभिः परिकीर्तितः ॥ २३

आश्विने शुक्लपक्षे तु भानुवारेण सप्तमी ।
योत्तराषाढया युक्ता तस्यां पापविनाशने ॥ २४

प्राप्तायामुत्तराभाद्रां द्वादश्यां वा समागतः ।
तदा पापविनाशाख्ये स्नातुर्मुक्तिर्भविष्यति ॥ २५

शालग्रामशिलां दत्त्वा स्नात्वा च विधिपूर्वकम् ।
मुच्यते सर्वपापैश्च जन्मकोटिशतोद्भवैः ॥ २६

धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।
आयान्ति सर्वतीर्थानि स्वामिपुष्करिणीजले ॥ २७

तत्र स्नात्वा नरः सद्यो मुक्तिमेति न संशयः ।
येन जन्मसहस्रेषु पुण्यमेवाऽर्जितं पुरा ॥ २८

तस्य स्नानं तत्र भवेत् नान्यस्यासुकृतात्मनः ।
तत्र स्नानं सकृद्यस्य जन्मकोटिशतेषु सः ॥ २९

गङ्गादिसर्वतीर्थेषु स्नातो भवति मानवः ।
विभवानुगुणं दानं कार्यं तत्र यथाविधि ॥ ३०

सालग्रामशिलाश्चात्र गाश्च दद्याद्विशेषतः ।
भूमिं दद्यात्प्रयत्नेन ब्रह्मलोकजिगीषया ॥ ३१

पितृनुद्दिश्य दातव्यं श्राद्धाद्यं तत्क्षणेन वै ।
अरुणोदयमारभ्य तत्र षड्घटिकावधि ।
सङ्गमः सर्वतीर्थानां तत्र पुण्यमनन्तकम् ॥ ३२

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये मुक्तिप्रदस्वामिपुष्करिण्यादि-
सप्ततीर्थमहिमानुवर्णनं नाम
चतुर्थोऽध्यायः ।

---

अथ पञ्चमोऽध्यायः

## श्रीवेङ्कटाचलस्थाष्टषष्टितीर्थमहिमानुवर्णनम्

दिलीपः—

भक्तिवैराग्यदानाञ्च तीर्थानां नाम वैभवम् ।
श्रोतुमिच्छामि चात्रेय! प्राप्तानाञ्चाष्टषष्टिताम् ॥ १

दुर्वासाः—

भक्तिवैराग्यदं पुण्यं सद्यः पापविनाशनम् ।
तीर्थानामष्टषष्टेऽस्तु तव वक्ष्यामि वैभवम् ॥ २

तीर्थानाञ्चात्र पुण्यानां नामसङ्कीर्तनान्नृणाम् ।
सद्य एव महापापकोटीनाञ्च क्षयो भवेत् ॥ ३
किमु स्नानादिसत्कर्मनिरतानां महात्मनाम् ।
तानि क्रमेण वक्ष्यामि समाहितमना भव ॥ ४
देवस्य पूर्वदिग्भागे तत्रैवाग्नेयकोणके ।
चक्रतीर्थमिति ख्यातं चक्रेणाधिष्ठितं पुरा ॥ ५
तस्योपरि तदाऽऽख्यातं वज्रतीर्थं मनोहरम् ।
वैष्वक्सेनं तथा तीर्थं शक्रपापहरं परम् ॥ ६
ततः पाञ्चायुधं तीर्थं तन्मध्ये च हलायुधम् ।
तत ऐशान्यभागे तु नारसिंहं मनोहरम् ॥ ७
ततः काश्यपतीर्थञ्च मान्मथन्तु ततः परम् ।
ब्रह्मतीर्थञ्चाग्नितीर्थं गौतमन्तु ततः परम् ॥ ८
दैवतीर्थं दैवलञ्च वैश्वामित्रमतः परम् ।
भार्गवन्तु तथा तीर्थं आष्टावक्रमतः परम् ॥ ९
दुरारोहणतीर्थं तत् आग्नेय्यामस्ति वै दिशि ।
ऐशान्यां भैरवं तीर्थं पिशाचानां विमोचनम् ॥ १०
मेहतीर्थमिति ख्यातं उदरव्याधिनाशनम् ।
क्षेत्रपालशिलातीर्थे पश्चिमे पाण्डवं तथा ॥ ११
वायुतीर्थं तथा पुण्यं सेवितुं भूरि वायुना ।
अस्थितीर्थं महापुण्यं मृतास्थिक्षेपणादिह ॥ १२
पूर्वदेहसमायुक्ताः पुनर्जीवन्ति जन्तवः ।
मार्कण्डेयं तथा तीर्थं स्नानादायुष्यवर्द्धनम् ॥ १३
तथा जाबालितीर्थञ्च वालखिल्यमतः परम् ।
ततो ज्वरहरं तीर्थं सर्वज्वरनिवारणम् ॥ १४

ततो विषहरं तीर्थं आस्तिकेन विनिर्मितम् ।
तक्षकेणापि सन्दष्टः स्नानेनैवेह निर्विषः ॥ १५
लक्ष्मीतीर्थं ततः पश्चात्
पूर्वस्यां दिशि संस्थितम् ।
वायव्यां दिशि तीर्थानि
चोत्तरस्यां तथैव च ॥ १६
ऋषितीर्थं महापुण्यं शतानन्दं सुतीक्ष्णकम् ।
वैभाण्डकं महापुण्यं बिल्वतीर्थमतः परम् ॥ १७
अधस्ताद्विष्णुतीर्थञ्च पुण्यं मारुतिनिर्मितम् ।
सर्वतीर्थमिति ख्यातं शारभन्तु तत परम् ॥ १८
ततो वायव्यदेशे तु ब्रह्मतीर्थं मनोहरम् ।
अश्वमेधेन यत्रेजे भगवन्तं सनातनम् ॥ १९
अधस्तादिन्द्रतीर्थन्तु भारद्वाजमतः परम् ।
ततस्त्वम्बरगङ्गाख्यं ततः प्राचेतसं तथा ॥ २०
ततः पापविनाशञ्च तीर्थं सारस्वतं तथा ।
यत्र पापानि सर्वाणि क्षालितानि च सर्वशः ॥ २१
तोये च श्वेततां यान्ति जनानां पापकारिणाम् ।
कुमारधारिका नाम वायव्यां दिशि वर्तते ॥ २२
अधस्ताद्गजतीर्थन्तु ऋष्यशृङ्गमतः परम् ।
ततस्तुम्बुरुतीर्थञ्च नारदाद्यैश्च सेवितम् ॥ २३
तन्मध्येऽष्टादशं तीर्थं सर्वपापविनाशनम् ।
दशावतारतीर्थञ्च हालायुधमतः परम् ॥ २४
ततः सप्तर्षितीर्थञ्च गजकोणमतः परम् ।
वैष्वक्सेनं तथा तीर्थं पश्चिमे तु विराजितम् ॥ २५

पश्चाद्युद्धसरस्तीर्थं विष्वक्सेनजयावहम् ।
इति मुख्यानि तीर्थानि महापतकसङ्क्षये ॥ २६

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये भक्तिवैराग्यप्रद-
अष्टषष्टितीर्थनामवैभववर्णनं नाम
पञ्चमोऽध्यायः ।

---

अथ षष्ठोऽध्यायः



## मन्वाद्यष्टोत्तरशततीर्थनामानि

दुर्वासाः—

मन्विन्द्रवसुसंज्ञानि रुद्रादित्याह्वयानि च ।
नवप्रजेशसंज्ञानि ह्याश्विनं शुक्रसंज्ञितम् ॥ १
वारुणं जाह्नवीतीर्थं कापेयं काण्वमेव च ।
आग्नेयं नारदं तीर्थं सोमतीर्थञ्च भार्गवम् ॥ २
धर्मतीर्थं यज्ञतीर्थं पशुतीर्थं गणेश्वरम् ।
भौमाश्वं पारिभद्रञ्च जगज्जाड्यहरं परम् ॥ ३
विश्वकल्लोलतीर्थञ्च तीर्थं यमविनिर्मितम् ।
बार्हस्पत्यं रोमहर्षं अजामोदं जनेश्वरम् ॥ ४
इष्टसिद्धिः कर्मसिद्धिः वाटमौदुम्बरं तथा ।
कार्तिकेयं कुब्जतीर्थं दशप्राचेतसं तथा ॥ ५
गारुडं शेषतीर्थञ्च वासुकिर्विष्णुवर्धनम् ।
कर्मकाण्डं पुण्यवृद्धिः ऋणमोचनमेव च ॥ ६
पार्जन्यं मेघतीर्थञ्च यत्र नित्यप्रवर्षणम् ।
साङ्कर्षणं वासुदेवं नारायणमतः परम् ॥ ७

देवतीर्थं यक्षतीर्थं कालतीर्थञ्च गोमुखम् ।
प्राद्युम्नमानिरुद्धञ्च पितृतीर्थमतः परम् ॥ ८
आर्षेयं वैश्वदेवञ्च स्वधास्वाहाविनिर्मिते ।
अस्थितीर्थञ्चाञ्जनेयं शुद्धोदकमतः परम् ॥ ९
अष्टभैरवतीर्थञ्च शतमष्टोत्तरन्त्विदम् ।
तीर्थजातमिदं नृणां ज्ञानप्रदमनुत्तमम् ॥ १०
तीर्थान्यष्टोत्तरशतं सन्ति नैर्ऋतकोणके ।
दक्षपुत्रसहस्रेण यत्र तप्तं महत्तपः ॥ ११
नारदस्योपदेशेन यच्च तैरेव निर्मितम् ।
अस्ति तीर्थसहस्रं तत् सद्यः सिद्धिप्रदायकम् ॥ १२
काश्यपाश्रममारभ्य ह्यर्द्धयोजनमध्यतः ।
कुमारधारिकातीर्थात् पश्चिमे संस्थितञ्च तत् ।
साष्टभैरवतीर्थं तत् कर्मसिद्धिप्रदं नृणाम् ॥ १३

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये मन्वाद्यष्टोत्तरशत-
तीर्थनामानुवर्णनं नाम
षष्ठोऽध्यायः ।

---

अथ सप्तमोऽध्यायः

## तोण्डमान्नामकनृपोत्पत्तिक्रमः

दिलीपः— 'केन नाम्ना प्रसिद्धोऽसौ भगवान् हरिरीश्वरः ? ।
किंलक्षणश्च तत्रास्ते ? तन्मे ब्रूहि तपोधन ॥ १
दुर्वासाः— 'श्रीनिवासाऽऽख्यया देवः शङ्खचक्रधरो विभुः ! ।
शान्तभाव सम.पन्नो मृगयोद्दामलोचनः ॥ २

कटिं स्पृशन् वामकरात् वरमुद्राञ्च दक्षिणात् ।
तिरोहितरमाभूम्यां दृश्यते मृगयुर्यथा ॥ ३
नीलजीमूतासङ्काशः पीतकौशेयशोभितः ।
पीनवृत्तचतुर्बाहुः सुनासश्चारुलोचनः ॥ ४
दोषगन्धविदूरश्च गुणसान्द्रः सुखोचितः ।
कोटिकन्दर्पलावण्यः स्फुरन्मकरकुण्डलः ॥ ५
बृहद्वक्षःस्थलावासो महालक्ष्म्या च शोभितः ।
तत्तदिष्टतमं कामं ददद्भक्तानुकम्पया ॥ ६
दर्शयन् भक्तवात्सल्यं यो ददौ हस्तगे शुभे ।
शङ्खचक्रे नृपेन्द्राय "चक्रवर्ती" ति यं विदुः ॥ ७
अत एवारिशङ्खाभ्यां दृश्येते रहितौ करौ ।
अर्चारूपशिलारूपविग्रहस्य महात्मनः ॥ ८

दिलीपः—

'कोऽयं नृपश्चक्रवर्ती किंपूर्वः सुचिरादभूत् ।
इदानीं वर्तते क्वायं का वाऽभूद्विपदस्य वै ? ॥ ९
यदर्थं देवदेवेन शङ्खचक्रे प्रसारिते ।
ब्रूहि विस्तरतो ब्रह्मन्! श्रोतुं कौतूहलं हि मे' ॥ १०

दुर्वासाः—

पुरा कश्चिद्द्विजवरः आसीद्वैखानसो नृप! ।
कृष्णक्षेत्रे चोलदेशे या हरिद्रा नदी शुभा ॥ ११
तत्तीरे वर्तते प्रीत्या हरिर्गोपालवेषवान् ।
तप्ते तपसि चोलेन 'धृतवर्मा' भिधेन च ॥ १२
गोपालकृष्णरूपस्य दर्शनार्थं कलौ युगे ।
पञ्चविंशे तु यो भूमौ पुरा वैवस्वतेऽन्तरे ॥ १३

भविष्यकृष्णावतारस्य कथां श्रुत्वाऽतिकौतुकात् ।
तदानीमेव तद्रूपदर्शनाह्लादकामतः ॥ १४
नित्यत्वात्स्वीयरूपाणां तथा प्रत्यक्षतां गतः ।
वैखानसो द्विजस्तत्र तपसा तमतोषयत् ॥ १५
मुक्त्यर्थं प्रीतिमान् विष्णौ तस्य स्वप्ने हरिः स्वयम् ।
"त्वया ध्येयः श्रीनिवासो नाहं ध्येयो द्विजोत्तम ! ॥ १६
यो योग्यो यस्य जीवस्य तेन ध्येय. स एव हि ।
योग्योपासनया जीवा मुक्तिं यान्ति न संशयः ॥ १७
अभिधा श्रीनिवासस्य तव योग्या द्विजोत्तम ।
वेङ्कटाद्रिं ततो गच्छ श्रीनिवासः स्वयं हरिः ॥ १८
स्वामिपुष्करिणीतीरे रमया सह मोदते" ।
इत्याह भगवान् कृष्णः पुनः स्वप्नान्तरेऽवदत् ॥ १९
"पुरा कृतयुगे पश्चात् भागे शङ्खेन वै कृतम् ।
विमानं कल्पप्रलये नष्टप्रायमभूद्विज ! ॥ २०
वल्मीकस्यान्तरे विष्णोः प्रतिमा वर्तते शुभा ।
शङ्खेन निर्मिता पुण्या सर्वपापहराऽमला ॥ २१
जानुमात्रे निमग्ना हि तिन्त्रिणीवृक्षमूलतः ।
धनुर्द्वयान्तरे पुण्यं भूतीर्थं वर्तते शुभम् ॥ २२
पाकार्थं देवदेवस्य भूम्या वै निर्मितं पुरा ।
तत्राऽस्ते गौतमी धेनुः सिञ्चन्ती पयसा विभुम् ॥ २३
चिञ्चावृक्षस्य वायव्ये भूतीर्थे वासमीयुषि ।
युगान्तप्रलये धेन्वा पूजितो वर्तते विभुः ॥ २४
दासनाम्ना च शूद्रेणसह तं पूजय प्रभुम् ।
त्वदागमनकाले तु पाण्ड्यदेशात्सुधीः शुभः ॥ २५

"रङ्गदास" इति ख्यातः शूद्रस्त्वां सङ्गमिष्यते ।
उभाभ्यां पूजितो देवः इष्टसिद्धिं प्रयच्छति" ॥ २६
एतावदुक्त्वा स्वप्ने तु "गोपीनाथे" ति नाम च ।
ददौ तस्य प्रियं विष्णुः सोऽतिबुद्ध्याऽतिविस्मितः ॥ २७
प्रीत्या जगाम शैलेन्द्रं वेङ्कटाख्यं स्वसिद्धये ।
गिरिप्रवेशकाले तु रङ्गदासः समागमत् ॥ २८
पुष्पोद्यानकरः शूद्रः पूजकश्च द्विजोत्तमः ।
तिन्त्रिणीवृक्षमूलस्थो वल्मीकस्थं हरिं वरम् ॥ २९
उद्धृत्य पश्चिमे भागे स्थापयामासतुश्च तौ ।
सुशिल्पिकौशलाभिश्च शिलाभिर्भित्तिमञ्जसा ॥ ३०
कृत्वा तदन्तरे रम्यं तृणैः कृत्वा च मण्डपम् ।
तन्मध्ये देवदेवस्य परिचर्याञ्च चक्रतुः ॥ ३१
भूस्वामिपुष्करिण्योश्च मध्ये क्रीडास्पदं हरेः ।
पुष्पोद्यानञ्चकारासौ शूद्रो भागवतोत्तमः ॥ ३२
उपाहृत्य च पुष्पाणि त्रिकालेऽपि च दामकृत् ।
पूजाकाले विप्रहस्ते प्रत्यहञ्च समर्पयत् ॥ ३३
पश्यन्तौ तावुभौ पुण्यौ प्रत्यहञ्च दिवौकसाम् ।
पूजाभिकाङ्क्षिणां सङ्घं विस्मयञ्जग्मतुः परम् ॥ ३४
वन्यैः फलैश्च पुष्पैश्च कन्दमूलादिभिश्च तौ ।
सपर्याञ्चक्रतुः सम्यग् भक्त्युद्रिक्तसुखान्वितौ ॥ ३५
ततः कालान्तरे कश्चित् गन्धर्वो नाम कुण्डलः ।
दिव्यं विमानमारुह्य सस्त्रीको गिरिगह्वरे ॥ ३६
स्वामिपुष्करिणीतीरे देवं दृष्ट्वाऽभिपूज्य च ।
तत उत्तरदेशे तु मनोरम्ये वनान्तरे ॥ ३७

नानाविलासभावाभिः रेमे रामाभिरञ्जसा ।
तं दृष्ट्वा रङ्गदासोऽपि पञ्चबाणशरार्दितः ॥ ३८
निरीक्ष्य कुञ्जे लीनः सन् रेतः सद्यो विमुक्तवान् ।
पश्चाद्गतमदो भूत्वा मनसैवातिशङ्कितः ॥ ३९
तदोपहृतपुष्पाणि विसृज्याधिगतत्रपः ।
शुद्धिकामो ममज्जाथ स्वामिपुष्करिणीजले ॥ ४०
पुनराहृत्य पुष्पाणि तान्यादायाऽलयं ययौ ।
गोपीनाथोऽपि तं दृष्ट्वा प्राह स्माताम्रलोचनः ॥ ४१
'पूजाकालो गतः क्वाऽद्य गतोऽसि गतसंस्मृतिः ।
किं ते विलम्बहेतुस्तु क्वावात्सीः कथ्यता' मिति ॥ ४२
गोपीनाथेनैवमुक्तो रङ्गदासोऽतिलज्जया ।
न प्रत्युवाच तं विप्रं तदाऽवनतकन्धरः ॥ ४३
पुनः पुनः कृते प्रश्ने तस्मिंस्तूष्णीं स्थितेऽपि च ।
आकाशवाणी तं प्राह "श्रृणु शूद्रे" ति सादरम् ॥ ४४
"कामेन व्याकुलं चित्तं नैव स्वास्थ्यं गमिष्यति ।
अस्वस्थचित्तो न क्वाऽपि सिद्धिमेति न संशयः ॥ ४५
तस्माद्विसृज्य कायं त्वं व्रज देहान्तरं शुभम् ।
तस्मिन् नृपोत्तमो भूत्वा जीर्णमेतं ममाऽलयम् ॥ ४६
गोपुराद्यैः शुभैः पूर्णं मण्डपैरद्भुतैरपि ।
शोभमानं नवं कुर्याः तेन ते भविता गतिः ॥ ४७
तदा नारीसहस्राणि भोक्ष्यसे त्वं न संशयः ।
भुक्त्वा भोगाननेकांश्च मत्पादाऽसक्तचेतसः ॥ ४८
तस्मिन् जन्मनि ते शत्रुपीडा चैव भविष्यति ।
तदा तव जयार्थाय चक्रशङ्खौ जयावहौ ॥ ४९

दास्यामि चान्ते मुक्तिञ्च सकुलस्य न संशयः " ।
इत्युक्त्वाऽऽकाशवाणी तु विरराम ततः परम् ॥ ५०
रङ्गदासो निराहारः क्रमात्त्यक्तकलेबरः ।
नारायणपुरे जज्ञे "चक्रवर्ती" ति नामतः ॥ ५१
"तोण्डमा" निति तं प्राहुः द्राविडा द्रविडेश्वरम् ।
जन्मप्रभृति दासः सन् सदा विष्णुपरायणः ॥ ५२
मण्डलाधिपतिर्भूत्वा दिव्यनारीसहस्रभुक् ।
प्रत्यहञ्च बिलद्वारात् गत्वा वेङ्कटपर्वतम् ॥ ५३

## श्रीवेङ्कटाद्रौ तोण्डमान्नृपकृतगोपुरादिक्रमः

अन्वहञ्च करोति स पूजां तस्य महात्मनः ।
भक्त्युद्रिक्तमना भूत्वा ददौ ग्रामाननेकशः ॥ ५४
प्राकारद्वयसम्युक्तं गोपुरद्वयसंयुतम् ।
गर्भागारसमायुक्तं अकरोद्दिव्यमालयम् ॥ ५५
तथा महानसागारं यागमण्डपमेव च ।
धान्यागारञ्च गोशालां यद्यदङ्गं हरेः शुभम् ॥ ५६
कारयामास तत्सर्वं अष्टाविंशे कलौ युगे ।
तथोत्सवविधिं तस्य कारयामास वै द्विजैः ॥ ५७
भूषणानि ददौ तस्य नानारत्नाञ्चितानि च ।
स्थिते कदाचित्क्षितिपे श्रीनिवासस्य सन्निधौ ॥ ५८

## तोण्मान्नृपस्य भगवद्दत्तचक्राद्यायुधप्राप्तिः

शत्रवश्च बलोद्रिक्ता रुरुधुस्तस्य वै पुरीम् ।
श्रुत्वा बलार्णवं घोरं आयान्तं नातिशक्तितः ॥ ५९

ये द्धुकामो जगामाथ पुनस्तैश्च पराजितः ।
ततः खिन्नमना भूत्वा तमेव शरणं ययौ ॥ ६०
बिलद्वारेण देवेशं गत्वा पादौ प्रगृह्य च ।
रुरोद "त्राहि त्राही" ति तं प्राहार्चास्वरूपवान् ॥ ६१
"मा भैषीः पुत्र ! भद्रं ते चक्रशङ्खौ ददामि ते ।
ताभ्यां गच्छ पुरीं दिव्यां तौ ते शत्रून् हनिष्यतः" ॥ ६२
इत्युक्त्वा तौ ददौ तस्मै ताभ्यांसह जगाम सः ।
तौ च शत्रून्निहत्याशु कृत्वा राज्यमकण्टकम् ॥ ६३
आजग्मतुः क्षितिभृता साकं देवस्य सन्निधौ ।
राजा देवं ववन्देऽथ स्तुत्वा स्तोत्रैरनेकशः ॥ ६४

## बिम्बादौ शङ्खचक्राभावे कारणवर्णनम्

"वरं वरय भद्रे" ति देवो राजानमब्रवीत् ।

जा: —

'मयाऽऽयुधप्रदानस्य ख्यात्यै देवोत्तम प्रभो ! ॥ ६५
अर्चाबिम्बे शिलाबिम्बे चक्रशङ्खौ न धारय' ।
इति सम्प्रार्थितो देवो न दधार पुनश्च तौ ॥ ६६
अदृश्यौ तिष्ठतश्चोभौ पार्श्वतः शार्ङ्गधन्वनः ।
इत्येतत्कथितं सर्वं यत्पृष्टोऽहं त्वयाऽनघ ।
सकारणं चक्रदानं किमन्यच्छ्रोतुमिच्छसि' ॥ ६७

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये तोण्डमान्नामक-
नृपोत्पत्ति भगवद्दत्तशङ्खचक्रधारणप्राप्त्यादि-
वर्णनं नाम सप्तमोऽध्यायः ।

अथ अष्टमोऽध्यायः



## श्रीवराहस्य स्वामितीर्थवायव्यभागस्थितिवर्णनम्

दिलीपः —

'स्थितानि स्वामिसरसि तीर्थानि मुनिपुङ्गव ! ।
कति तानि च पुण्यानि नामधेयानि कानि च ॥ १
का देवता? किं फलञ्च? वद विस्तरतो मुने!' ।

दुर्वासः —

तीर्थानामुत्तमं तीर्थं स्वामिपुष्करिणी शुभम् ॥ २
स्मर्तव्या सर्वतीर्थेषु गङ्गेवाघापहारिणी ।
तस्या वायव्यभागे तु वाराहं तीर्थमुत्तमम् ॥ ३
यदाहृतं काश्यपेन भूतलं ब्रह्मणा तदा ।
संस्तुतो भगवान्विष्णुः भूम्युद्धरणमिच्छता ॥ ४
तन्नासापुटसम्भूतः किटिः पोत्री महाबलः ।
गत्वा रसातलं हत्वा हिरण्याक्षं महाबलम् ॥ ५
उज्जहार क्षितिं दंष्ट्राकोटया च पुरुषोत्तमः ।
तद्रूपं लोकरक्षार्थं स्थापितं वेङ्कटाचले ॥ ६
स्वामिपुष्करिणीतीरे ब्रह्मणा परमेष्ठिना ।
जलाधिवासनं तस्य वायव्येऽस्यां चकार सः ॥ ७

## ब्रह्मप्रार्थनया श्रीनिवासाभ्युपगतप्राथमिकवराहसेवाक्रमः

ममज्जाथ प्रतिष्ठान्ते देवर्षिपितृभिः सह ।
उवाच वचनञ्चेदं सर्वलोकस्य पश्यतः ॥ ८
'वराहतीर्थनाम्ना च भागोऽयं प्रथितो भवेत् ।
योऽत्रायाति हरिं सोऽत्र नाऽस्नात्वैवाशुचिर्नमेत् ॥ ९

वराहदर्शनात्पूर्वं श्रीनिवासं नमेन्न च ।
दर्शनात्प्राग्वराहस्य श्रीनिवासो न तृप्यति ' ॥ १०
इति कृत्वा व्यवस्थां स परमेष्ठी पितामहः ।
दृष्ट्वाऽथ श्रीनिवासञ्च स्तुत्वा च विविधैः स्तवैः ॥ ११
पादौ प्रगृह्य देवस्य ययाचे वरमुत्तमम् ।
मत्स्थापितवराहस्य पूर्वं स्यात्पूजनं हरे! ॥ १२
'तथाऽस्त्वि' ति वरं दत्त्वा कारयामास तत्तथा ।
तस्मात्पुण्यतमं तीर्थं वायव्यां दिशि संस्थितम् ॥ १३

## निषादकृतवराहदर्शनप्रकारः

पुनर्युगान्तसमये नष्टे देवालयेऽपि च ।
निषादोऽभूद्गिरिवरे श्यामाकाऽऽवापकः शुचिः ॥ १४
आर्द्रीभूतः स श्यामाकतण्डुलं प्रत्यहं नृप ।
वैखानसे द्विजवरे दत्त्वा पाकं विधाय च ॥ १५
दापयित्वा च नैवेद्यं स्वयं भुङ्क्ते तदेव च ।
कदाचित्तण्डुलं कृत्वा दत्त्वा पुत्रवशे त्वगात् ।
वनाद्वनान्तरं व्याधो मध्वन्वेषणतत्परः ॥ १६
तस्मिन्नेवान्तरे पुत्रः क्षुधया परिपीडितः ।
कृत्वा श्यामाकपक्वान्नं मनसा विष्णवेऽर्पयत् ॥ १७
अभुङ्क्ताथ पिताऽप्यागात् मधुच्छत्रं प्रगृह्य च ।
'श्रीनिवासस्य नैवेद्यं तण्डुलं देहि पुत्रक! ' ॥ १८
पित्रेत्युक्तः सुतः प्राह 'तताहं क्षुधयाऽर्दितः ।
तान् पक्त्वा भुक्तवानस्मि विष्णवे मनसाऽर्पयन्' ॥ १९

इत्युक्तवति पुत्रे स तच्छ्रुत्वा क्रोधमूर्च्छितः ।
प्रायश्चित्तं चिकीर्षुः सन् करवालमथाऽददे ॥ २०

शिरश्छेत्तुं स्वपुत्रस्य तदा वल्मीकगः किटिः ।
प्रगृह्य तरसा खड्गं तं निषादमुवाच ह ॥ २१

'नापराधोऽस्ति ते पुत्रे यतोऽन्नश्चार्पितं मम ।
त्वत्तोऽप्यधिकभक्तोऽयं भक्त्या तदहमद्मि वै ' ॥ २२

इत्युक्तो विह्वलः पश्चात् ददर्शाद्भुतकर्म तत् ।
पुनर्विमृश्य तद्रूपं बहुधा न च दृष्टवान् ॥ २३

तमेव द्रष्टुकामः स निषादोऽन्नविवर्जितः ।
वने चचार धर्मात्मा तदा कोलं महाद्भुतम् ॥ २४

श्यामाकवनमध्यस्थं श्यामाकाङ्कुरभक्षणम् ।
कुर्वन्तं श्वेतमुद्वीक्ष्य तं हन्तुं चान्वगाद्रुषा ॥ २५

सोऽपि नानावनोद्देशान् चारयित्वा पुनः क्रमात् ।
प्रविवेश स्ववल्मीकं स्वामिपुष्करिणीतटे ॥ २६

'अयमेव विभुर्विष्णुः' इति ज्ञात्वा ययौ द्रुतम् ।
वल्मीकं परया भक्त्या जगौ प्राकृतया गिरा ॥ २७

तदा वल्मीकगः प्राह हरिरेवं मृगान्तकम् ।
'नाहं दृश्योऽस्मि ते पुत्र! सच्चिदानन्दविग्रहः ॥ २८

किन्तु वक्ष्यामि ते पुत्र! ब्रह्मणा स्थापितं पुरा ।
शिलारूपश्च वल्मीके वर्तते तत्समुद्धर ॥ २९

विमानं कारयित्वा च तस्य पुष्करिणीतटे ।
ब्राह्मणैश्च विधानज्ञैः पूजां कारय मे विभोः ' ॥ ३०

इत्युक्तमात्रेण निषादवर्यो वल्मीकगं विष्णुमथोज्जहार ।
वायव्यभागे च विमानवर्यं निधापयामास विधानकोविदैः ॥ ३१

## स्वामितीर्थमध्यगतधनदादिनवतीर्थवर्णनम्

ततो निषादं तं प्राह किटिरूपी हरिः स्वयम् ।
पूर्वं सेव्यं विमानं मे तीर्थञ्च श्रीनिवासतः ।
ततःप्रभृति तत्तीर्थं पूर्वं सेव्यं बभूव ह ॥ ३२
उत्तरे धनदं तीर्थं धनदेन विनिर्मितम् ।
यत्र स्नात्वाऽघनिर्मुक्तो धनसम्पदमाप्नुयात ॥ ३३
ऐशान्यां गालवं तीर्थं गालवेन विनिर्मितम् ।
तत्र स्नात्वा च पीत्वा च भुक्तिं मुक्तिञ्च विन्दति ॥ ३४
मार्कण्डेय पूर्वभागे मार्कण्डेयविनिर्मितम् ।
तत्र स्नान्ति नरा ये तु तेषामायुः प्रवर्धते ॥ ३५
अग्निना निर्मितं तीर्थमाग्नेय्यां पापमोचनम् ।
दक्षिणे यमतीर्थन्तु नरकोत्तारकारणम् ॥ ३६
वसिष्ठनिर्मितं तीर्थं राक्षसं त्वृणमोचनम् ।
वारुणे वायुतीर्थञ्च सद्यः कैवल्यदायकम् ॥ ३७
मध्ये सरस्वतीतीर्थं महापातकनाशनम् ।
य एषु नवतीर्थेषु स्नानमेकदिने नरः ॥ ३८
कृत्वा पश्येच्छ्रीनिवासं न पुनर्जायते तु सः ।
स्वामिपुष्करिणीस्नानं श्रीनिवासस्य दर्शनम् ॥ ३९
सहस्रनामपठनं नाल्पस्य तपसः फलम् ।
अस्नातुर्नवतीर्थे तु वराहञ्चाप्यपश्यतः ॥ ४०
सर्वं निष्फलतां याति श्रीनिवासो न तुष्यति ।
फलं धर्मादिकञ्चैव न यच्छति नृणां विभुः ॥ ४१

तत्तत्प्रशंसिनीं दिव्यां कथां न शृणुयाद्यदि ।
तीर्थयात्रा च विफला भस्मन्येव हुतं यथा ।
तस्मात्कुरु महाभाग! कथायाः श्रवणं सदा ॥ ४२

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवराहाविर्भाव-
स्वामिपुष्करिणीगततीर्थमाहात्म्यवर्णनं नाम
अष्टमोऽध्यायः ।

---

## अथ नवमोऽध्यायः

### श्रीवेङ्कटाद्रिगतपुण्यतीर्थस्नानप्रशंसा

दिलीपः—

को विधिस्तीर्थयात्रायां! कः कालः! किं फलं! भवेत् ।
एतद्विस्तार्य मे ब्रूहि तृप्तिर्नाद्यापि जायते ॥ १

दुर्वासा —

भुवि जन्म समासाद्य संस्कारैरपि संस्कृतः ।
अधीतविद्यो बाल्ये च स्नातकव्रतनिष्ठितः ॥ २
तीर्थयात्रां प्रकुर्वीत शास्त्राणां प्रत्ययाय च ।
नित्यं नैमित्तिकं काम्यमिति कर्म त्रिधा मतम् ॥ ३
तत्र नैमित्तिकं प्राहुः तीर्थयात्रां महत्तमाः ।
नाविद्यस्याधिकारोऽत्र विद्याविधिरनुत्तमाः ॥ ४
न तीर्थयात्रां कुर्वीत मनीषी मनने रतः ।
यात्रायां मननाभावात् चित्तविक्षेपहेतुतः ॥ ५
नरो विस्मृतविद्यत्वात् ज्ञानहीनो भवेत्स्वयम् ।
नष्टसंज्ञो विमार्गस्थो निरयञ्चाधिगच्छति ॥ ६

निरागमस्तु तीर्थस्य तथा चाकृतसत्क्रियः ।
न तत्फलमवाप्नोति श्रम एव हि केवलम् ॥ ७
सत्सङ्गी सत्कथां शृण्वन् सदाचारसमन्वितः ।
तीर्थयात्रां प्रकुर्वाणो ब्रह्मनिर्वाणमृच्छति ॥ ८
तीर्थयात्रापरो यस्तु विधिज्ञो विधिवित्तमैः ।
निर्धूताखिलपापः सन् स याति परमां गतिम् ॥ ९
काम्यं न कुर्वीत नरः कामाद्याज्जन्म चाश्नुते ।
जातः कर्माणि कुरुते कर्मणा च पुनर्जनिः ॥ १०
ऐहिकामुष्मिकं सर्वं निष्कामो लभते फलम् ।
सर्वेषामेव जन्तूनां विद्यया मनने विधिः ॥ ११
अभ्यस्तानाञ्च विद्यानां श्रवणान्मननादपि ।
परापरोक्षशास्त्रार्थप्रत्ययो लेशतो भवेत् ॥ १२
दृष्टप्रत्ययशास्त्रार्थे पुनः श्रद्धाऽभिजायते ।
श्रद्धया जायते भक्तिः भक्त्या तुष्यति केशवः ॥ १३
तीर्थयात्रां प्रकुर्वीत शास्त्रालापसमन्वितः ।
शास्त्रालापाच्च जानाति मनसा विभुमव्ययम् ॥ १४
तथा देवाश्च ऋषयः सदालापसमन्विताः ।
उपासते सज्ज्ञानाना भगवन्तमधोक्षजम् ॥ १५
वसिष्ठाद्याश्च ऋषयो देवता अपि सर्वशः ।
तीर्थे कृताधिवासाश्च समाविस्थाः परं ययुः ॥ १६
अनागमस्तु यो मर्त्यो पश्चाज्ज्ञातविधिस्तथा ।
न स्नानफलमाप्नोति काकमण्डूकवत्तु सः ॥ १७
अधीतविद्यः सुकृती कृतस्नानादिसत्क्रियः ।
शुद्धान्तरो ज्ञानवांश्च तेन मोक्षञ्च विन्दति ॥ १८

सत्कर्मसन्ततिर्या तु ज्ञानविज्ञानसंयुता ।
अपरोक्षदृशा चापि भक्तिश्रद्धाविरक्तिभिः ॥ १९
पुंसः कैवल्यदा सा हि क्रमेण सुकृतात्मनः ।
दृष्टश्रुतानुभावा ये देवाश्च ऋषयस्तथा ।
विशुद्ध्यर्थं प्रकुर्वन्ति सत्क्षेत्रस्यानुवर्तनम् ॥ २०
भक्तिश्रद्धाविहीनानां मनुष्याणान्तु का कथा ! ।
लब्धविद्याधिकारश्च सत्सङ्गत्यागसंयुतः ॥ २१
यः शृण्वन् श्रावयंश्चापि सतां सङ्गेन संयुतः ।
तीर्थवैभवमाकर्ण्य संयुतेनैव निर्वृतः ॥ २२
तीर्थयात्रां प्रकुर्वीत भक्तिश्रद्धासमन्वितः ।
तेन निर्धूतपापः सन् स याति परमां गतिम् ॥ २३
यत्र यत्र त्वया कार्या तीर्थयात्रा क्षितीश्वर ! ।
तत्रानेन विधानेन प्रीणयस्व जनार्दनम् ॥ २४
त्वदीयधनधान्यादीन् भक्त्या कुरु समर्पितान् ।
वेङ्कटेशस्य यात्रां वै कुरु नित्यमतन्द्रितः ॥ २५

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये तीर्थयात्राप्रकार-
वर्णनं नाम नवमोऽध्यायः ।



## अथ दशमोऽध्यायः

— : ❀ : —

कानि दानानि शस्तानि कर्तव्यानि महीधरे ।
प्रीतये श्रीनिवासस्य तानि मे वद सुव्रत! ॥ १

शृणु भूप! प्रवक्ष्यामि कर्तव्यानि महीधरे ।
अन्नदानं पितृश्राद्धं द्वयमेव प्रशस्यते ॥ २
सुवर्णं ये प्रयच्छन्ति प्रीतये मधुघातिनः ।
ते यान्ति मोक्षममृतं वासोदा आयुरेव च ॥ ३
काङ्क्षन्ति पितरः सर्वे श्राद्धं वेङ्कटभूधरे ।
कृते श्राद्धे प्रहृष्यन्ति प्रयान्ति परमां गतिम् ॥ ४
यः कुर्यात्कपिलादानं प्रीतये श्रीपतेर्नृप! ।
लोमसङ्ख्याप्रमाणेन विष्णुलोके महीयते ॥ ५
यो दद्याद्देवभोगाय गां भूमिं भक्तिसंयुतः ।
स सद्यो मुक्तिमाप्नोति ज्ञानाज्ञानकृत दघात् ॥ ६
देवभोगाय यो दद्यात् गामनड्वाहमेव च ।
स मोक्षभोगमाप्नोति न पुनर्जायते भुवि ॥ ७
कर्पूरं चन्दनं शङ्खं यानि वै भूषणानि च ।
यो विष्णवे प्रदद्यात्स गुरुतल्पं व्यपोहति ॥ ८
गुरुभिर्भूषणैर्यस्तु पूजां कृत्वा जगत्पतेः ।
लिङ्गभङ्गमवाप्नोति स्वानुभूतिश्च विन्दति ॥ ९
समस्तदेवपूजार्थं यो वै ग्रामान् प्रयच्छति ।
स याति परमां सिद्धिं निर्धूताखिलबन्धनः ॥ १०

कन्याकोटेः प्रदानाद्यत् स्यादर्बुदगवां तथा ।
एकस्माद्रथनिर्माणात् विष्णोस्तत्फलमश्नुते ॥ ११

छत्रञ्च कनकञ्चैव व्यजनं चामरं स्रजम् ।
यो दद्याच्छ्रीपतेर्विष्णोः वेङ्कटाख्ये महीधरे ॥ १२

आब्रह्मकल्पपर्यन्तं महीपालो भवेत् ध्रुवम् ।
पश्चान्मोक्षमवाप्नोति पितृपैतामहैर्वृतः ॥ १३

यो दद्याद्गजमश्वं वा भुवनाधिपतेर्विभोः ।
स लोकपालमिति नात्र कार्या विचारणा ॥ १४

यद्यदिष्टतमं वस्तु दीयते मधुघातिनः ।
तेनाक्षयफलं प्राप्य मोदते विष्णुमन्दिरे ॥ १५

फलं पात्रानुगुण्यात्स्यात् पात्रमत्र हरिः स्वयम् ।
अक्षय्यमिति किं ब्रूयात्? यत्किञ्चिदपि मोक्षदम् ॥ १६

तत्र पुण्यतमे काले श्रोत्रिये ब्राह्मणोत्तमे ।
यत्किञ्चिद्दीयते तत्तु वर्धते वटबीजवत् ॥ १७

मुक्तिकामेन दातव्या कन्या पृथ्वी सरस्वती ।
न तासां सदृशं दानं त्रिषु लोकेषु विद्यते ॥ १८

गीतवादित्रनृत्याद्यं यः कारयति मानवः ।
सद्य एव स मुच्येत महापातककोटिभिः ॥ १९

कुर्याद्ध्वजपताकाभिः सपर्यां परमात्मनः ।
तेन धूताखिलाघः सन् स याति परमां गतिम् ॥ २०

घण्टां ददाति यो मर्त्यो विष्णवे परमात्मने ।
दिव्यज्ञानमवाप्नोति प्रतिष्ठाञ्चाधिगच्छति ॥ २१

यः कुर्यादुत्सवं विष्णोः सद्ध्वजैर्गरुडादिभिः ।
देवेन्द्रपदमाप्नोति मोक्षञ्चैवाधिगच्छति ॥ २२

पञ्च पर्वाणि देवस्य यः कारयति मानवः ।
तस्यापराधसाहस्रं क्षमते नात्र संशयः ॥ २३
इहापि भुक्त्वा भोगांश्च मोक्षञ्चैवाधिगच्छति ।
यः कारयति नैवेद्यं स्वादु षड्रससंयुतम् ॥ २४
ऐहिकामुष्मिकाँल्लोके सर्वान् कामानवाप्नुयात् ।
सहस्रनामभिः पूजां श्रीपतेः कारयेत्तु यः ॥ २५
तेनैव सकला पूजा कृतैव स्यान्न संशयः ।
शारिकाशुकपूर्वांश्च विहङ्गान् मर्कटान् गुरून् ॥ २६
सारङ्गान् गवयान् वन्यान् दत्त्वा स्वर्गमवाप्नुयात् ।
पुष्पोद्यानानि रम्याणि वनानि विविधानि च ॥ २७
क्रीडास्पदानि हर्म्याणि यः करोति स मुच्यते ।
यः कुर्याद्दीपदानन्तु नित्यं विष्णोश्च सन्निधौ ॥ २८
ब्रह्महत्यासहस्राणि गुरुतल्पार्बुदानि च ।
तथाऽन्यपापकोटीश्च निर्दहेत्सूर्यवह्निमम् ॥ २९

## विष्णुवृद्धाख्यद्विजबन्धुवृत्तान्तः

अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
श्रवणात्सर्वपापघ्नं सर्वमङ्गलदायकम् ॥ ३०
द्विजबन्धुः पुरा कश्चित् विष्णुवृद्धाभिधो नरः ।
हत्वा स्वं गुरुमत्युग्रो देवस्वामीति यं विदुः ॥ ३१
दासवृत्त्या गृहे तिष्ठन् तस्य पत्नीसहस्रकम् ।
निवृत्तान्यपथो मूर्खो बुभुजे काममोहितः ॥ ३२
भूयान् कालोऽत्ययात्तस्य प्रत्यहं पापवर्त्मनः ।
तेन दोषेण महता श्वेतकुष्ठमभ्यजायत ॥ ३३

अङ्गानि व्यग्रतां प्रापुः रोगोत्कृत्तानि खण्डशः ।
दरिद्रा गुरुपत्न्यस्ताः पातित्यात्यन्तदुःखिताः ॥ ३४
मदादैश्वर्यजाद्भुक्ता बलात्तेन तदाऽपि च ।
ततो लोकापवादाच्च गृहस्याप्यग्निदाहनात् ॥ ३५
अयञ्च बन्धुभिस्त्यक्तो वनमेवाविशत्खलः ।
सृगालभक्ष्यतां प्राप्तो नीतोऽयं यमकिङ्करैः ॥ ३६
जगाम नरकं घोरं चण्डकोलाहलं परम् ।
यत्र वै नारकं दुःखं सकलञ्चापि वर्तते ॥ ३७

वेङ्कटाद्रौ वेदाभिधद्विजकृतदीपारोपप्रशंसा

तत्पुत्रो वेदनामा च कदाचिद्वेङ्कटाचले ।
पितुः पापञ्च संस्मृत्य देवदेवस्य सन्निधौ ॥ ३८
अहोरात्रं ददावेकदिने दीपं नृपोत्तम! ।
तत्पिता तेन पुण्येन विध्वस्ताखिलपातकः ॥ ३९
धिक्कृत्य यमदूतांश्च विष्णुलोकमुपाययौ ।
तस्माद्दीपप्रदो मर्त्यो न पुनर्दुःखमश्नुते ॥ ४०
यत्किञ्चित्कुरुते दानं वेङ्कटाचलमूर्धनि ।
तदाकल्पमविच्छिन्नं वर्धते वटबीजवत् ॥ ४१
तदेतत्सकलं श्रुत्वा वेङ्कटेशस्य वैभवम् ।
चलति स्वगृहाद्यस्तु कृतनिश्चयया धिया ॥ ४२
पदेपदे सोऽश्वमेधफलं प्राप्नोत्यसंशयम् ।
वेङ्कटेशस्य माहात्म्ये श्लोकञ्चार्धञ्च भक्तितः ॥ ४३
पदञ्चाप्यक्षरञ्चापि यः पठेच्छृणुयात्स तु ।
ब्रह्महत्यासहस्राणि पातकान्यपराण्यपि ॥ ४४

उपपातकमुख्यानि निर्दहेत्सूर्यवह्निमम् ।
वेङ्कटेशस्य माहात्म्यं यस्य गेहे प्रवर्तते ।
आयुरारोग्यमैश्वर्यं सोऽन्ते विष्णुपदं लभेत् ॥ ४५

सूतः—

इति श्रुत्वा दिलीपोऽपि वैभवं परमाद्भुतम् ।
आनन्दाम्बुधिसम्मग्नो न हि वेद तदा परम् ॥ ४६
अश्रुत्वा महिमानन्तु फलं न प्राप्यते नरैः ।
श्रुत्वा चैव फलं यान्ति विष्णोः सायुज्यमप्यथ ॥ ४७

इति श्रीब्रह्मपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटाचले
महादानमाहात्म्यवर्णनं नाम
दशमोऽध्यायः ।



श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रियै पद्मावत्यै नमः

श्रीमते विष्वक्सेनाय नमः

# श्रीवेङ्कटाचलमाहात्म्यम्

( श्रीब्रह्मोत्तरखण्डान्तर्गतम् )

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥

हरिः ॐ

पञ्चाशत्तमोऽध्यायः

## ब्रह्माणं प्रति वसिष्ठप्रार्थनया स्वपौरोहित्यपापनिवृत्तिः

ऋषय ऊचुः

सूत! वेदार्थतत्त्वज्ञ! वेदव्यासकृपानिधे! ।
ब्रूहि नः सर्वतीर्थेषु तीर्थं सर्वाघनाशनम् ॥ १

सूतः —

कथयामि कथां सम्यक् सर्वपापापनोदिनीम् ।
यस्याः श्रवणमात्रेण दृष्टादृष्टफलागमः ॥ २
प्राप्नुवन्ति महत्पुण्यं इति सर्वर्षिसम्मतम् ।
कथायां कथ्यमानायां ये भवन्त्यपराङ्मुखाः ॥ ३

तस्मादेकाग्रहृदयैः कर्तव्यान्तरनिःस्पृहैः ।
भवादृशैः पुण्यकथा श्रोतव्याऽञ्जलिकारिभिः ॥ ४
पुरा कदाचिद्विप्राणां उत्तमोत्तमतां गताः ।
वसिष्ठाद्या ब्रह्मसदः किञ्चित्कार्येच्छया गताः ॥ ५
तत्र देवैस्तथा सिद्धैः पुण्यश्लोकैश्च राजभिः ।
सनन्दसनकाद्यैश्च योगाचार्यैश्च सत्तमैः ॥ ६
गङ्गाद्याभिर्नदीभिश्च सर्वतीर्थैः सविग्रहैः ।
संसेव्यमानं सदसि ब्रह्माणं चतुराननम् ॥ ७
वेदैरनन्तैः शास्त्रैश्च मूर्तिमद्भिरुपासितम् ।
सुरज्येष्ठमुपागम्य वसिष्ठो मुनिसत्तमः ॥ ८
प्रणम्य सहजानन्दो वाक्यमेतदुवाच ह ।
'ब्रह्मन्! समस्तलोकानां नायकामरशेखर! ॥ ९
इदं वन्दनमायाति दयया मां विलोकय' ।
इति प्रणम्योत्थितं तं वसिष्ठमृषिसत्तमम् ॥ १०
दयया विधिरालोक्य 'निषीदे' त्यब्रवीत्तदा ।
तत्र ब्रह्मसभामध्ये वर्तमानकथासु च ॥ ११
निवृत्तासु ततः पश्चात् उवाच च पितामहः ।
'किमर्थमागतोऽसी' ति वसिष्ठं वाक्यमब्रवीत् ॥ १२
ततो वसिष्ठः प्रणतो विनयावनतो मुनिः ।
वाक्यं विज्ञापयामास ब्रह्मणेऽनन्ततेजसे ॥ १३
वसिष्ठः— 'प्रसीद भगवन् ब्रह्मन्! पङ्कजासन! ते नमः ।
विज्ञाप्यं किञ्चिदस्त्येतत् दययाऽऽकर्णय प्रभो ॥ १४
यद्वसिष्ठवसिष्ठेति मानं कुर्वन्ति मे जनाः ।
तत्सर्वं मम दुःखाय जायते न च संशयः ॥ १५

जानाति मां राजपुरोहितं भवान्
पुरोहितानां बहुलं हि पापम् ।
ते राजानो यद्यदघं चरन्ति
पुरोहितनां तदिति प्रवादः ॥ १६

प्रायश्चित्तेनापवार्यं बहुलं पापमस्ति मे ।
तत्पापशान्तिमिच्छन्वै सदा व्यग्रो भवाम्यहम् ।
अन्यच्च किञ्चिदस्तीह तच्छृणुष्व महामते ! ॥ १७

## सर्वाबद्धोपाख्यानम्

क्वचिद्ग्रामे कश्चिदस्ति सर्वदा मत्परायणः ।
स नास्तिको दुष्प्रकृतिः सर्वपापरतः सदा ॥ १८
दरिद्रश्च दुराचारः सर्वाबद्ध इति द्विजः ।
यज्ञस्थानेषु सर्वेषु सन्तिष्ठत्सु द्विजातिषु ॥ १९
यत्किञ्चिद्दक्षिणापेक्षी सोऽप्यागत्य स्थितः क्वचित् ।
तं दृष्ट्वाऽवददन्यो वै द्विजो रोषेण पूरितः ॥ २०
सर्वाबद्ध ! किमर्थं त्वं इहागत्य द्विजातिषु ।
वसिष्ठवत्तिष्ठसि त्वं स्नानाचारविवर्जितः ॥ २१
सर्वाबद्धस्तु तच्छ्रुत्वा गतोऽन्यत्रातिदुःखितः ।
'कोपाद्वसिष्ठवदिति मां प्रत्युक्तं द्विजन्मना ॥ २२
स वसिष्ठो रक्षतु मां पावनश्च करोतु माम् ' ।
इति नित्यं वदत्येवं ध्यायते हृदये च माम् ॥ २३
वाग्वसिष्ठवसिष्ठेति सर्वदा तस्य वर्तते ।
कायिकं मानसं पापं वाचिकं नास्ति तद्भुवि ॥ २४
यन्नाम्ना वै कृतं पापं तादृक्क्वाऽपि न मे मतः ।
तथाऽपि मामाश्रयते तस्मात्तस्मिन् कृपा मम ॥ २५

मामाश्रितस्य मम च पापं राजपुरोधसः ।
यथा सिद्ध्यति तन्मे त्वं वद लोकपितामह ! ' ॥ २६

' ब्रह्मा तदाऽब्रवीदेनं वसिष्ठं मुनिसत्तमम् ।
प्रायश्चित्तापनोद्यानि पापानीत्यवधारय ' ॥ २७

मुनिर्ब्रह्माणमवदत् ' स्वामिंस्तच्छृणु साम्प्रतम् ।
मम तस्य च पापानि घनानि बहुलानि च ॥ २८
प्रायश्चित्तैर्न नश्यन्ति तस्मात्त्वामागतोऽस्म्यहम् ।
नमस्करोमि धर्मात्मन् ! त्वामेव शरणं गतः ॥ २९
आवयोरल्पयत्नेन नश्यन्ते पापराशयः ।
येन दृष्टं फलञ्च स्यात् तमुपायं वदस्व मे ' ॥ ३०

## ब्रह्माऽज्ञया श्रीवेङ्कटाचलं प्रति वसिष्ठाद्यागमनम्

इति पृष्टस्ततो ब्रह्मा विचार्य हृदये हरिम् ।
वेङ्कटेशं नमस्कृत्य वसिष्ठमिदमब्रवीत् ॥ ३१

काश्या दक्षिणदेशे वै कश्चिदस्ति महीधरः ।
वेङ्कटाद्रिरिति ख्यातो विश्वलोकैकसम्मतः ॥ ३२
श्रीवेङ्कटेति यन्नाम मर्त्यो वाचा वदन्नपि ।
देवानां वन्दनीयत्वं याति तादृङ् महीधरः ॥ ३३
तत्र तीर्थानि सर्वाणि सर्वपापहराणि च ।
षट्षष्टिकोटितीर्थानि विद्यन्ते वेङ्कटाचले ॥ ३४

स्वामितीर्थमिति ख्यातं सर्वतीर्थोत्तमोत्तमम् ।
तत्तीरे दक्षिणे विष्णुः लक्ष्म्या सह विमोदते ॥ ३५
अगस्त्यशङ्खणादीनां अभीष्टवरदायकम् ।
वेङ्कटेशं नमस्कृत्य दृष्टादृष्टञ्च विन्दति ॥ ३६
तस्य वेङ्कटशैलस्य मध्ये घोणमिति स्मृतम् ।
एकं तीर्थं पवित्रं वै तत्र स्नातः शुचिः सदा ॥ ३७
मीनसंस्थे सवितरि पौर्णमास्यां महातिथौ ।
घोणस्नानेन सर्वाणि नश्यन्ति दुरितानि हि ॥ ३८
त्वदाश्रितस्त्वञ्च तत्र गत्वा वेङ्कटभूधरे ।
मीनमासे पौर्णमास्यां स्नातौ पूतौ भविष्यथः ' ॥ ३९
इत्युक्तवन्तं ब्रह्माणं नमस्कृत्याऽथ हृष्टधीः ।
अवरुह्य ब्रह्मलोकात् अत्यन्तं त्वरयाऽन्वितः ॥ ४०
सर्वाबद्धमुपागम्य वसिष्ठो वाक्यमब्रवीत् ।
'रेरे ब्राह्मण ! मां नित्यं आश्रितोऽसि सदा वदन् ॥ ४१
त्वत्पापपरिहाराय किञ्चिद्वक्ष्यामि तच्छृणु ।
गच्छामि वेङ्कटगिरिं एहि शीघ्रं मया सह' ।
इत्युक्तमात्रो विप्रोऽसौ तेन सार्धं जगाम ह ॥ ४२

## घोणतीर्थस्नानेन वसिष्ठादीनां पापनिवृत्तिः

सब्राह्मणो वसिष्ठोऽसौ वेङ्कटचलमाययिवान् ।
शुकस्य वरदं कृष्णं सुवर्णमुखरीतटे ॥ ४३
दृष्ट्वा प्रणम्य पश्चात्स वेङ्कटाचलमूलगः ।
कपिलाख्ये कृतस्नानः तीर्थे पापप्रणाशने ।
आरुह्य वेङ्कटं शैलं स्वामिपुष्करिणीं ययौ ॥ ४४

तत्र स्नात्वा भूवराहं प्रणम्य
हेनःशांतिं प्रार्थयित्वा स विप्रः ।
लक्ष्मीनाथं दक्षिणे कूलभागे
नत्वा नाथं स्तोत्रयामास सम्यक् ॥ ४५

'जय! धातृगिरा निदर्शितो
जय! लोकावनदक्ष रक्ष माम् ।
जय! शङ्खणपूजितेह मां
द्विजमेनश्च पुनीहि केशव! ॥ ४६

तव वेङ्कटनायकाचले
महति श्रीधर! घोणतीर्थके।
अभिषेकविधित्सयाऽऽगतो
भगवंस्तत्त्व फलं प्रयच्छ मे' ॥ ४७

इति स्तुत्वोत्तरे देशे पापनाशनतीर्थके ।
सर्वाबद्धेन सहितः स्नात्वा घोणं जगाम ह ॥ ४८

एकादश्यां तत्र गत्वा पञ्चरात्रमुवास ह ।
मीनमासे पञ्चदश्यां मध्याह्ने स्नातुमागतान् ॥ ४९

ऋषीन् देवांश्च यक्षांश्च गन्धर्वान्किन्नरांस्तथा ।
आश्चर्यं परमं गत्वा वसिष्ठो विप्रसंयुतः ॥ ५०

स्नात्वा सङ्कल्प्य विधिवत् देवर्षीनभितर्प्य च ।
सह विप्रेणोपविश्य जपं चक्रे विधानतः ॥ ५१

जपान्ते श्रीहरिं ध्यायन् समाधिस्थोऽभवन्मुनिः ।
स्नात्वा तिष्ठत्सु सर्वेषु तत्र घोणे पुरो मुनेः ॥ ५२

आविरासीद्वेङ्कटेशः श्रिया सार्धं जगत्पतिः ।
गरुडासनमारूढः पीताम्बरधरो हरिः ॥ ५३

प्रसन्नवदनाम्भोजः सर्वप्राणिदयापरः ।
कटाक्षयन्करुणया सर्वांस्तीर्थार्थमागतान् ॥ ५४
सनन्दसनकाद्यैश्च सेनेशानन्तसंयुतः ।
सेव्यमानो वेङ्कटेशो वसिष्ठं वाक्यमब्रवीत् ॥ ५५

## वसिष्ठं प्रति भगवद्वर्णितघोणतीर्थमाहात्म्यम्

'वसिष्ठाहं प्रसन्नोऽस्मि तव! वर्धस्व वैभवात् ।
मम तीर्थस्य माहात्म्यं श्रुत्वा ब्रह्ममुखाद्भवान् ॥ ५६
भक्त्या समागतो यस्मात् ततस्तुष्टोऽस्मि ते मुने! ।
वरं वरय विप्रेन्द्र! यत्ते मनसि वर्तते ।
इत्युक्तो वेङ्कटेशेन मुनिः प्रोवाच केशवम् ॥ ५७

वसिष्ठः—

'नमोऽस्तु वेङ्कटाधीश! विश्वरक्षामणे! हरे! ।
विज्ञापनां मदीयां त्वं सावधानमनाः शृणु ॥ ५८
अयं विप्रो मम सखा कृतवानपि पातकम् ।
मय्यनुग्रहबुद्ध्या च तीर्थस्यास्य प्रभावतः ॥ ५९
सर्वं सोढ्वा पवित्रञ्च कुरु पापविवर्जितम्' ।
उक्तो वसिष्ठेनैवन्तु वेङ्कटचलनायकः ॥ ६०

भगवान्— 'वसिष्ठ! जातः सन्तोषो ममातीव महामुने! ।
ममाश्रितोऽयमित्येव दया तस्मिंस्त्वया कृता ॥ ६१
य आश्रितेषु वात्सल्यं कुरुते स इहोत्तमः ।
तस्मिन्मम महाप्रीतिः तन्मदीयगुणो महान् ॥ ६२
अयञ्च त्वयि विश्वासात् भक्तिं विहितवानहो ।
महत्सु भक्तिं यः कुर्यात् स एव पुरुषोत्तमः ॥ ६३

तस्य लक्ष्म्या समेतोऽहं वसामि सततं हृदि ।
अयन्तु बहुपापानि कृतवाँल्लोकगर्हितः ॥ ६४
एको गुणोऽपि नास्त्यस्मिन् सर्वाबद्ध इतीरितः ।
तथाऽपि त्वत्सहायेन तीर्थमागत्य भक्तितः ॥ ६५
स्नातश्च पूर्णिमायोगे पापं सर्वं लयं गतम् ।
सर्वे चास्मिन् गुणा जाताः सहवासेन ते मुने ! ॥ ६६
तस्मात् स सर्वसिद्ध्याख्यां अद्यप्रभृति यास्यति ।
अस्याह हृदये तिष्ठन् सत्कर्माणि प्रवर्तयन् ॥ ६७
धनिकं धार्मिकञ्चैव करोमि सुखिनं तदा !
वसिष्ठ ! शृणु मद्वाक्यं एतेषां सन्निधौ ब्रुवे ॥ ६८
पौरोहित्येन सञ्जातं तव दोष हराम्यहम् ।
पुरुषो वाऽथवा नारी ब्राह्मणः क्षत्रियोऽपि वा ॥ ६९
पापान्मुक्तो वाञ्छितानि प्राप्नोति हि न संशयः ।
मामुद्दिश्य तपस्तप्त्वा तुम्बुरुर्भगवानिह ॥ ७०
तीर्थस्य स्वस्य नाम्नैव ख्यातिं प्रार्थितवानभूत् ।
अज्ञानाद्विहितं ज्ञानात् मनोवाक्कायकर्मभिः ॥ ७१
यत्पापं तदशेषञ्चाप्यत्र स्नानेन शाम्यति ।
नारी वा पुरुषो वापि स्नात्वा तीर्थे शुभे दिने ॥ ७२
इष्टार्थं स्वं स्वमाप्नोति नात्र कार्या विचारणा ।
दत्ता तुम्बुरुतीर्थाऽख्या तीर्थस्यास्य महामुने ! ॥ ७३
वर्षे वर्षे मीनमासे पूर्णिमायां शुभे दिने ।
स्नाति तुम्बुरुतीर्थेऽस्मिन् स धन्यो भुवनत्रये ॥ ७४
कन्या भर्तारमाप्नोति लोके सर्वगुणोत्तरम ।
युवती दीर्घमाङ्गल्यं कुलोत्तारं सुतं तथा ॥ ७५

वृद्धा पापविनिर्मुक्ता पुत्रपौत्रादिसंयुता ।
धनान्विता बन्धुमती जीवद्भर्त्री चिरं वसेत् ॥ ७६
वन्ध्या पुत्रं प्रसूतेह स्नानादत्र न संशयः ।
पुरुषो धनमन्विच्छन् धनी भवति नित्यदा ॥ ७७
पुत्रार्थी लभते पुत्रं पौत्रं पौत्रेप्सुराप्नुयात् ।
मानार्थी लोकसम्मानं विद्यार्थी बहुविद्यताम् ।
लौकिके वैदिके कार्ये पटुर्भवति सर्वदा ॥ ७८

अत्र स्नाता मुक्तपापाः समस्ताः
धान्यं द्रव्यं पुत्रभाग्यञ्च लब्ध्वा ।
सौख्यं लब्ध्वा बन्धुमध्ये समस्तं
आयुष्मन्तो विष्णुलोकं व्रजन्ति ॥ ७९

अत्र तीर्थेऽत्र दिवसे स्नात्वा ये भाग्यशालिनः ।
दानं कुर्वन्ति विप्रेभ्यः तेष्वत्यन्तदया मम ॥ ८०
सुवर्णं ये प्रयच्छन्ति तेषां लक्ष्मीः स्थिरा भवेत् ।
गोदानं राजतं दानं भूदानञ्च फलं तिलान् ॥ ८१
विद्यां वस्त्रञ्च विप्रेभ्यो दाता सोऽतीव मे प्रियः ।
ताम्बूलञ्च सुगन्धञ्च दधि तक्रं गुडोदकम् ॥ ८२
दत्त्वा ब्रह्मशिवादीनां वन्दनीया भवन्ति ते ।
ये ब्राह्मणान् भोजयन्ति भक्त्या भागवतानिह ॥ ८३
तानालोक्य महानन्दो मम लक्ष्म्याश्च जायते ।
कलौ युगे च प्रख्यातं तीर्थमेतद्भविष्यति ॥ ८४
स्नानं दानं मनुष्याणां सर्वाघौघविनाशनम् ।
अत्र मार्गप्रपां ये वै कुर्वन्ति श्रमहारिणीम् ॥ ८५

तान् मदंशान् ऋषिगणान् वदन्त्यत्र न संशयः ।
सर्वं दानं कोटिगुणं भवत्यत्र न संशयः ॥ ८६
तस्मात् कुर्वन्तु दानानि सर्वे मनुजपुङ्गवाः ! ।
सर्वदाऽस्मिन् पुण्यदिने सन्निधिं विदधाम्यहम् ॥ ८७
स्नातानामत्र सर्वेषां वाञ्छितानि ददाम्यहम् ।
तीर्थार्थमागतान सर्वान् आहूय घननिःस्वनः ।
भगवान् वेङ्कटाधीशो वाक्यमर्थवदब्रवीत् ॥ ८८
'सर्वेषां वः सर्वपापक्षयोऽभूत्
सर्वेषां वो वाञ्छितं दत्तमेव ।
सर्वेषां वः सन्तु कालान्तरे च
लोकाः श्रेष्ठाः योगिनामप्यलभ्याः ॥ ८९
कलौ तु भारते वर्षे मानुषं जन्म दुर्लभम् ।
ततो वेङ्कटयात्रा तु दुर्लभा सुकृतं विना ॥ ९०
ततोऽप्यस्मिन् दिने पुण्ये तीर्थे तुम्बुरुनामके ।
स्नानं दानञ्च लब्धञ्चेत् ते कृतार्था न संशयः' ॥ ९१
इत्युक्त्वा वेङ्कटाधीशो हरिर्गरुडवाहनः ।
रमया सहितो रेमे वेङ्कटाख्ये महीधरे ॥ ९२
एवं तुम्बुरुतीर्थे वै स्नात्वा देवर्षिमानवाः ।
हरिं नत्वा तद्वदनसुधां पीत्वा यथागतम् ।
प्रशंसन्तस्तु तत्तीर्थं ययुः सन्तुष्टमानसाः ॥ ९३

## घोणस्नानेन सर्वसिद्धं मर्वावद्धं प्रति वसिष्ठादिप्रशंसा

वसिष्ठस्सर्वसिद्धेन तुष्टः स्वाऽऽवासमागमत् ।
किञ्चित्कालानन्तरं तं वसिष्ठो वाक्यमब्रवीत ॥ ९४

'गच्छ विप्र! स्वकं ग्रामं धनवत्स्वगृहं व्रज ।
वेङ्कटेशप्रसादेन धनधान्यादिकं बहु ॥ ९५
स्नानदानजपादीनि विप्रकर्माणि चाऽचर ।
महत्सु पूजां कुर्वाणो भोजयन् ब्राह्मणानपि ॥ ९६
वेङ्कटेशेत्यभिवदन् पुत्रपौत्रैः सुखी भव' ।
इत्युक्तः स वसिष्ठेन नत्वा तत्पादपङ्कजम् ॥ ९७
स्वग्राममगत् सिद्धः सर्वैरभ्युद्गतोऽभवत ।
'सर्वसिद्ध! भवान् धन्यो वेङ्कटेशकृपानिधिः ॥ ९८
वसिष्ठस्य प्रसादेन त्वत्समः पुरुषो न हि ।
एवं सम्पूजितः सर्वैः ब्राह्मणक्षत्रियादिभिः ॥ ९९
धनधान्ययुतः सपुत्रपौत्रः
स सदाचारयुतः सदानधर्मैः ।
अथ वेङ्कटनायकेति जल्पन्
अवनौ ब्राह्मणपुङ्गवो बभूव ॥ १००
एवं सत्सङ्गमहिमा त्वेवं वेङ्कटवैभवः ।
एवं तुम्बुरुतीर्थस्य महिमा लोकसम्मतः ॥ १०१
इमं प्रसङ्गं यो विद्वान् वेङ्कटाचलवैभवम् ।
मीनमासे पूर्णिमायां पठते जनसंसदि ॥ १०२
वक्तुश्च भक्त्या श्रोतॄणां वाञ्छितानि ददात्यसौ ।
यस्तु वेङ्कटमाहात्म्यकथाकथनकोविदः ।
विष्णवंशं तं प्रशंसन्ति व्यासाद्या मुनयस्तथा ॥ १०३

सूतः—

वेङ्कटाचलमाहात्म्यं श्रुतं वा पावनं द्विजाः! ।
यस्मिञ्छ्रुतेऽन्यमाहात्म्यश्रमणेच्छा न जायते ॥ १०४

नास्ति तुम्बुरुतीर्थस्य समं पापप्रणाशनम् ।
तन्मीनपौर्णमास्यांश्चेत् सर्वपुण्योत्तमोत्तमम् ॥ १०५

इति श्रीब्रह्मोत्तरखण्डे श्रीवेङ्कटाचलमाहात्म्ये तीर्थमाहात्म्ये
घोणतीर्थमाहात्म्यवर्णनं नाम
पञ्चाशत्तमोऽध्यायः ।

---

अथ एकपञ्चाशत्तमोऽध्यायः

—:*:—

## तुम्बरोर्नारदशापेन घोणतीर्थप्राप्तिः

सूत! सर्वार्थविज्ञानविचक्षण! महामते! ।
किञ्चित् ब्रूमो वयं सर्वे तन्नो वक्तुं त्वमर्हसि ॥ १
तुम्बुरुर्नाम भगवान् कस्माद्वेङ्कटपर्वते ।
तपस्तप्त्वा क्वचित्तीर्थे लब्धवान् किं फलं वद ॥ २
कस्माद्वा घोणतीर्थस्य स्वाख्यां प्रार्थितवानभूत् ।
किमुद्दिश्य तपस्तप्तं अस्माकं वक्तुमर्हसि ॥ ३
वेङ्कटेशं नमस्कृत्य कथां कल्मषनाशिनीम् ।
प्रवदामि मुदा युक्ताः शृणुत ब्रह्मवादिनः! ॥ ४
कदाचिद्गगने यान्तौ वीणावादनतत्परौ ।
ध्यायन्तौ हरिमेकाग्रौ मुनी तुम्बुरुनारदौ ॥ ५
आकाशमार्गे देवर्षिः तुम्बुरुं वीक्ष्य विस्मितः ।
सर्वरत्नमयीं वीणां दधतं वाक्यमब्रवीत् ॥ ६
'तुम्बुरो! तव वीणेयं मद्वीणातो विराजते ।
केनैवं शोभते वीणा पूर्वमेवं न शोभिता ॥ ७

सत्यं वदे' ति पृष्टोऽसौ तुम्बुरुर्वाक्यमब्रवीत् ।
'प्राचीनबर्हिषं भूपं गत्वाऽहं स्तुतिमुक्तवान् ॥ ८
सन्तुष्टस्तेन मे वीणमेवं राजा त्वकारयत्' ।
नारदस्तद्वचः श्रुत्वा कोपाऽविष्टो जगाद ह ॥ ९

नारदः—

'नरस्तुतिः कृता साधो! लोके सत्सु विनिन्दिता ।
तस्मान्मत्सङ्गयोग्यत्वं न पश्याम्यधमे त्वयि ॥ १०
सर्वेषामपि लोकानां नायकं केशवं विना ।
नरं न स्तोत्रयाम्येव तादृगसि हरिप्रियः ॥ ११
मया सह न ते सख्यं उचितं तन्नरस्तुतेः ।
अवाक्छिराः पत त्वं तु खेचरत्वं न ते भवेत्' ॥ १२
इत्युक्तमात्रे मुनिना नारदेन तथैव सः ।
आवाक्छराः पपाताऽशु वेङ्कटाचलमध्यतः ॥ १३
घोणतीर्थे क्वचिद्भागे मनुष्यादिविवर्जिते ।
सिंहशार्दूलसहिते भीरूणां भयदायिनि ॥ १४
पतन्नपि हरिं ध्यायन् प्रणतः प्रीतिकारकम् ।
न व्यथामाप्तवान् घोणमध्यं केवलमाप्तवान् ॥ १५

## घोणतीर्थे भगवद्ध्यानपूर्वकतुम्बुरुकृततपःप्रकारः

ततो दृष्ट्वा तु तं घोणं दिशः समवलोक्य च ।
हरिभक्त्या धीरबुद्धिः एवं चिन्तां चकार ह ॥ १६
'वेङ्कटाद्रेर्मध्यदेशो नान्यो भवितिमर्हति ।
तस्मादेतद्वेङ्कटेशो मां रक्षतु सदा हरिः ॥ १७
गतिर्वेङ्कटनाथो मे नान्या गति' रिति ब्रुवन् ।
सशङ्खचक्रं लक्ष्मीशं तं ध्यातुमुपचक्रमे ॥ १८

स्नात्वा तीर्थे तत्र भक्त्या
प्राङ्मुखस्तूपविश्य च ।
प्राणायामशतं कृत्वा
तुम्बुरुर्ध्यानमास्थितः ॥ १९
पीताम्बरं पीनभुजाचतुष्कं
भुजान्तरालस्थितलक्ष्मियुक्तम् ।
प्रसन्नवक्त्रं प्रकटीभवत्कृपा-
पाथोधिनेत्रं परमं पुमांसम् ॥ २०
अनन्तपक्षीशचमूपमुख्य-
भक्तैः समेतं परमर्षिसेव्यम् ।
देवादिदेवं दितिजान्तचक्रं
सेवापराणां सुलभं निधानम् ॥ २१
हृदम्बुजे हृद्यवपुर्धरं तं
सञ्चिन्तयन् वेङ्कटशैलनाथम् ।
समुच्चरंस्त्र्यक्षरमर्थयुक्तं
निवातनिष्कम्प इव स्थितोऽभूत् ॥ २२

## तुम्बुरुतपस्तुष्टभगवदाविर्भावादिः

एवं तु नियमेनैव संवत्सरमुवास ह ।
ततः फाल्गुनमासे तु पौर्णमास्यां महातिथौ ॥ २३
प्रादुर्बभूव भगवांस्तत्र वेङ्कटनायकः ।
पीताम्बरो दिव्यगन्धस्रग्भूषाभिरलङ्कृतः ॥ २४
राकाचन्द्रोपममुखो राजीवाऽयतलोचनः ।
लक्ष्म्या सर्वजगन्मात्रा रमणीयभुजान्तरः ।
समस्तवाद्यनिनदसङ्घुष्टगिरिकन्दरः ॥ २५

श्रीभगवान्—

'तुम्बुरो! तुम्बुरो! वत्स! मां पश्य किमपेक्षसे'।
इति ब्रुवन्तं तमृषिः ददर्शोन्मील्य चक्षुषी ॥ २६
साष्टाङ्गं तं प्रणम्याथ देवदेवं ददर्श ह।
तस्य पार्श्वे सेवमानं ददर्शानन्तमव्ययम् ॥ २७
गरुडं गिरिसङ्काशं विष्वक्सेनं महाप्रभुम्।
अगस्त्यमृषिमुख्यञ्च देवपादावलोकिनम् ॥ २८
अन्यान् द्वैपायनादींश्च ऋषीनञ्जलिबन्धनान्।
सनकाद्यान् योगिनश्च वैखानसमुनीनपि ॥ २९
शुकमानसपुत्रांश्च शुकञ्च मुनिसत्तमम्।
देवगन्धर्वसिद्धांश्च विश्वावसुमुखानपि ॥ ३०
यक्षान् किंपुरुषांश्चैव किन्नरोरगनायकान्।
जय देव! जगन्नाथ! सावधान मनोजय! ॥ ३१
इति मेघरवोदग्रान् वेत्रपाणींश्च कांश्चन।
आब्रह्मलोकादायातान् अप्सरोगणमागतम् ॥ ३२

आहूयाशेषलोकं तं
आह शेषगिरीश्वरः।
'भोभोः! सर्वेऽपि तीर्थेऽस्मिन्
स्नानं कुरुत मा चिरम् ॥ ३३

समस्तपापहरणे सर्वश्रेयोविधायिनि'।
इति वाक्यं समाकर्ण्य भक्त्या सङ्कल्प्य वाग्यताः ॥ ३४
'गोविन्दे'ति ततः स्नात्वा तीरमारुरुहुश्च ते।
शुद्धहृत्तुम्बुरुश्चापि स्नात्वा तैः सहितस्तथा ॥ ३५

भगवत्सन्निधिं प्राप्ताः स्तोत्रं चक्रुः पृथक् पृथक् ।
'जय सर्वगुहावास ! लोक रक्षामणे ! हरे ! ॥ ३६
भक्तार्तपालनपर ! प्रणतार्तिहर ! प्रभो ! ।
लक्ष्मीनाथ ! जयानन्त ! रक्षिताशेषभूसुर ! ।
पुनीहि सकलाँल्लोकान् पालय त्वं कृपालय !' ॥ ३७

'वन्दे सदा वेङ्कटशैलनाथं
त्वामेव मे पापहरो भव त्वम् ।
तीर्थानुभावञ्च तवानुभावं
श्रोतुं ममेच्छा परिवर्धते हि' ॥ ३८

## भगवदाज्ञयाऽगस्त्यवर्णिततुम्बुरुतीर्थमाहात्म्यम्

इति स्तुतो वेङ्कटेशः कुम्भसम्भवमब्रवीत् ।
'एतेषामद्य सर्वेषां वेङ्कटाचलवैभवम् ॥ ३९
माहात्म्यमपि तीर्थस्य वद किञ्चिन्महामते' ।
इत्युक्तो देवदेवेन तत्रागस्त्योऽब्रवीदिदम् ॥ ४०
पुण्योऽयं वेङ्कटगिरिः सर्वपुण्यस्थलेष्वपि ।
समस्ततीर्थान्यत्रैवं पुण्यानि निवसन्ति हि ॥ ४१
भक्तापराधान् सोढ्वैव वेङ्कटेशो दयापरः ।
रक्षत्येव ततः सोऽयं सेव्यः श्रीवेङ्कटेश्वरः ॥ ४२
स्नातानामत्र तत्तीर्थे सर्वपापक्षयो भवेत् ।
सर्वश्रेयांसि सिद्ध्यन्ति नात्र कार्या विचारणा ॥ ४३

सुवर्णमन्नं ताम्बूलं सुगन्धं शीतलं जलम् ।
अत्र दत्त्वा नरः पूतः सर्वान् कामानवाप्नुयात् ॥ ४४

तुम्बुरुः—

'भगवन्! मम नाम्नैव तीर्थमेतत् प्रसिद्ध्यतु' ।
'तथाऽस्त्वि'त्युक्तवान् विष्णुः तुम्बुरुं पुनरब्रवीत् ॥ ४५

श्रीभगवान्—

'नारदेन सहैव त्वं पूतो मत्कीर्तनं कुरु ।
येऽत्र फल्गुनराकायां स्नानदानादि कुर्वते ॥ ४६
इह लोके परत्रापि तेषामिष्टं ददाम्यहम्' ।
इत्युक्तास्तुम्बुरुमुखाः तुष्टा याता यथागतम् ॥ ४७

इति श्रीब्रह्मोत्तरखण्डे श्रीवेङ्कटाचलमाहात्म्ये तीर्थमाहात्म्ये
तुम्बुरुतीर्थमाहात्म्यं नाम एक-
पञ्चाशत्तमोऽध्यायः ।



श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रियै पद्मावत्यै नमः

श्रीमते विष्वक्सेनाय नमः

# श्रीवेङ्कटाचलमाहात्म्यम्

(श्रीस्कान्दपुराणान्तर्गतम्)

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥

हरिः ॐ

## प्रथमोऽध्यायः

### काश्यपस्य स्वामिपुष्करिणीस्नानेन महापातकनाशः

श्रीसूतः—

ॐ अथातः सम्प्रवक्ष्यामि स्वामिपुष्करिणीं शुभाम् ।
लक्ष्यीकृत्य कथामेकां पवित्रां द्विजसत्तमाः! ॥ १
काश्यपाख्यो द्विजः पूर्वं तस्मिंस्तीर्थवरे शुभे ।
स्नात्वाऽतिमहतः पापात् विमुक्तो नरकप्रदात् ॥ २

ऋषयः—

मुने! काश्यपनामासौ अकरोत् किं हि पातकम् ।
स्नात्वा तीर्थवरे ह्यत्र यस्मान्मुक्तोऽभवत्क्षणात् ॥ ३

एतन्नः श्रद्दधानानां ब्रूहि सूत! कृपाबलात् ।
त्वद्वचोऽमृततृप्तानां न पिपासाऽपि विद्यते ॥ ४

श्रीसूतः—

श्रीस्वामिपुष्करिण्याश्च माहात्म्यप्रतिपादकम् ।
इतिहासं प्रवक्ष्यामि पठतां पापनाशनम् ॥ ५

## परीक्षित्वृत्तान्तः

अभिमन्युसुतो राजा परीक्षिन्नाम नामतः ।
अध्यास्त हास्तिनपुरं पालयन् धर्मतो महीम् ॥ ६
स राजा जातु विपिने चचार मृगयारतः ।
षष्टिवर्षवया भूपः क्षुत्तृष्णापरिपीडितः ॥ ७
नष्टमेकं स विपिने मार्गयन् मृगमादरात् ।
ध्यानारूढं मुनिं दृष्ट्वा प्राह भूपालकोत्तमः ॥ ८
'मया बाणेन विपिने मृगो विद्धोऽधुना मुने! ।
दृष्टः स किं? त्वया विद्वन्! विद्रुतो भयकातरः ॥ ९
समाधिनिष्ठो मौनित्वात् न किञ्चिदपि सोऽब्रवीत् ।
ततो धनुरटन्या स स्कन्धे तस्य महामुनेः! ॥ १०
निधाय मृतसर्पन्तु कुपितः स्वपुरं ययौ ।
मुनेस्तस्य सुतः कश्चित् शृङ्गी नाम बभूव वै ॥ ११
सखा तस्य कृशाख्योऽभूत् शृङ्गिणो द्विजसत्तमः ।
सखाऽयं शृङ्गिणं प्राह कृशाख्यः स सखा ततः ॥ १२
'पिता तव मृतं सर्पं स्कन्धेन वहतेऽधुना ।
मा भूद्दर्पस्तव सखे! मा क्रुद्धयस्त्वमिदं वृथा' ॥ १३
सोऽभवत्कुपितः शृङ्गी दित्सुः शापं नृपाय वै ।
'मत्ताते शवसर्पं यो न्यस्तवान् मूढचेतनः ॥ १४

स सप्तरात्रात् म्रियतां सन्दष्टस्तक्षकाहिना' ।
शशापैवं मुनिसुतः सौभद्रेयं परीक्षितम् ॥ १५
शमीकाख्यः पिता तस्य शप्तं श्रुत्वा सुतेन तम् ।
नृपं प्रोवाच तनयं शृङ्गिणं मुनिपुङ्गवः ॥ १६
'रक्षकं सर्वलोकानां नृपं किं शप्तवानसि ? ।
अराजके वयं लोके स्थास्यामः कथमञ्जसा ॥ १७
क्रोधेन पातकं भूयात् दयया प्राप्यते सुखम् ।
यः समुत्पादितं कोपं क्षमयैव निरस्यति ॥ १८
इह लोके परत्रासौ अत्यन्तं सुखमश्नुते ।
क्षमायुक्ता हि पुरुषा लभन्ते श्रेय उत्तमम्' ॥ १९
ततः शमीकः स्वं शिष्यं प्राह गौरमुखाभिधम् ।
'भो गौरमुख! गत्वा त्वं वद भूपं परीक्षितम् ॥ २०
इमं शापं मत्सुतोक्तं तक्षकाधिपदंशनम् ।
पुनरायाहि शीघ्रं त्वं मत्समीपं महामते!' ॥ २१
एवमुक्तः शमीकेन ययौ गौरमुखो नृपम् ।
समेत्य चाब्रवीद्भूपं सौभद्रेयं परीक्षितम् ॥ २२
'दृष्ट्वा सर्पं पितुः स्कन्धे त्वया विनिहितं मृतम् ।
शमीकस्य सुतः शृङ्गी शशाप त्वां रुषाऽन्वितः ॥ २३
एतद्दिनात् सप्तमेऽह्नि तक्षकेण महाहिना ।
दष्टो विषाग्निना दग्धो भूयादाश्वभिमन्युजः ॥ २४
एवं शशाप त्वां राजन्! शृङ्गी तस्य मुनेः सुतः ।
एतद्वक्तुं पिता तस्य प्राहिणोन्मां त्वदन्तिकम्' ॥ २५
इतीरयित्वा तं भूपं आशु गौरमुखो ययौ ।
गते गौरमुखे पश्चात् राजा शोकपरायणः ॥ २६

अभ्रंलिहमथोत्तुङ्गं एकस्तम्भसुविस्तृतम् ।
मध्येगङ्गं व्यतनुत मण्डपं नृपपुङ्गवः ॥ २७
महागारुडमन्त्रज्ञैः ओषधिज्ञैश्चिकित्सकैः ।
तक्षकस्य विषं हन्तुं यत्नं कुर्वन् समाहितः ॥ २८
अनेकदेवब्रह्मर्षिराजर्षिप्रवरान्वितः ।
आस्ते तस्मिन् नृपस्तुङ्गे मण्डपे विष्णुभक्तिमान् ॥ २९
तस्मिन्नवसरे विप्रः काश्यपो मान्त्रिकोत्तमः ।
राजानं रक्षितुं प्रायात् तक्षकस्य महाविषात् ॥ ३०
सप्तमेऽहनि विप्रेन्द्रो दरिद्रो धनकामुकः ।
अत्रान्तरे तक्षकोऽपि विप्ररूपी समाययौ ॥ ३१
मध्येमार्गं विलोक्याथ काश्यपं प्रत्यभाषत ।
'ब्राह्मण! त्वं कुत्र यासि? वद मेऽद्य महामुने' ॥ ३२
इति पृष्टस्तदाऽवादीत् काश्यपस्तक्षकं द्विजः ।
परीक्षितं महाराजं तक्षकोऽद्य विषाग्निना ॥ ३३
धक्ष्यते तं शमयितुं तत्समीपमुपैम्यहम्' ।
इत्युक्तः स च तं विप्रं तक्षकः पुनरब्रवीत् ॥ ३४
'तक्षकोऽहं द्विजश्रेष्ठ! मया दष्टश्चिकित्सितुम् ।
न शक्योऽब्दशतेनापि महामन्त्रायुतैरपि ॥ ३५
चिकित्सितुं चेन्मद्दष्टं शक्तिरस्ति तवाधुना ।
अनेकयोजनोच्छ्रायं दशाम्युज्जीवय द्रुमम् ॥ ३६
ततो भवान् समर्थो हीत्येवं मे भाति हे द्विज!'।
इतीरयित्वा तं वृक्षं अदशत्तक्षकस्तदा ॥ ३७
अभवद्भस्मसात् सोऽपि वृक्षोऽत्यन्तसमुच्छ्रितः ।
पूर्वमेव नरः कश्चित् तं वृक्षमधिरूढवान् ॥ ३८

तक्षकस्य विषोल्काभिः सोऽपि दग्धोऽभवत्तदा ।
तन्नरं न विजज्ञाते तौ च काश्यपतक्षकौ ॥ ३९

काश्यपः प्रतिजज्ञेऽथ तक्षकस्यापि शृण्वतः ।
'मन्मन्त्रशक्तिं पश्यन्तु सर्वे विप्रादयोऽधुना' ॥ ४०

इतीरयित्वा तं वृक्षं भस्मीभूतं विषाग्निना ।
आजीवयन् मन्त्रशक्त्या काश्यपो मान्त्रिकोत्तमः ॥ ४१

स नरस्तेन वृक्षेण साकमुज्जीवितोऽभवत् ।
अथाब्रवीत्तक्षकस्तं काश्यपं मन्त्रकोविदम् ॥ ४२

'यथा न मुनिवाक् मिथ्या भवेदेवं कुरु द्विज ।
यत्ते राजा धनं दद्यात् ततोऽपि द्विगुणं धनम् ॥ ४३

ददाम्यहं निवर्तस्व शीघ्रमेव द्विजोत्तम!' ।
इत्युक्त्वाऽनर्घरत्नानि तस्मै दत्त्वा स तक्षकः ॥ ४४

न्यवर्तयत् काश्यपं तं ब्राह्मणं मन्त्रकोविदम् ।
अल्पायुषं नृपं मत्वा ज्ञानदृष्ट्या स काश्यपः ॥ ४५

स्वाश्रमं प्रययौ तूष्णीं लब्धरत्नश्च तक्षकात् ।
सोऽब्रवीत्तक्षकः सर्पान् सर्वानाहूय तत्क्षणे ॥ ४६

'यूयं तं नृपतिं प्राप्य मुनीनां वेषधारिणः ।
उपहारफलान्याशु प्रयच्छथ परीक्षिते' ॥ ४७

'तथे' त्युक्त्वा सर्वसर्पाः ददू राज्ञे फलान्यमी ।
तक्षकोऽपि तथा तत्र कस्मिंश्चिद्बदरीफले ।
कृमिवेषधरो भूत्वा व्यतिष्ठद्दंशितुं नृपम् ॥ ४८

अथ राजा प्रदत्तानि सर्वैर्ब्राह्मणरूपकैः ।
परीक्षित् मन्त्रिवृद्धेभ्यो दत्त्वा सर्वफलान्यपि ॥ ४९

कौतूहलेन जग्राह स्थूलमेकं करे फलम् ।
तस्मिन्नवसरे सूर्योऽप्यस्ताचलमगाहत ॥ ५०
'मिथ्या ऋषिवचो मा भूदि' ति तत्रत्यमानवाः ।
अन्योऽन्यमवदन्त्सर्वे ब्राह्मणाश्च नृपास्तदा ॥ ५१
एवं वदत्सु सर्वेषु फले तस्मिन् अदृश्यत ।
साधु रक्तः कृमिः सर्वैः राज्ञा चापि परीक्षिता ॥ ५२
'अयं किं मां दशेदद्य कृमि' रित्युक्तवान् नृपः ।
निदधे तत्फलं कण्ठे सकृमि द्विजसत्तमाः ॥ ५३
तक्षकोऽस्मिंस्थितः कण्ठे कृमिरूपी फले तदा ।
निर्गत्य तत्फलादाशु नृपदेहमवेष्टयत् ॥ ५४
तक्षकावेष्टिते भूपे पार्श्वस्था दुद्रुवुर्भयात् ।
अनन्तरं नृपो विप्राः! तक्षकस्य विषाग्निना ॥ ५५
दग्धोऽभूद्ब्रह्मसादाशु सप्रासादो बलीयसा ।
कृत्वौर्ध्वदेहिकं तस्य नृपस्य स पुरोहितः ॥ ५६
मन्त्रिणस्तत्सुतं राज्ये जनमेजयनामकम् ।
राजानमभ्यषिञ्चन् वै जगद्रक्षणवाञ्छया ॥ ५७
तक्षकाद्रक्षितुं भूपं आयातः काश्यपाभिधः ।
यो ब्राह्मणो मुनिश्रेष्ठः स सर्वैर्निन्दितो जनैः ॥ ५८
बभ्राम सकलान् देशान् शिष्टैः सर्वैश्च दूषितः ।
अवस्थानं न लेभे स ग्रामे वाप्याश्रमेऽपि वा ॥ ५९
यान्यान् देशानसौ यातः तत्र तत्र महाजनैः ।
तत्तद्देशान्निरस्तः सन् शाकल्यं शरणं ययौ ॥ ६०
प्रणम्य शाकल्यमुनिं काश्यपो निन्दितो जनैः ।
इदं विज्ञापयामास शाकल्याय महात्मने ॥ ६१

काश्यपः— 'भगवन्! सर्वधर्मज्ञ! शाकल्य! हरिवल्लभ! ।
मुनयो ब्राह्मणाश्चान्ये मां निन्दन्ति सुहृज्जनाः ॥ ६२
नास्याहं कारणं जाने किं मां निन्दन्ति मानवाः ।
ब्रह्महत्या सुरापानं गुरुस्त्रीगमनं तथा ॥ ६३
स्तेयं संसर्गदोषो वा मया नाऽचरितं क्वचित् ।
अन्यान्यपि च पापानि न कृतानि मया मुने! ॥ ६४
तथाऽपि निन्दन्ति जनाः वृथा मां बान्धवादयः ।
जानासि चेत् त्वं शाकल्य! मया दोषं कृतं वद!' ॥ ६५
उक्तोऽथ काश्यपेनैव शाकल्याख्यो महामुनिः ।
क्षणं ध्यात्वा बभाषे तं काश्यपं द्विजसत्तमः ॥ ६६

## शाकल्योक्तधर्माः

शाकल्यः—'परीक्षितं महाराजं तक्षकाद्रक्षितुं भवान् ।
आयासीदर्धमार्गे तु तक्षकेण निवारितः ॥ ६७
चिकित्सितुं समर्थोऽपि विषरोगादिपीडितम् ।
यो न रक्षति लोकेऽस्मिन् तमाहुर्ब्रह्मघातुकम् ॥ ६८
क्रोधात्कामाद्भयाल्लोभात् मात्सर्यान्मोहतोऽपि वा ।
यो न रक्षति विप्रेन्द्र! विषरोगातुरं नरम् ॥ ६९
ब्रह्महा च सुरापी वा स्तेयी च गुरुतल्पगः ।
संसर्गदोषदुष्टश्च नापि तस्य विनिष्कृतिः ॥ ७०
कन्याविक्रयिणश्चापि हयविक्रयिणस्तथा ।
कृतघ्नस्याऽपि शास्त्रेषु प्रायश्चित्तं न विद्यते ॥ ७१
विषरोगातुरं यस्तु समर्थोऽपि न रक्षति ।
न तस्य निष्कृतिः प्रोक्ता प्रायश्चित्तायुतैरपि ॥ ७२

न तेन सह पङ्क्तौ च भुञ्जीत सुकृती जनः ।
न तेन सह भाषेत न पश्येत्तं नरं क्वचित् ॥ ७३
तत्संभाषणमात्रेण महापातकभाग्भवेत् ।
परीक्षित् तु महाराजः पुण्यश्लोकश्च धार्मिकः ॥ ७४
विष्णुभक्तो महायोगी चातुर्वर्ण्यस्य रक्षिता ।
व्यासपुत्राद्धरिकथां श्रुतवान् भक्तिपूर्वकम् ॥ ७५
अरक्षित्वा नृपं तं तु वचसा तक्षकस्य यत् ।
निवृत्तस्तेन विप्रेन्द्रैः बान्धवैरपि दूष्यसे ॥ ७६
स परीक्षिन्महाराजो यद्यपि क्षणजीवितः ।
तथाऽपि यावन्मरणं बुधैः कार्यं चिकित्सितम् ॥ ७७
'यावत्कण्ठगताः प्राणाः मुमूर्षोर्मानवस्य हि ।
तावच्चिकित्सा कर्तव्या कालस्य कुटिला गतिः' ॥ ७८
इति प्राहुः पुरा श्लोकं भिषग्विद्याब्धिपारगाः ।
ततश्चिकित्साशक्तोऽपि यस्मादकृतभेषजः ॥ ७९
अर्धमार्गनिवृत्तश्च तेन त्वं गर्हितो ह्यसि' ।
शाकल्येनैवमुदितः काश्यपः प्रत्यभाषत ॥ ८०

काश्यपः—

'ममैतद्दोषशान्त्यर्थं उपायं वद सुव्रत! ।
येन मां प्रतिगृह्णीयुः बान्धवाः ससुहृज्जनाः ॥ ८१
कृपां मयि कुरुष्व त्वं शाकल्य! हरिवल्लभ!'
काश्यपेनैवमुक्तस्तु शाकल्योऽपि मुनीश्वरः ।
क्षणं ध्यात्वा जगादैवं काश्यपं कृपया तदा ॥ ८२
'अस्य पापस्य शान्त्यर्थं उपायं प्रवदामि ते ।
तत्कर्तव्यं त्वया शीघ्रं विलम्बं मा कृथा द्विज! ॥ ८३

सुवर्णमुखरीतीरे लक्ष्मीपतिनिवासभूः ।
वेङ्कटाद्रिरिति ख्यातः सर्वलोकेषु पूजितः ॥ ८४
तस्मिञ्छेषगिरौ पुण्ये सुरासुरनमस्कृते ।
ब्रह्महत्यासुरापानस्वर्णस्तेयादिनाशके ॥ ८५
स्वामिपुष्करिणी चेति सर्वपापप्रणोदिनी ।
उत्तरे श्रीनिवासस्य वर्तते मङ्गलप्रदा ॥ ८६
तं गत्वा वेङ्कटं शैलं स्वामिपुष्करिणीं शुभाम् ।
स्नात्वा सङ्कल्पपूर्वं तु वराहस्वामिनं हरिम् ॥ ८७
सेवित्वा पश्चिमे तीरे निर्गत्य हरिमन्दिरम् ।
गत्वा तत्र विधानेन स्वर्णाचलनिवासिनम् ॥ ८८
श्रीनिवासं परं देवं भक्तानामभयप्रदम् ।
शङ्खचक्रधरं देवं वनमालाविभूषितम् ॥ ८९
दृष्ट्वा निर्धूतपापोऽसि संशयं मा कृथा द्विज!' ।
शाकल्येनैवमुक्तस्तु काश्यपो मुनिपुङ्गवः ॥ ९०
गत्वा वेङ्कटशैलेन्द्रं सुरासुरनमस्कृतम् ।
पुष्करिण्यां शुभायान्तु स्नातो नियमपूर्वकम् ॥ ९१
स्वस्थोऽभूत्काश्यपो विप्रो भिषग्विद्याब्धिपारगः ।
सर्वे बन्धुजना विप्राः काश्यपं ब्राह्मणोत्तमम् ॥ ९२
पूजयित्वा विधानेन पूज्योऽसि न च संशयः ।
एवं वः कथितं विप्रा वेङ्कटाचलवैभवम् ।
यः शृणोति नरो भक्त्या विष्णुलोके महीयते ॥ ९३

श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटाचलस्थस्वामिपुष्करिणी-
माहात्म्ये काश्यपदोषनिवृत्तिर्नाम प्रथमोऽध्यायः ।

---

## अथ द्वितीयोऽध्यायः



### स्वामिपुष्करिणीस्नानात् तामिस्रादिनरकनिस्तारः

ऋषयः—

सूत! सर्वार्थतत्त्वज्ञ! वेदवेदाङ्गपारग! ।
श्रीस्वामिपुष्करिण्याश्च वैभवं वद नः प्रभो! ।
यस्याः स्मरणमात्रेण मुक्तः स्यान्मानवो भुवि ॥ १

श्रीसूतः—

स्वामितीर्थं प्रशंसन्ति स्नान्ति वा कथयन्ति ये ।
अष्टाविंशतिभेदांस्ते नरकान्नोपभुञ्जते ॥ २
तामिस्रमन्धतामिस्रं महारौरवरौरवौ ।
कुम्भीपाकं कालसूत्रं असिपत्रवनं तथा ॥ ३
कृमिभक्षोऽन्धकूपश्च सन्दंशः शाल्मली तथा ।
लालाभक्षो ह्यवीचिश्च सारमेयादनं तथा ॥ ४
तथैव वज्रकणकः क्षारकर्दमपातनम् ।
रक्षोगणाशनञ्चापि शूलप्रोतनिरोधनम् ॥ ५
तिरोधनाभिधं विप्रा! तथा सूचीमुखाभिधम् ।
पूयशोणितभक्षश्च विषाग्निपरिपीडनम् ॥ ६
अष्टाविंशतिसङ्ख्यातं एतन्नरकसञ्चयम् ।
न याति मनुजो विप्राः! स्वामितीर्थनिमज्जनात् ॥ ७
वित्तापत्यकलत्राणां योऽन्येषामपहारकः ।
स कालपाशबद्धोऽयं यमदूतैर्भयानकैः ॥ ८
तामिस्रे नरके घोरे पात्यते बहुवत्सरम् ।
स्नाति चेत्स्वामितीर्थे स तस्मिन्नाऽसौ निपात्यते ॥ ९

मातरं पितरं विप्रान् यो द्वेष्टि पुरुषाधमः ।
स कालसूत्रनरके विस्तृतायुतयोजने ॥ १०
अधस्तादग्निसन्तप्ते उपर्यर्कमरीचिभिः ।
खले ताम्रमये विप्राः! पात्यते क्षुधयाऽर्दितः ॥ ११
स्नाति चेत्पुष्करिण्यां वै तस्मिन्नाऽसौ निपात्यते ।
यो वेदमार्गमुल्लङ्घ्य वर्तते कुपथे नरः ॥ १२
सोऽसिपत्रवने घोरे पात्यते यमकिङ्करैः ।
स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ॥ १३
योऽश्नाति पङ्क्तिभेदेन पक्वं सूपादिकं नरः ।
अकृत्वा पञ्चयज्ञान्वा भुङ्क्ते मोहेन स द्विजाः ॥ १४
पात्यतेऽयं यमभटैः नरके कृमिभोजने ।
भक्ष्यमाणः कृमिशतैः भक्षयन् कृमिसञ्चयान् ॥ १५
स्वयञ्च कृमिभूतस्सन् तिष्ठेद्यावदघक्षयम् ।
स्नाति चेत्स्वामितीर्थे वै तस्मिन्नाऽसौ निपात्यते ॥ १६
यो हरेद्विप्रवित्तानि स्नेहेन बलतोऽपि वा ।
अन्येषामपि वित्तानि राजा तत्पुरुषोऽपि वा ॥ १७
अयोमयाग्निकुण्डेषु सन्दंशैः सोऽपि पीडितः ।
सन्दंशे नरके घोरे पात्यते यमपूरुषैः ॥ १८
स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ।
अगम्यां योऽभिगच्छेत स्त्रियं वै पुरुषाधमः ॥ १९
अगम्यं पुरुषं योषित् अभिगच्छेत वा द्विजाः! ।
तावयोमयनारीञ्च पुरुषञ्चाप्ययोमयम् ॥ २०
तप्तावालिङ्ग्य तिष्ठन्तौ यावच्चन्द्रदिवाकरम् ।
सूच्याख्ये नरके घोरे पात्यते यमकिङ्करैः ॥ २१

स्नाति चेत्स्वामितीर्थे च तस्मिन्नाऽसौ निपात्यते ।
बाधते सर्वजन्तून् यो नानोपायैरुपद्रवैः ॥ २२
शाल्मलीनरके घोरे पात्यते बहुकण्टके ।
स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ॥ २३
राजा वा राजभृत्यो वा यः पाषण्डमनुद्रुतः ।
भेदको धर्मसेतूनां वैतरण्यां निपात्यते ॥ २४
स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ।
वृषलीसङ्गदुष्टो वा शौचाद्याचारवर्जितः ॥ २५
त्यक्तलज्जस्त्यक्तवेदः पशुचर्यारतः सदा ।
स पूयविष्ठामूत्रासृक्श्लेष्मपित्तादिपूरिते ॥ २६
अतिबीभत्सनरके पात्यते यमकिङ्करैः ।
स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ॥ २७
यः श्वभिर्मृगयुर्वन्यान् बाणैर्वा बाधते मृगान् ।
स विद्ध्यमानो बाणौघैः परत्र यमकिङ्करैः ॥ २८
प्राणरोधाख्यनरके पात्यते यमकिङ्करैः ।
स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ॥ २९
दाम्भिको यः पशून् यज्ञे विध्यनुष्ठानवर्जितः ।
हन्त्यसौ परलोकेषु वैशसे नरके द्विजाः ॥ ३०
कर्त्यमानो यमभटैः पात्यते यमकिङ्करैः ।
स्नाति चेत्पुष्करिण्यां वै तस्मिन्नाऽसौ निपात्यते ॥ ३१
आत्मभार्यां सवर्णां यो रेतः पाययते यदि ।
परत्र रेतःपायी स रेतःकुण्डे निपात्यते ॥ ३२
स्नाति चेत्पुष्करिण्यां वै तस्मिन्नाऽसौ निपात्यते ।
यो दस्युर्मार्गमाश्रित्य गरदो ग्रामदाहकः ॥ ३३

वणिग्द्रव्यापहारी च स परत्र द्विजोत्तमाः! ।
वज्रदंष्ट्राभिधे घोरे नरके पात्यते चिरम् ॥ ३४
स्नाति चेत्स्वामितीर्थे तु तस्मिन्नाऽसौ निपात्यते ।
विद्यन्ते यानि चान्यानि नरकाणि परत्र वै ॥ ३५
तानि नाऽऽप्नोति मनुजः स्वामितीर्थनिमज्जनात् ।
पुष्करिण्यां सकृत्स्नानात् अश्वमेधफलं लभेत् ॥ ३६
आत्मविद्या भवेत्साक्षात् मुक्तिश्चापि चतुर्विधा ।
न पापे रमते बुद्धिः न भवेद्दुःखमेव वा ॥ ३७
तुलापुरुषदानेन यत्फलं लभते नरैः ।
तत्फलं लभ्यते पुम्भिः स्वामितीर्थनिमज्जनात् ॥ ३८
गोसहस्रप्रदानेन यत्पुण्यं हि भवेन्नृणाम् ।
तत्पुण्यं लभते मर्त्यः स्वमितीर्थनिमज्जनात् ॥ ३९
धर्मार्थकाममोक्षाणां यं यमिच्छति पूरुषः ।
तं तं सद्यः समाप्नोति स्वामितीर्थनिमज्जनात् ॥ ४०
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
सद्यः पूतो भवेद्विप्राः! स्वामितीर्थनिमज्जनात् ॥ ४१
प्रज्ञा लक्ष्मीर्यशः सम्पत् ज्ञानं धर्मो विरक्तता ।
मनःशुद्धिर्भवेन्नॄणां स्वामितीर्थनिषेवणात् ॥ ४२
ब्रह्महत्यायुतञ्चापि सुरापानायुतं तथा ।
अयुतं गुरुदाराणां गमनं पापकारिणाम् ॥ ४३
स्तेयायुतं सुवर्णानां तत्संसर्गाश्च कोटिशः ।
शीघ्रं विलयमायान्ति स्वामितीर्थनिमज्जनात् ॥ ४४
ब्रह्महत्यासमानानि सुरापानसमानि च ।
गुरुस्त्रीगमनेनापि यानि तुल्यानि चास्तिकाः! ॥ ४५

सुवर्णस्तेयतुल्यानि तत्संसर्गसमानि च ।
तानि सर्वाणि नश्यन्ति स्वामितीर्थनिमज्जनात् ॥ ४६

## स्वामितीर्थमहिमाऽश्रद्धालूनां महानरकप्राप्तिः

उक्तेष्वेतेषु सन्देहो न कर्तव्यः कदाचन ।
जिह्वाग्रे परशुं तप्तं प्रक्षिपन्ति च किङ्कराः ॥ ४७
अर्थवादमिमं सर्वं ब्रुवन्वै नरकं व्रजेत् ।
सूकरः स हि विज्ञेयः सर्वकर्मबहिष्कृतः ॥ ४८
अहो मौर्ख्यमहो मौर्ख्यं अहो मौर्ख्यं द्विजोत्तमाः! ।
स्वामितीर्थाभिधे तीर्थे सर्वपातकनाशने ॥ ४९
अद्वैतज्ञानदे पुंसां भुक्तिमुक्तिप्रदायिनि ।
इष्टकामप्रदे नित्यं तथैवाज्ञाननाशने ॥ ५०
स्थितेऽपि तद्विहायायं रमतेऽन्यत्र वै जनः ।
अहो मोहस्य माहात्म्यं मया वक्तुं न शक्यते ॥ ५१
स्नातस्य स्वामितीर्थे तु नान्तकाद्भयमस्ति वै ।
स्वामितीर्थञ्च पश्यन्ति तत्र स्नान्ति च ये नराः ॥ ५२
स्तुवन्ति च प्रशंसन्ति स्पृशन्ति च नमन्ति च ।
न पिबन्ति हि ते स्तन्यं मातॄणां द्विजपुङ्गवाः ॥ ५३
एवं यः कथितं विप्राः! स्वामितीर्थस्य वैभवम् ।
भुक्तिमुक्तिप्रदं नृणां सर्वपापनिबर्हणम् ॥ ५४

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीस्वामिपुष्करिणीतीर्थ-
महिमानुर्णनं नाम द्वितीयोऽध्यायः ।

अथ तृतीयोऽध्यायः



## धर्मगुप्तचरित्रवर्णनम्

श्रीसूतः—

भूयोऽपि सम्प्रवक्ष्यामि स्वामितीर्थस्य वैभवम् ।
युष्माकमादरेणाहं नैमिशारण्यवासिनः ! ॥ १
नन्दो नाम महाराजः सोमवंशसमुद्भवः ।
धर्मेण पालयामास सागरान्तां धरामिमाम् ॥ २
तस्य पुत्रः समभवत् धर्मगुप्त इति स्मृतः ।
राज्यरक्षाधुरं नन्दो निजपुत्रे निधाय सः ॥ ३
जितेन्द्रियो जिताहारः प्रविवेश तपोवनम् ।
ताते तपोवनं याते धर्मगुप्ताभिधो नृपः ॥ ४
मेदिनीं पालयामास धर्मज्ञो नीतितत्परः ।
ईजे बहुविधैर्यज्ञैः देवानिन्द्रपुरोगमान् ॥ ५
ब्राह्मणानां ददौ वित्तं क्षेत्राणि च बहूनि सः ।
सर्वे स्वधर्मनिरताः तस्मिन् राजनि शासति ॥ ६
कदाचिन्नाभवत्पीडा तस्मिंश्चोरादिसम्भवा ।
कदाचिद्धर्मगुप्तोऽयं आरुह्य तुरगोत्तमम् ॥ ७ ॥ ७
वनं विवेश विप्रेन्द्राः! मृगयारसकौतुकी ।
तमालतालहिन्तालकुरवाकुलदिङ्मुखे ॥ ८
विचचार वने तस्मिन् सिंहव्याघ्रभयानके ।
मत्तालिकुलसन्नादसम्मूर्च्छितदिगन्तरे ॥ ९
पद्मकल्हारकुमुदनीलोत्पलवनाकुले ।
तटाके रससम्पूर्णे तपस्विजनमण्डिते ॥ १०

तस्मिन्वने सञ्चरतो धर्मगुप्तस्य भूपतेः ।
अभूद्विभावरी विप्राः! तमसाऽऽवृतदिङ्मुखा ॥ ११
राजाऽपि पश्चिमां सन्ध्यां उपास्य विनयान्वितः ।
जजाप च वने तत्र गायत्रीं वेदमातरम् ॥ १२
सिंहव्याघ्रादिभीत्याऽस्मिन् वृक्षमेकं समाश्रिते ।
राजपुत्रे तदभ्याशमृक्षः सिंहभयार्दितः ॥ १३
अन्वधावत वृक्षं तं एकः सिंहो वनेचरः ।
अनुद्रुतः स सिंहेन ऋक्षो वृक्षमुपाऽरुहत् ॥ १४
आरुह्य ऋक्षो वृक्षन्तं ददर्श जगतीपतिम् ।
वृक्षस्थितं महात्मानं महाबलपराक्रमम् ॥ १५
उवाच भूपतिं दृष्ट्वा ऋक्षोऽयं वनगोचरः ।
'मा भीतिं कुरु राजेन्द्र! वत्स्यावो रजनीमिह ॥ १६
महासत्त्वो महाकायो महादंष्ट्रः समाकुलः ।
वृक्षमूलं समायातः सिंहोऽयमतिभीषणः ॥ १७
रात्र्यर्धं भज निद्रां त्वं रक्ष्यमाणो मयोद्यतः ।
ततः प्रसुप्तं मां रक्ष शर्वर्यर्धं महामते' ॥ १८
इति तद्वाक्यमाकर्ण्य सुप्ते नन्दसुते हरिः ।
प्रोवाच ऋक्षं 'सुप्तोऽयं नृपो मे त्यज्यता' मिति ॥ १९
तं सिंहमब्रवीदृक्षो धर्मज्ञो द्विजसत्तमाः! ।
'भवान् धर्मं न जानीते मृगराज! वनेचर! ॥ २०
विश्वासघातिनां लोके महाकष्टं भवत्यहो! ।
न हि मित्रद्रुहां पापं नश्येद्यज्ञायुतैरपि ॥ २१
ब्रह्महत्यादिपापानां कथञ्चिन्निष्कृतिर्भवेत् ।
विश्वासघातिनां पापं न नश्येज्जन्मकोटिभिः ॥ २२

नाहं मेरुं महाभारं मन्ये पञ्चास्य! भूतले ।
महाभारमिमं मन्ये लोकविश्वासघातुकम्' ॥ २३
एवमुक्तोऽथ ऋक्षेण सिंहस्तूष्णीं बभूव ह ।
धर्मगुप्ते प्रबुद्धे तु ऋक्षः सुष्वाप भूरुहे ॥ २४
ततः सिंहोऽब्रवीद्भूपं 'एनमृक्षं त्यजस्व मे' ।
एवमुक्तोऽथ सिंहेन राजा सुप्तमशङ्कितः ॥ २५
स्वाङ्कन्यस्तशिरस्कं तं ऋक्षं तत्याज भूतले ।
पात्यमानस्ततो राज्ञा समालम्बितपादपः ॥ २६
ऋक्षः पुण्यवशात् वृक्षात् न पपात महीतले ।
स ऋक्षो नृपमभ्येत्य कोपाद्वाक्यमभाषत ॥ २७
'कामरूपधरो राजन्! अहं भृगुकुलोद्भवः ।
ध्यानकाष्ठाभिधो नाम्ना ऋक्षरूपमधारयम् ॥ २८
कस्मादनागसं सुप्तं अत्याक्षीन्मां भवान् नृप! ।
मच्छापादतिशीघ्रं त्वं उन्मत्तश्चर भूतले' ॥ २९
इति शप्त्वा मुनिर्भूपं ततः सिंहमभाषत ।
'न सिंहस्त्वं महायक्षः कुबेरसचिवः पुरा ॥ ३०
हिमवद्गिरिमासाद्य कदाचित्त्वं वधूसखः ।
अज्ञानाद्गौतमाभ्यशे विहारमतनोर्मुदा ॥ ३१
गौतमोऽप्युटजाद्दैवात् समिदाहरणाय वै ।
निर्गतस्त्वां विवसनं दृष्ट्वा शापमुदाहरत् ॥ ३२
यस्मान्ममाश्रमेऽद्य त्वं विवस्त्रः स्थितवानसि ।
अतः सिंहत्वमद्यैव भविता ते न संशयः ॥ ३३
इति गौतमशापेन सिंहत्वमगमत्पुरा ।
कुबेरसचिवो यक्षो भद्रनामा भवान् पुरा ॥ ३४

कुबेरो धर्मशीलो हि तद्भृत्याश्च तथैव हि ।
अतः किमर्थं त्वं हंसि मामृषिं वनगोचरम् ॥ ३५
एतत्सर्वमहं ध्यानात् जानामि हि मृगाधिप!' ।
इत्युक्तो ध्यानकाष्ठेन त्यक्त्वा सिंहत्वमाशु सः ॥ ३६
यक्षरूपं गतो दिव्यं कुबेरसचिवात्मकम् ।
ध्यानकाष्ठमसावाह प्राञ्जलिः प्रणतो मुनिम् ॥ ३७
"अद्य ज्ञातं मया सर्वं पूर्ववृत्तं महामुने! ।
गौतमः शापकाले मे शापान्तमपि चोक्तवान् ॥ ३८
'ध्यानकाष्ठेन संवादः ऋक्षरूपेण ते यदा ।
तदा निर्धूय सिंहत्वं यक्षरूपमवाप्स्यसि' ॥ ३९
इति मामब्रवीद् ब्रह्मन्! गौतमो मुनिपुङ्गवः ।
अद्य सिंहत्वनाशान्मे जानामि त्वां महामुने! ॥ ४०
ध्यानकाष्ठाभिधं शुद्धं कामरूपधरं सदा" ।
इत्युक्त्वा तं प्रणम्याथ ध्यानकाष्ठं स यक्षराट् ॥ ४१
विमानवरमारुह्य प्रययावलकापुरीम् ।
उन्मत्तरूपं तं दृष्ट्वा मन्त्रिणस्तु नृपोत्तमम् ॥ ४२
पितुः सकाशमानिन्युः रेवातीरे नृपोत्तमम् ।
तस्मै निवेदयामासुः मतिभ्रंशं सुतस्य च ।
ज्ञात्वा तु पुत्रवृत्तान्तं पिता वै नन्दनस्तदा ॥ ४३

### जैमिनिवाक्यात्स्वामितीर्थस्नातस्य धर्मगुप्तस्योन्मादनिवृत्तिः

पुत्रमादाय सहसा जैमिनेरन्तिकं ययौ ।
तस्मै निवेदयामास पुत्रवृत्तान्तमादितः ॥ ४४
'भगवन्! जैमिने! पुत्रो ममाद्योन्मत्ततां गतः ।
अस्योन्मादविनाशाय ब्रूह्युपायं महामुने!' ॥ ४५

इति पृष्टश्चिरं दध्यौ जैमिनिर्मुनिपुङ्गवः ।
ध्यात्वा तु सुचिरं कालं नृपनन्दनमब्रवीत् ॥ ४६
'ध्यानकाष्ठस्य शापेन ह्युन्मत्तस्ते सुतोऽभवत् ।
तस्य शापस्य मोक्षार्थं उपायं प्रब्रवीमि ते ॥ ४७
सुवर्णमुखरीतीरे वेङ्कटे नाम पर्वते ।
सर्वपापहरे पुण्ये नानाधातुविनिर्मिते ॥ ४८
स्वामिपुष्करिणी चेति तीर्थमस्ति महत्तरम् ।
पवित्राणां पवित्रं हि मङ्गलानाञ्च मङ्गलम् ॥ ४९
श्रुतिसिद्धं महापुण्यं ब्रह्महत्यादिशोधकम् ।
नीत्वा तत्र सुतं तेऽद्य स्नापयस्व महामते ! ॥ ५०
उन्मादस्तत्क्षणादेव तस्य नश्येन्न संशयः' ।
इत्युक्तस्तं प्रणम्यासौ जैमिनिं मुनिपुङ्गवम् ॥ ५१
नन्दः पुत्रं समादाय स्वामिपुष्करिणीं ययौ ।
तत्र च स्नापयामास पुत्रं नियमपूर्वकम् ॥ ५२
स्नानमात्रात्ततः सद्यो नष्टोन्मादोऽभवत्सुतः ।
स्वयं सस्नौ स नन्दोऽपि स्वामिपुष्करिणीजले ॥ ५३
उषित्वा दिनमेकन्तु सहपुत्रः पिता तदा ।
सेवित्वा वेङ्कटेशञ्च श्रीनिवासं कृपानिधिम् ॥ ५४
पुत्रमापृच्छ्य नन्दस्तं प्रययौ तपसे वनम् ।
गते पितरि पुत्रोऽपि धर्मगुप्तो नृपो द्विजाः! ॥ ५५
प्रददौ वेङ्कटेशस्य बहुवित्तानि भक्तितः ।
ब्राह्मणेभ्यो धनं धान्यं क्षेत्राणि च ददौ तदा ॥ ५६
प्रययौ मन्त्रिभिः सार्धं स्वां पुरीं तदनन्तरम् ।
धर्मेण पालयामास राज्यं निहतकण्टकम् ॥ ५७

पितृपैतामहं विप्राः! धर्मगुप्तोऽतिधार्मिकः ।
उन्मादैरप्यपस्मारैः ग्रहैर्दुष्टैश्च ये नराः ॥ ५८
ग्रस्ता भवन्ति विप्रेन्द्राः तेऽपि चात्र निमज्जनात् ।
पुष्करिण्यां विमुक्ताः स्युः सत्यं सत्यं वदाम्यहम् ॥ ५९
स्वामिपुष्करिणीं त्यक्त्वा तीर्थमन्यद्व्रजेत्तु यः ।
स्निग्धं स गोपयस्त्यक्त्वा स्नुहीक्षीरं प्रयाचते ॥ ६०
'स्वामितीर्थं स्वामितीर्थं स्वामितीर्थ' मिति द्विजाः ! ।
त्रिः पठन्तो नरा एवं यत्र क्वापि जलाशये ॥ ६१
स्नान्ति सर्वे नरास्ते वै यास्यन्ति ब्रह्मणः पदम् ।
एवं वः कथिता विप्रा धर्मगुप्तकथा शुभा ।
यस्याः श्रवणमात्रेण ब्रह्महत्या विनश्यति ॥ ६२

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये स्वामिपुष्करिणी-
महिमानुवर्णनं नाम तृतीयोऽध्यायः ।

---

अथ चतुर्थोऽध्यायः

—:※:—

## सुमत्याख्यद्विजवृत्तान्तः

श्रीसूतः— भो भो तपोधनाः! सर्वे नैमिशारण्यवासिनः ।
स्वामितीर्थस्य माहात्म्यं भूयोऽपि प्रवदाम्यहम् ॥ १
पुरा किरातीसंसर्गात् सुमतिर्ब्राह्मणः सुराम् ।
पीतवान् पुष्करिण्यां स स्नात्वा पापाद्विमोचितः ॥ २
ऋषयः— सुमतिः कस्य पुत्रोऽसौ कथं स च सुरां पपौ ।
कथं किरात्या सक्तोऽभूत् सूत! पौराणिकोत्तम! ।
सर्वेषां विस्तरादेतत् वद त्वं कृपयाऽधुना ॥ ३

श्रीसूतः — महाराष्ट्राभिधे देशे ब्राह्मणः कश्चिदास्तिकः ।
यज्ञदेव इति ख्यातो वेदवेदाङ्गपारगः ॥ ४
दयालुरातिथेयश्च शिवनारायणार्चकः ।
सुमतिर्नाम पुत्रोऽभूद्यज्ञदेवस्य तस्य वै ॥ ५
पितरं स परित्यज्य भार्यामपि पतिव्रताम् ।
प्रययावुत्कले देशे विटगोष्ठीपरायणः ॥ ६
काचित्किराती तद्देशे वसन्ती युवमोहनी ।
यूनां समस्तद्रव्याणि प्रलोभ्य जगृहे चिरम् ॥ ७
तस्या गृहं स प्रययौ सुमतिर्ब्राह्मणाधमः ।
सुमतिं सा च जग्राह किराती निर्धनं द्विजम् ॥ ८

## सुमत्याख्यद्विजस्य किरातीसङ्गात् महापातकप्राप्तिः

तया युक्तोऽथ सुमतिः तत्संयोगैकतत्परः ।
इतस्ततश्चोरयित्वा बहुद्रव्याणि सन्ततम् ॥ ९
दत्त्वा तया चिरं रेमे तद्गृहे बुभुजे च सः ।
एकेन चषकेणासौ तया सह सुरां पपौ ॥ १०
एवं स बहुकालं वै रममाणस्तया सह ।
पितरौ निजपत्नीञ्च नास्मरद्विषयातुरः ॥ ११
स कदाचित्किरातैस्तु चौर्यं कर्तुं ययौ सह ।
विप्रस्य कस्यचिद्गेहे सोऽपि कैरातवेषभृत् ॥ १२
ययौ चोरयितुं द्रव्यं साहसी खड्गहस्तवान् ।
तद्गृहस्वामिनं विप्रं हत्वा खड्गेन साहसात् ॥ १३
समादाय बहु द्रव्यं किरातीभवनं ययौ ।
तं यान्तमनुयातिस्म ब्रह्महत्या भयङ्करी ॥ १४

नीलवस्त्रधरा भीमा भृशं रक्तशिरोरुहा ।
गर्जन्ती साट्टहासं सा कम्पयन्ती च रोदसी ॥ १५
अनुद्रुतस्तया सोऽयं बभ्राम जगतीतले ।
एवं भ्रमन् भुवं सर्वं कदाचित्सुमतिः स्वयम् ॥ १६
स्वग्रामं प्रययौ भीत्या विप्रबन्धुर्दुरात्मवान् ।
अनुद्रुतस्तया भीतः प्रययौ स्वगृहं प्रति ॥ १७
ब्रह्महत्याऽप्यनुद्रुत्य तेन साकं गृहं ययौ ।
पितरं 'रक्ष रक्षे' ति सुमतिः शरणं ययौ ॥ १८
'मा भैषी' रिति तं प्रोच्य पिता रक्षितुमुद्यतः ।
तदानीं ब्रह्महत्येयं तत्तातं प्रत्यभाषत ॥ १९

ब्रह्महत्या:—

'मैव त्वं प्रतिगृह्णीष्व यज्ञदेव! द्विजोत्तम! ।
असौ सुरापी स्तेयी च ब्रह्महा चातिपातकी ॥ २०
मातृद्रोही पितृद्रोही भार्यात्यागी च पातकी ।
किरातीसङ्गदुष्टश्च ह्येनं मुञ्च दुरात्मकम् ॥ २१
गृह्णासि चेदिमं विप्र! महापातकिनं सुतम् ।
त्वद्भार्यामस्य भार्याञ्च त्वाञ्च पुत्रमिमं द्विज! ॥ २२
भक्षयिष्यामि वंशञ्च तस्मान्मुञ्च सुतं त्विमम् ।
इमं त्यजसि चेत्पुत्रं युष्मान् मुञ्चामि साम्प्रतम् ॥ २३
नैकस्यार्थे कुलं हन्तुं अर्हसि त्वं महामते!' ।
इत्युक्तः स तया तत्र यज्ञदेवोऽब्रवीच्च ताम् ॥ २४

यज्ञदेव:—

'बाधते मां सुतस्नेहः कथमेनं परित्यजे' ।
ब्रह्महत्या तदाकर्ण्य द्विजोक्तं तमभाषत ॥ २५

ब्रह्महत्या:—

'अयं हि पतितो भूत्वा वर्णाश्रमबहिष्कृतः ।
पुत्रेऽस्मिन् मा कुरु स्नेहं निन्दितं तस्य दर्शनम्' ॥ २६

इत्युक्त्वा ब्रह्महत्या सा यज्ञदेवस्य पश्यतः ।
तलेन प्रजहारास्य पुत्रं सुमतिनामकम् ।
रुरोद 'तात ताते'ति पितरं प्रब्रुवन् मुहुः ॥ २७

## सुमतिं प्रति दुर्वासःकथितब्रह्महत्यामुक्त्युपायः

रुरुदुर्जनको माता भार्याऽपि सुमतेस्तदा ।
एतस्मिन्नन्तरे तत्र दुर्वासाः शङ्करांशजः ॥ २८

दिष्ट्या समाययौ योगी धार्मिको मुनिसत्तमः ।
यज्ञदेवोऽथ तं दृष्ट्वा मुनिं रुद्रावतारकम् ॥ २९

स्तुत्वा प्रणम्य शरणं ययाचे पुत्रकारणात् ।
'दुर्वासास्त्वं महायोगिन्! साक्षाद्वै शङ्करांशकः ॥ ३०

त्वद्दर्शनमपुण्यानां भविता न कदाचन ।
ब्रह्महा च सुरापी च स्तेयी चाभूत्सुतो मम ॥ ३१

एनं प्रहर्तुमायाता ब्रह्महत्याऽपि वर्तते ।
भूयाद्यथा मे पुत्रोऽयं महापातकमोचितः ॥ ३२

घोरा च ब्रह्महत्येयं यथा शीघ्रं लयं व्रजेत् ।
तमुपायं वदस्वाद्य मम पुत्रे दयां कुरु ॥ ३३

अयमेव हि पुत्रो मे नान्योऽस्ति तनयो मुने! ।
अस्मिन् मृते तु वंशो मे समुच्छिद्येत मूलतः ॥ ३४

ततः पितृभ्यः पिण्डानां दाताऽपि न भवेद्ध्रुवम् ।
ततः कृपां कुरुष्व त्वं अस्मासु भगवन् मुने! ॥ ३५

इत्युक्तः स तदोवाच दुर्वासाः शङ्करांशकः ।
ध्यात्वाऽथ सुचिरं कालं यज्ञदेवं द्विजोत्तमम् ॥ ३६

दुर्वासाः— 'यज्ञदेव! कृतं पापं अतिक्रूरं सुतेन ते ।
नास्य पापस्य शान्तिः स्यात् प्रायश्चित्तायुतैरपि ॥ ३७

तथाऽपि ते सुतस्याहं तस्य पापस्य शान्तये ।
प्रायश्चित्तं वदिष्यामि शृणु नान्यमना द्विज! ॥ ३८

वेङ्कटाद्रौ महापुण्ये सर्वपातकनाशने ।
स्वामिपुष्करिणी चेति वर्तते मङ्गलप्रदा ॥ ३९

## सुमतेः स्वामिपुष्करिणीस्नानाद्ब्रह्महत्याविमुक्तिः

स्नाति चेत् तव पुत्रोऽयं पातकान्मुच्यते क्षणात्' ।
एवं श्रुत्वा मुनेर्वाक्यं यज्ञदेवो महामतिः ॥ ४०

पुत्रमादाय सुमतिं स्वामिपुष्करिणीं गतः ।
स्नापयामास सुमतिं हत्यया पीडितं सुतम् ॥ ४१

आकाशवाणी तं विप्रं उवाच मधुरस्वरा ।
यज्ञदेव! महाभाग! स्नानेनानेन सुव्रत! ॥ ४२

पूतोऽभवत्तव सुतः संशयं मा कृथा द्विज! ।
एवं प्रभावं तत्तीर्थं पापवृक्षकुठारकम् ॥ ४३

एवं वः कथितं विप्राः! इतिहासं पुरातनम् ।
शृण्वतां पठताञ्चापि वाजपेयफलं लभेत् ॥ ४४

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये स्वामिपुष्करिणी-
तीर्थमहिमानुवर्णनं नाम चतुर्थोऽध्यायः ।

———

अथ पञ्चमोऽध्यायः

## रामकृष्णतीर्थमाहात्म्यम्

श्रीसूतः— वेङ्कटाख्ये महापुण्ये सर्वपातकनाशने ।
कृष्णतीर्थस्य माहात्म्यं शृणु वं सुसमाहिताः! ॥ १
यत्र मज्जनमात्रेण कृतघ्नोऽपि विमुच्यते ।
पितॄन् मातॄः गुरूंश्चावमन्यन्ते मोहमोहिताः ॥ २
ये चाप्यन्ये दुरात्मानः कृतघ्ना निरपत्रपाः ।
ते सर्वे कृष्णतीर्थेऽस्मिन् शुद्ध्यन्ति स्नानमात्रतः ॥ ३
कृष्णनामा मुनिः पूर्वं वेङ्कटाह्वयभूधरे ।
अवर्तत तपः कुर्वन् विष्णुं ध्यायन् समाहितः ॥ ४
स तत्र कल्पयामास स्नानार्थं तीर्थमुत्तमम् ।
तत्र स्नात्वा सकृन्मर्त्यः कृतघ्नोऽपि विमुच्यते ॥ ५
अत्रेतिहासं वक्ष्यामि पुराणं पापनाशनम् ।
यस्य श्रवणमात्रेण नरो मुक्तिमवाप्नुयात् ॥ ६
पुरा बभूव विप्रेन्द्रो रामकृष्णो महामुनिः ।
सत्यवाक् शीलवान् वाग्मी सर्वभूतदयाऽन्वितः ॥ ७
शत्रुमित्रसमोदान्तः तपस्वी विजितेन्द्रियः ।
परे ब्रह्मणि निष्णातो ब्रह्मतत्त्वकसंश्रयः ॥ ८
एवं प्रभावः स मुनिः तपस्तेपे सुदारुणम् ।
स वै निश्चलसर्वाङ्गः तिष्ठन् सर्वत्र भूतले ॥ ९
परमाण्वन्तरं वापि न स्वस्थानाच्चचाल सः ।
स्थित्वा तत्र तपस्यन्तं अनेकशतवत्सरान् ॥ १०
तं चाक्रमत वल्मीकं छादिताङ्गं चकार वै ।
वल्मीकाऽक्रान्तदेहोऽपि रामकृष्णो महामुनिः ॥ ११

अकरोत्तप एवासौ वल्मीकं न त्वबुद्ध्यत ।
तस्मिंश्च तप्यति तपो वासवो मुनिपुङ्गवे ॥ १२
विसृज्य मेघजालानि वर्षयामास वेगवान् ।
एवं दिनानि सप्तायं ववर्ष च निरन्तरम् ॥ १३
धारावर्षेण महता वृष्यमाणोऽपि वै मुनिः ।
तद्वर्षं प्रतिजग्राह निमीलितविलोचनः ॥ १४
महता स्तनितेनाऽशु तदा बधिरयञ्छ्रुती ।
वल्मीकस्योपरिष्टाद्वै निपपात महाशनिः ।
तस्मिन् वर्षति पर्जन्ये शीतवातादिदुःसहे ॥ १५

**रामकृष्णाख्यमहर्षितपःप्रसन्नभगवदाविर्भावः**

वल्मीकशिखरं ध्वस्तं बभूवाशनिताडितम् ।
तदा प्रादुरभूद्देवः शङ्खचक्रगदाधरः ॥ १६
विनतानन्दनारूढो वनमालाविभूषितः ।
रामकृष्णस्य तपसा तोषितो वाक्यमब्रवीत् ॥ १७
'तपोनिधे! रामकृष्ण! वेदशास्त्रार्थपारग! ।
मदाविर्भावदिवसे यः स्नाति मनुजोत्तमः ॥ १८
तस्य पुण्यफलं वक्तुं शेषेणापि न शक्यते ।
मकरस्थे रवौ विप्र! पौर्णमास्यां महातिथौ ॥ १९
पुष्यनक्षत्रयुक्तायां स्नानकालो विधीयते ।
तद्दिने स्नाति यो मर्त्यः कृष्णतीर्थे महामतिः ॥ २०
सर्वपापविनिर्मुक्तः सर्वान् कामाँल्लभेत सः ।
मदाविर्भावदिवसे कृष्णतीर्थजले शुभे ॥ २१
स्नातुं तत्र समायान्ति स्वपापपरिशुद्धये ।
देवा मनुष्याः सर्वे च दिक्पालाश्च महौजसः ॥ २२

एते सर्वे महात्मानः कोटिसूर्यसमप्रभाः ।
ते सर्वे कृष्णतीर्थेऽस्मिन् स्नानात् पूता भवन्ति हि ॥ २३
त्वन्नाम्नेदं महातीर्थं लोके प्रख्यातिमेष्यति ' ।
इत्युक्त्वा श्रीनिवासश्च तत्रैवान्तरधीयत ॥ २४
एवं प्रभावं तत्तीर्थं महापापविशोधनम् ।
बुद्धिशुद्धिप्रदं पुंसां सर्वैश्वर्यप्रदायकम् ॥ २५
एवं वः कथितं विप्राः! कृष्णतीर्थस्य वैभवम् ।
शृण्वतां पठताञ्चैव विष्णुलोकप्रदायकम् ॥ २६

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये रामकृष्णतीर्थमहिमानुवर्णनं नाम पञ्चमोऽध्यायः ।

---

अथ षष्ठोऽध्यायः

## श्रीवेङ्कटाद्रौ जलदानप्रशंसा

श्रीसूतः— वेङ्कटाख्ये महापुण्ये तृषार्तानां विशेषतः ।
जलदानमकुर्वाणः तिर्यग्योनिमवाप्नुयात् ॥ १
तस्माद्वेङ्कटशैलेन्द्रे यथाशक्त्यनुसारतः ।
जलदानं हि कर्तव्यं सर्वेषां जीवनं महत् ॥ २
अत्रैवोदाहरन्तीमं इतिहासं पुरातनम् ।
विप्रस्य गृहगोधायाः संवादं परमाद्भुतम् ॥ ३

## हेमाङ्गस्य जलदानाकरणेन गृहगोधिकात्वप्राप्तिः

पुरा चेक्ष्वाकुवंशेऽभूत् हेमाङ्ग इति भूमिपः ।
ब्रह्मण्यो ब्रह्मभूयिष्ठो जितामित्रो जितेन्द्रियः ॥ ४
यावन्तो भूमिकणिकाः यावन्तस्तोयबिन्दवः ।
यावन्त्युडूनि गगने तावतीर्गाः ददात्यसौ ॥ ५

येनेष्टयज्ञदर्भैश्च भूमिर्बर्हिष्मती स्मृता ।
गोभूतिलहिरण्याद्यैः तोषिता बहवो द्विजाः ॥ ६
तेनादत्तानि दानानि न विद्यन्त इति श्रुतम् ।
तेनादत्तं जलञ्चैकं सुखलभ्यधिया द्विजाः! ॥ ७
बोधितो ब्रह्मपुत्रेण वसिष्ठेन महात्मना ।
अमूल्यं सर्वतो लभ्यं तद्दातुः किं फलं लभेत्? ॥ ८
इति दुर्धीः हेतुवादैः न जलं दत्तवान् विभुः ।
अलभ्यदाने पुण्यं स्यात् इत्यवादीत् सयुक्तिकम् ॥ ९
स आनर्च द्विजान् व्यङ्गान् दरिद्रान् वृत्तिकर्शितान् ।
नानर्च श्रोत्रियान् विप्रान्! ब्रह्मज्ञान्! ब्रह्मवादिनः ॥ १०
प्रख्यातान् पूजयिष्यन्ति सर्वे लोकाः सहार्हणैः ।
अनाथानामविद्यानां व्यङ्गानाञ्च कुटुम्बिनाम् ॥ ११
दरिद्राणां गतिः का वा? तस्मात्ते मद्दयाऽऽस्पदाः ।
इति दुष्टेषु पात्रेषु दत्तवान् किमपि स्वकम् ॥ १२
तेन दोषेण महता चातकत्वं त्रिजन्मसु ।
एकजन्मनि गृध्रत्वं श्वत्वं वा सप्तजन्मसु ॥ १३
प्राप्य पश्चाद्गृहे जातो भूपोऽयं गृहगोधिका ।
श्रुतकीर्तेस्तु भूपस्य मिथिलाधिपतेर्द्विजाः! ॥ १४
गृहद्वारप्रतोल्यां स्म वर्तते कीटकाशनः ।
अष्टाशीतिषु वर्षेषु स्थितं तेन दुरात्मना ॥ १५

## श्रुतदेवपादोदकसेवनेन हेमाङ्गस्य जातिस्मरणम्

विदेहाधिपतेर्गेहं कदाचिदृषिसत्तमः ।
श्रुतदेव इति ख्यातः श्रान्तो मध्याह्न आगमत् ॥ १६

तं दृष्ट्वा सहसोत्थाय जातहर्षो नराधिपः ।
मधुपर्कैः सुसम्पूज्य तस्य पादावनेजनीः ॥ १७
अपो मूर्ध्नाऽवहत् क्षितैः तदोत्क्षिप्तैश्च बिन्दुभिः ।
दैवोपदिष्टकालेन प्रोक्षिता गृहगोधिका ॥ १८
सद्यो जातिस्मृतिरभूत् कृतकर्माऽतिदु खिता ।
'त्राहि त्राही' ति चुक्रोश ब्राह्मणं गृहमागतम् ॥ १९
तिर्यग्जन्तुरवं श्रुत्वा ब्राह्मणो विस्मितोऽभवत् ।
'कुतः क्रोशसि गोधे! त्वं दशेयं केन कर्मणा ॥ २०
उपदेवोऽथ देवो वा त्वं नृपोऽथ द्विजोत्तम! ।
कस्त्वं ब्रूहि महाभाग! त्वामद्याहं समुद्धरे' ॥ २१
इत्युक्तः स नृपः प्राह श्रुतदेवं महाप्रभुः ।
'अहमिक्ष्वाकुकुलजः शस्त्रविद्याविशारदः ॥ २२
यावन्तो भूमिकणिका यावन्तस्तोयबिन्दवः ।
यावन्त्युडूनि गगने तावतीर्गाः अदामहम् ॥ २३
सर्वैर्यज्ञैर्मया चेष्टं पूर्तान्याचरितानि मे ।
दानान्यपि च दत्तानि धर्मजातं स्वनुष्ठितम् ॥ २४
तथाऽपि दुर्गतिर्जाता न मे चोर्ध्वगतिर्विभो! ।
त्रिवारं चातकत्वं मे गृध्रत्वञ्चैकजन्मनि ॥ २५
सप्तजन्मसु च श्वत्वं प्राप्तं पूर्वं मया द्विज! ।
धरताऽनेन भूपेन चापः पादावनेजनीः ॥ २६
बिन्दवो दूरमुत्क्षिप्ताः तैः सिक्तोऽहं कथञ्चन ।
तदा जन्मस्मृतिरभूत् तेन मे हतपाप्मनः ॥ २७
गोधाजन्मानि भव्यानीत्यष्टाविंशति मे द्विजः! ।
दृश्यन्ते दैवदिष्टानि बिभ्यते जन्मभिर्भृशम् ॥ २८

न कारणं प्रपश्यामि तन्मे विस्तरतो वद' ।
इत्युक्तः स द्विजः प्राह ज्ञातं विज्ञानचक्षुषा ॥ २९

## श्रुतदेवदत्तपुण्येन हेमाङ्गस्य गोधिकात्वविमुक्तिः

'शृणु भूप! प्रवक्ष्यामि तव दुर्गतिकारणम् ।
न जलन्तु त्वया दत्तं वेङ्कटाऽह्वयभूधरे ॥ ३०
तज्जलं सुलभं मत्वा न मौल्यमिति निश्चितः ।
नाध्वगानां द्विजातीनां घर्मकालेऽप्यजानता ॥ ३१
तथा पात्रं समुत्सृज्य ह्यपात्रे प्रतिपादितम् ।
ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ ३२
तुलसीं तु समुत्सृज्य बृहती पूज्यते नु किम्? ।
अनाथव्यङ्गपङ्गुत्व न प्रयोजकतामियात् ॥ ३३
पङ्ग्वाद्यायेऽप्यनाथा हि दयापात्रं हि केवलम् ।
तपोनिष्ठा ज्ञाननिष्ठा श्रुतिशास्त्रपरायणाः ॥ ३४
विष्णुरूपाः सदा पूज्याः नेतरे तु कदाचन ।
तत्रापि ज्ञानिनोऽत्यर्थं प्रिया विष्णोः सदैव हि ॥ ३५
ज्ञानिनामपि भूपाल! विष्णुरेव सदा प्रियः ।
तस्माज्ज्ञानी सदा पूज्यः पूज्यात् पूज्यतरः स्मृतः ॥ ३०
न जलन्तु त्वया दत्तं साधवो वा न सेविताः ।
तेन ते दुर्गतिश्चेयं प्राप्ता चेक्ष्वाकुनन्दन! ॥ ३७
वेङ्कटाद्रौ कृतं पुण्यं तुभ्यं दास्यामि शान्तये ।
भूतं भव्यं भवत् तेन कर्मजातं विजेष्यसि' ॥ ३८
इत्युक्त्वाऽप उपस्पृश्य ददौ पुण्यमनुत्तमम् ।
यद्दत्तं ब्राह्मणे वापि स्नानं चैकदिने कृतम् ॥ ३९

तेन ध्वस्ताखिलागास्तु त्यक्त्वा च गृहगोधिका ।
रूपं कर्मोचितं घोरं सद्योऽदृश्यत पूरुषः ॥ ४०
दिव्यं विमानमारूढो दिव्यस्रग्वस्त्रभूषणः ।
पश्यतामेव साधूनां मैथिलस्य गृहान्तरे ॥ ४१
बद्धाञ्जलिपुटो भूत्वा परिक्रम्य प्रणम्य च ।
अनुज्ञातो ययौ राजा स्तूयमानोऽमरैर्दिवम् ॥ ४२
तत्र भुक्त्वा महाभोगान् वर्षायुतमतन्द्रितः ।
स एव चेक्ष्वाकुकुले ककुत्स्थोऽभून्महारथः ॥ ४३
सप्तद्वीपप्रतीपालो ब्रह्मण्यः साधुसम्मतः ।
देवेन्द्रस्य सखा विष्णोः अंश एवं महाप्रभुः ॥ ४४
बोधितस्तु वसिष्ठेन सर्वान् धर्मान् मनोहरान् ।
अनुष्ठायाखिलान् राजा तेन ध्वस्ताशुभादिकः ॥ ४५
दिव्यं ज्ञानं समासाद्य विष्णोः सायुज्यमाप्तवान् ।
तस्माद्वेङ्कटशैलेन्द्रः पुण्यपापविनाशनः ॥ ४६
तस्मिंश्च जलदानन्तु विष्णुलोकप्रदायकम् ।
एवं वः कथितं विप्राः! जलदानस्य वैभवम् ।
वेङ्कटाद्रौ महापुण्ये सर्वपातकनाशने ॥ ४७

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये जलदानवैभव-
वर्णनं नाम षष्ठोऽध्यायः ।



अथ सप्तमोऽध्यायः



## श्रीवेङ्कटाचलक्षेत्रादिवर्णनम्

श्रीसूतः—

वेङ्कटाद्रेस्तु माहात्म्यं भूयोऽपि प्रवदाम्यहम् ।
युष्माकं सावधानेन शृणुध्वं सुसमाहिताः ! ॥ १
पृथिव्यां यानि तीर्थानि ब्रह्माण्डान्तर्गतानि च ।
तानि सर्वाणि वर्तन्ते वेङ्कटाऽह्वयभूधरे ॥ २
तस्मिन् नगोत्तमे पुण्ये वसन्तं पुरुषोत्तमम् ।
शङ्खचक्रधरं देवं पीताम्बरधरं शुभम् ॥ ३
कौस्तुभालङ्कृतोरस्कं भक्तानामभयप्रदम् ।
देवदेवं विशालाक्षं वेदवेद्यं सनातनम् ॥ ४
अङ्गकोसलकर्णाटकाशीगुर्जरदेशगाः ।
चोलकेरलपाण्ड्यादिसर्वदेशसमुद्भवाः ॥ ५
सकुटुम्बाश्च सेवार्थं आयान्ति प्रतिवत्सरम् ।
देवाश्च ऋषयः सिद्धाः योगिनः सनकादयः ॥ ६
ये भाद्रपदमासे तु वेङ्कटेशमहोत्सवे ।
सेवां कुर्वन्ति ते सर्वे निष्पापा उत्तमोत्तमाः ॥ ७
तत्र श्रीवेङ्कटेशस्य ब्रह्मा लोकपितामहः ।
चकार कन्यामासे तु ध्वजारोहमहोत्सवम् ॥ ८
प्रतिवर्षञ्च तत्सेवानिमित्तं सर्वमानवाः ।
सर्वे देवाश्च गन्धर्वाः सिद्धाः साध्या महौजसः ॥ ९
ब्रह्मोत्सवे भगवतः समायान्ति द्विजोत्तमाः ! ।
विद्यानां वेदविद्येव मन्त्राणां प्रणवो यथा ॥ १०

प्राणवत् प्रियवस्तूनां धेनूनां कामधेनुवत् ।
तथा वेङ्कटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ॥ ११

शेषवत् सर्वनागानां पक्षिणां गरुडो यथा ।
देवानान्तु यथा विष्णुः वर्णानां ब्राह्मणो यथा ॥ १२

तथा वेङ्कटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ।
भूरुहाणां सुरतरुः भार्येव सुहृदां यथा ॥ १३

तीर्थानान्तु यथा गङ्गा तेजसान्तु रविर्यथा ।
तथा वेङ्कटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ॥ १४

आयुधानां यथा वज्रं लोहानां काञ्चनं यथा ।
वैष्णवानां यथा रुद्रो रत्नानां कौस्तुभो यथा ॥ १५

तथा वेङ्कटशैलेन्द्रः क्षेत्राणामुत्तमोत्तमः ।
स्नानेन सदृशो लोके विष्णुप्रीतिविवर्धनः ॥ १६

न माधवसमो मासो न कृतेन समं युगम् ।
न च वेदसमं शास्त्रं न तीर्थं गङ्गया समम् ॥ १७

न जलेन समं दानं न सुखं भार्यया समम् ।
न कृषेस्तु समं वित्तं न लाभो जीवितात् परः ॥ १८

न तपोऽनशनादन्यत् न दानात् परमं सुखम् ।
न धर्मस्तु दयातुल्यो न ज्योतिश्चक्षुषा समम् ॥ १९

न तृप्तिरशनात् तुल्या न वाणिज्यं कृषेः समम् ।
न धर्मेण समं मित्रं न सत्येन समं यशः ।
यथा तथा भगवतः स्थानेन सदृशं न हि ॥ २०

यत्कीर्तनं सकलपापहरं मुनीन्द्राः
यद्वन्दनं सकलसौख्यदमेव लोके ।

यात्राऽपि यं प्रति सुरैरपि पूजनीया
ताद्दङ् महान् भवति वेङ्कटशैलमुख्यः ॥ २१

तस्यानुभावं प्रवदामि भूयः समस्ततीर्थानि वसन्ति यत्र ।
एवं समस्तेषु च मुख्यतीर्थं श्रीस्वामिनामाऽस्ति सरोवरं तत् ॥ २२
माहात्म्यमेतस्य मयोच्यते कथं यत्पश्चिमे रोधसि भूवराहः ।
आलिङ्ग्य कान्तामतिसौम्यमूर्तिः विराजते विश्वजनोपकारी ॥ २३

श्रीस्वामिपुष्करिण्याश्च दक्षिणे वेङ्कटेश्वरः ।
आलिङ्गितवपुर्लक्ष्म्या वरदो वर्तते चिरम् ॥ २४
एवं वः कथितं विप्राः! क्षेत्रमाहात्म्यमुत्तमम् ।
यः शृणोति सदा भक्त्या विष्णुलोके महीयते ॥ २५

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये क्षेत्रमहिमानुवर्णनं नाम सप्तमोऽध्यायः ॥



अथ अष्टमोऽध्यायः



## श्रीवेङ्कटेश्वरवैभववर्णनम्

श्रीसूतः—

अथेदानीं प्रवक्ष्यामि वेङ्कटेश्वरवैभवम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ १
श्रीवेङ्कटेश्वरं देवं यः पश्यति सकृन्नरः ।
स नरो मुक्तिमाप्नोति विष्णुसायुज्यमाप्नुयात् ॥ २
दशवर्षैस्तु यत्पुण्यं क्रियते तु कृते युगे ।
त्रेतायामेकवर्षेण तत्पुण्यं साध्यते नृभिः ॥ ३
द्वापरे पञ्चमासेन तत् दिनेन कलौ युगे ।
तत्फलं कोटिगुणितं निमिषे निमिषे नृणाम् ॥ ४

निःसन्देहं भवेदेवं श्रीनिवासविलोकिनाम् ।
श्रीवेङ्कटेश्वरे देवे तीर्थानि सकलान्यपि ॥ ५
विद्यन्ते सर्वदेवाश्च मुनयः पितरस्तथा ।
एककालं द्विकालं वा त्रिकालं सर्वदैववा ॥ ६
ये स्मरन्ति महादेवं श्रीनिवासं विमुक्तिदम् ।
कीर्तयन्त्यथवा विप्राः! ते मुक्ताः पापपञ्जरात् ॥ ७
नारायणं परं देवं वेङ्कटेशं प्रयान्ति वै ।
पूजितं शङ्खराजेन सच्चिदानन्दविग्रहम् ॥ ८
तस्य स्मरणमात्रेण यमपीडाऽपि नो भवेत् ।
श्रीनिवासं महादेवं येऽर्चयन्ति सकृन्नराः ॥ ९
किं दानैः किं व्रतैस्तेषां किं तपोभिः किमध्वरैः? ।
वेङ्कटेशं परं देवं यो न चिन्तयति क्षणम् ॥ १०
अज्ञानी स च पापी स्यात् स मूको बधिरस्तथा ।
स जडोऽन्धश्च विज्ञेयः छिद्रं तस्य सदा भवेत् ॥ ११
श्रीनिवासे महादेवे सकृद्दृष्टे मुनीश्वराः! ।
किं काश्या? गयया चैव? प्रयागेनापि किं फलम्? ॥ १२
दुर्लभं प्राप्य मानुष्यं मानवा इह भूतले ।
वेङ्कटेशं परं देवं ये पश्यन्त्यर्चयन्ति वा ॥ १३
जन्म तेषां हि सफलं ते कृतार्थाश्च नेतरे ।
वेङ्कटेशे परे देवे दृष्टे वा पूजितेऽपि वा ॥ १४
शम्भुना ब्रह्मणा किं वा? शक्रेणाप्यखिलामरैः? ।
वेङ्कटेशे महादेवे भक्तियुक्ताश्च ये नराः ॥ १५
तेषां प्रणामस्मरणपूजायुक्तास्तु ये नराः ।
न ते पश्यन्ति दुःखानि नैव यान्ति यमाऽलयम् ॥ १६

ब्रह्महत्यासहस्राणि सुरापानायुतानि च ।
दृष्टे नारायणे देवे विलयं यान्ति कृत्स्नशः ॥ १७

ये वाञ्छन्ति सदा भोगं राज्यञ्च त्रिदशालये ।
वेङ्कटाद्रिनिवासं ते प्रणमन्तु सकृन्मुदा ॥ १८

यानि कानि च पापानि जन्मकोटिकृतानि च ।
तानि सर्वाणि नश्यन्ति वेङ्कटेश्वरदर्शनात् ॥ १९

सम्पर्कात् कौतुकाल्लोभात् भयाद्वाऽपि च संस्मरन् ।
वेङ्कटेशं महादेवं नेहामुत्र च दुःखभाक् ॥ २०

वेङ्कटाचलदेवेशं कीर्तयन्नर्चयन्नपि ।
अवश्यं विष्णुसारूप्यं लभते नात्र संशयः ॥ २१

यथैधांसि समिद्धोऽग्निः भस्मसात्कुरुते क्षणात् ।
तथा पापानि सर्वाणि वेङ्कटेश्वरदर्शनात् ॥ २२

वेङ्कटेश्वरदेवस्य भक्तिरष्टविधा स्मृता ।
तद्भक्तजनवात्सल्यं तत्पूजापरितोषणम् ॥ २३

स्वयं तत्पूजनं भक्त्या तदर्थे देहचेष्टितम् ।
तन्माहात्म्यकथावांश्च श्रवणेष्वादरस्तथा ॥ २४

स्वरनेत्रशरीरेषु विकारस्फुरणं तथा ।
श्रीनिवासस्य देवस्य स्मरणं सततं तथा ॥ २५

वेङ्कटाद्रिनिवासं तं आश्रित्यैवोपजीवनम् ।
एवमष्टविधा भक्तिः यस्मिन् म्लेच्छेऽपि वर्तते ॥ २६

स एव मुक्तिमाप्नोति शौनकाद्या महौजसः ! ।
भक्त्या त्वनन्यया मुक्तिः ब्रह्मज्ञानेन निश्चिता ।
वेदान्तशास्त्रश्रवणात् यतीनामूर्ध्वरेतसाम् ॥ २७

सा च मुक्तिर्विना ज्ञानं वेदान्तश्रवणोद्भवम् ।
यत्याश्रमं विना विप्राः विरक्तिश्च विना तथा ॥ २८
सर्वेषाञ्चैव वर्णानां अखिलाश्रमिणामपि ।
वेङ्कटेश्वरदेवस्य दर्शनादेव केवलम् ॥ २९
अपुनर्भवदा मुक्तिः भविष्यत्यविलम्बितम् ।
कृमिकीटाश्च देवाश्च मुनयश्च तपोधनाः ॥ ३०
तुल्या वेङ्कटशैलेन्द्रे श्रीनिवासप्रसादतः ।
पापं कृतं मयाऽनेकं इति मा क्रियतां भयम् ॥ ३१
मा गर्वः क्रियतां पुण्यं मयाऽकारीति वा जनैः ।
वेङ्कटेशे महादेवे श्रीनिवासे विलोकिते ॥ ३२
न न्यूना नाधिकाश्च स्युः किन्तु सर्वे महाजनाः ।
वेङ्कटाख्ये महापुण्ये सर्वपातकनाशने ॥ ३३
श्रीनिवासं परं देवं यः पश्यति सभक्तिकम् ।
न तेन तुल्यतामेति चतुर्वेद्यपि भूतले ॥ ३४
वेङ्कटेश्वरदेवेशं यः पूजयति भक्तितः ।
स कोटिकुलसंयुक्तः प्रयाति हरिमन्दिरम् ॥ ३५
श्रीनिवासाच्च न समं नाधिकं पुण्यमस्ति वै ।
वेङ्कटाद्रिनिवासं तं द्वेष्टि यो मोहमास्थितः ॥ ३६
ब्रह्महत्यायुतं तेन कृतं नरककारणम् ।
तत्सम्भाषणमात्रेण मानवो नरकं व्रजेत् ॥ ३७
श्रीनिवासपरा वेदाः श्रीनिवासपरा मखाः ।
श्रीनिवासपराः सर्वे तस्मादन्यन्न विद्यते ॥ ३८
अन्यत्सर्वं परित्यज्य श्रीनिवासं समाश्रयेत् ।
सर्वयज्ञतपोदानतीर्थस्नाने तु यत्फलम् ॥ ३९

तत्फलं कोटिगुणितं श्रीनिवासस्य सेवया ।
वेङ्कटाद्रिनिवासन्तं चिन्तयन् घटिकाद्वयम् ॥ ४०
कुलैकविंशतिं धृत्वा विष्णुलोके महीयते ।
स्वामिपुष्करिणीतीर्थे स्नानं देवस्य दर्शनम् ॥ ४१
यदि लभ्येत वै पुंसां किं गङ्गाजलसेवया ? ।
वेङ्कटेशं परं देवं यः कदाऽपि न पश्यति ॥ ४२
सङ्करः स तु विज्ञेयो न पितुर्बीजसम्भवः ।
तस्मात् सर्वप्रयत्नेन वेङ्कटेशो दयानिधिः ॥ ४३
द्रष्टव्योऽतिप्रयत्नेन परलोकेच्छया द्विजाः ! ।
एवं वः कथितं विप्राः ! वेङ्कटेशस्य वैभवम् ॥ ४४
यस्त्वेतत् श्रुणुयान्नित्यं पठते च सभक्तिकम् ।
स वै वेङ्कटनाथस्य सेवाफलमवाप्नुयात् ॥ ४५

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये वेङ्कटेश्वरवैभवानुवर्णनं नाम अष्टमोऽध्यायः ।

अथ नवमोऽध्यायः

## ब्रह्मादीनां नैरन्तर्येण श्रीवेङ्कटाचले स्थितिवर्णनम्

श्रीसूतः—

अथातः सम्प्रवक्ष्यामि वेङ्कटाचलवैभवम् ।
युष्माकं सावधानेन श्रुणुध्वं सुसमाहिताः ! ॥ १
लक्षकोटिसहस्राणि सरांसि सरितस्तथा ।
समुद्राश्च महापुण्याः वनान्यप्याश्रमा अपि ॥ २
पुण्यानि क्षेत्रजातानि वेदारण्यादिकानि च ।
मुनयश्च वसिष्ठाद्याः सिद्धचारणकिन्नराः ॥ ३

लक्ष्म्या सह धरण्या च भगवान् मधुसूदनः ।
सावित्र्या च सरस्वत्या सहैव चतुराननः ॥ ४

पार्वत्या सह देवेशः त्र्यम्बकस्त्रिपुरान्तकः ।
हेरम्बषण्मुखाद्याश्च देवाः सेन्द्रपुरोगमाः ॥ ५

आदित्यादिग्रहाश्चैव तथाऽष्टवसवो द्विजाः ! ।
पितरो लोकपालाश्च तथाऽन्ये देवतागणाः ॥ ६

महापातकसङ्घानां नाशने लोकपावने ।
दिवानिशं वसन्त्यन्तः वेङ्कटाचलमूर्धनि ॥ ७

तस्य दर्शनमात्रेण बुद्धिसौख्यं नृणां भवेत् ।
तन्मूर्धनि कृतावासाः सिद्धचारणयोषितः ॥ ८

पूजयन्ति सदाकालं वेङ्कटेशं कृपानिधिम् ।
कोटयो ब्रह्महत्यानां अगम्यागमकोटयः ।
अङ्गलग्ना विनश्यन्ति वेङ्कटाचलमारुतैः ॥ ९

## श्रीवेङ्कटाचलारोहणसमयानुसन्धानक्रमः

वेङ्कटाद्रिं गिरिं तन्तु प्रार्थयेत् पुण्यवर्धनम् ।
'स्वर्णाचल! महापुण्य! सर्वदेवनिषेवित! ॥ १०

ब्रह्मादयोऽपि यं देवाः सेवन्ते श्रद्धया सह ।
तं भवन्तमहं पद्भ्यां आक्रमेयं नगोत्तम! ॥ ११

क्षमस्व तदघं मेऽद्य दयया पापचेतसः ।
त्वन्मूर्धनि कृतावासं माधवं दर्शयस्व मे' ॥ १२

प्रार्थयित्वा नरस्त्वेवं वेङ्कटाद्रिं नगोत्तमम् ।
ततो मृदुपदं गच्छेत् पावनं वेङ्कटाचलम् ॥ १३

वेङ्कटाद्रौ महापुण्ये सर्वपातकनाशने ।
स्वामिपुष्करिणीतीर्थे स्नात्वा नियमपूर्वकम् ॥ १४

पिण्डदानं ततः कुर्यात् अपि सर्षपमात्रकम् ।
शमीदलसमानान्वा दद्यात् पिण्डान् पितॄन् प्रति ।
स्वर्गस्था मोक्षमायान्ति स्वर्गं नरकवासिनः ॥ १५

## पापविनाशनाख्यतीर्थमाहात्म्यम्

ततस्तस्योपरि महत् सर्वलोकेषु विश्रुतम् ।
सर्वतीर्थोत्तमं पुण्यं नाम्ना पापविनाशनम् ॥ १६

अस्ति पुण्यतमे विप्राः! पवित्रे वेङ्कटाचले ।
यस्य संस्मरणादेव गर्भवासो न विद्यते ॥ १७

तत्प्राप्य तु नरः स्नायात् स्वामितीर्थस्य चोत्तरे ।
तत्र स्नानान्नरा यान्ति वैकुण्ठं नात्र संशयः ॥ १८

ऋषयः–

सूत! पापविनाशाख्यतीर्थस्य ब्रूहि वैभवम् ।
व्यासेन बोधितस्त्वं हि वेत्सि सर्वं महामुने! ॥ १९

श्रीसूतः–

ब्रह्माऽऽश्रमपदे वृत्तां पार्श्वे हिमवतः शुभे ।
वक्ष्यामि ब्राह्मणश्रेष्ठाः! युष्माकन्तु कथां शुभाम् ॥ २०

तदाश्रमपदं पुण्यं ब्रह्माऽऽश्रमपदं शुभम् ।
नानावृक्षसमाकीर्णं पार्श्वे हिमवतः शुभे ॥ २१

बहुगुल्मलताऽऽकीर्णं मृगद्विपनिषेवितम् ।
सिद्धचारणसङ्घुष्टं रम्यं पुष्पितकाननम् ॥ २२

यतिभिर्बहुभिः कीर्णं तापसैरुपशोभितम् ।
ब्राह्मणैश्च महाभागैः सूर्यज्वलनसन्निभैः ॥ २३

नियमव्रतसम्पन्नैः समाकीर्णं तपस्विभिः ।
दीक्षितैर्योगशीलैश्च यताऽऽहारैः कृताऽऽत्मभिः ॥ २४
वेदाध्ययनसम्पन्नैः वैदिकैः परिवेष्टितम् ।
वर्णिभिश्च गृहस्थैश्च वानप्रस्थैश्च भिक्षुभिः ॥ २५
स्वाश्रमाचारनिरतैः स्ववर्णोक्तविधायिभिः ।
वालखिल्यैश्च ऋषिभिः समन्तात्परिवेष्टितम् ॥ २६

दृढमत्याख्यशूद्रवृत्तान्तः ।

तत्राऽऽश्रमे पुरा कश्चित् शूद्रो दृढमतिर्द्विजाः ! ।
साहसी ब्राह्मणाभ्याशं आजगाम मुदाऽन्वितः ॥ २७
आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ।
नाम्ना दृढमतिः शूद्रः साष्टाङ्गं प्रणनाम वै ॥ २८
तान् स दृष्ट्वा मुनिगणान् देवकल्पान् महौजसः ।
कुर्वतो विविधान् यज्ञान् सम्प्राहृष्यत शूद्रकः ॥ २९
अथास्य बुद्धिरभवत् तपः कर्तुमनुत्तमम् ।
ततोऽब्रवीत् कुलपतिं मुनिमागत्य तापसम् ॥ ३०

दृढमतिः—

'तपोधन! नमस्तेऽस्तु रक्ष मां करुणानिधे ! ।
तव प्रसादादिच्छामि यागं कर्तुं प्रसीद मे' ॥ ३१
एवमुक्तस्तु शूद्रेण तमाह ब्राह्मणस्तदा ।

दृढमतिं प्रति कुलपत्याख्यमुन्युपदिष्टशूद्रधर्माः ।

कुलपतिः—

'यागे दीक्षयितुं शक्यो न शूद्रो हीनजन्मभाक् ॥ ३२
श्रूयते यदि ते बुद्धिः शुश्रूषानिरतो भव ।
उपदेशो न कर्तव्यो जातिहीनस्य कर्हिचित् ॥ ३३

उपदेशो महान् दोष उपाध्यायस्य विद्यते ।
नाध्यापयेद्बुधः शूद्रं तथा नैव च याजयेत् ॥ ३४
न पाठयेत् तथा शूद्रं शास्त्रं व्याकरणादिकम् ।
काव्यं वा नाटकं वाऽपि तथाऽलङ्कारमेव वा ॥ ३५
पुराणमितिहासञ्च शूद्रं नैव तु पाठयेत् ।
यदि चोपदिशेद्विप्रः शूद्रस्यैतानि कर्हिचित् ॥ ३६
त्यजेयुर्ब्राह्मणा विप्रं तं ग्रामाद्ब्रह्मसङ्कुलात् ।
शूद्राय चोपदेष्टारं द्विजं चण्डालवत्त्यजेत् ॥ ३७
शूद्रं चाक्षरसंयुक्तं दूरतः परिवर्जयेत् ।
तच्छुश्रूषस्व भद्रं ते ब्राह्मणाञ्छ्रद्धया सह ॥ ३८
शूद्रस्य द्विजशुश्रूषा मन्वादिभिरुदीरिता ।
न हि नैसर्गिकं कर्म परित्यक्तुं त्वमर्हसि ' ॥ ३९
एवमुक्तः स मुनिना स शूद्रोऽचिन्तयत्तदा ।
' किं कर्तव्यं मया त्वद्य व्रते श्रद्धा हि मे परा ॥ ४०
यथा स्यान्मम सुज्ञानं यतिष्येऽहं तथाऽद्य वै ' ।
इति निश्चित्य मनसा शूद्रो दृढमतिस्तदा ॥ ४१
गत्वाऽऽश्रमपदाद्दूरं कृतवानुटजं शुभम् ।
तत्र वै देवताऽगारं पुण्यान्यायतनानि च ॥ ४२
पुष्पारामादिकञ्चापि तटाकखननादिकम् ।
श्रद्धया कारयामास तपःसिद्ध्यर्थमात्मनः ॥ ४३
अभिषेकांश्च नियमान् उपवासादिकानपि ।
बलिं कृत्वा च हुत्वा च दैवतान्यभ्यपूजयत् ॥ ४४
सङ्कल्पनियमोपेतः फलाऽहारो जितेन्द्रियः ।
नित्यं कन्दैश्च मूलैश्च पुष्पैरपि तथा फलैः ॥ ४५

अतिथीन् पूजयामास यथावत् समुपागतान् ।
एवं हि सुमहान् कालो व्यतिचक्राम तस्य वै ॥ ४६

## दृढमतये सुमत्याख्यविप्रप्रकाशितकर्मानुष्ठानक्रमः ।

अथाऽऽश्रममगात्तस्य सुमतिर्नाम नामतः ।
द्विजो भार्गकुलोद्भूतः सत्यवादी जितेन्द्रियः ॥ ४७
स्वागतैर्मुनिमाराध्य तोषयित्वा फलादिकैः ।
कथयन्वै कथाः पुण्याः कुशलं पर्यपृच्छत ॥ ४८
इत्थं सम्प्रति पाद्याद्यैः उपचारैस्तु पूजितः ।
आशीर्भिरभिनन्द्यैनं प्रतिगृह्य च सत्क्रियाम् ॥ ४९
तमापृच्छत् प्रहृष्टात्मा स्वाऽऽश्रमं पुनराययौ ।
एवं दिनेदिने विप्रः शूद्रेऽस्मिन् पक्षपातवान् ॥ ५०
आगच्छदाश्रमं तस्य द्रष्टुं तं शूद्रयोनिजम् ।
बहुकालं द्विजस्याभूत् संसर्गः शूद्रयोनिना ॥ ५१
स्नेहस्य वशमापन्नः शूद्रोक्तं नातिचक्रमे ।
अथाऽऽगतं द्विजं शूद्रः प्राह स्नेहवशीकृतम् ॥ ५२
हव्यकव्यविधानं मे ब्रूहि त्वं तु गुरुर्मतः ।
एवमुक्तः स शूद्रेण सर्वमेतदुपाऽऽदिशत् ॥ ५३
कारयामास शूद्रस्य पितृकार्यादिकं तदा ।
पितृकार्ये कृते तेन विसृष्टः स द्विजोत्तमः ॥ ५४

## शूद्रस्य वैदिककर्मोपदेशेन सुमत्यनुभूतदुर्गतिः ।

अथ दीर्घेण कालेन पोषितः शूद्रयोनिना ।
त्यक्तो विप्रगणैः सोऽयं पञ्चत्वमगमत् द्विजः ॥ ५५

वैवस्वतभटैर्नीत्वा पातितो नरकेष्वपि ।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ५६
भुक्त्वा क्रमेण नरकान् तदन्ते स्थावरोऽभवत् ।
गर्दभस्तु ततो जज्ञे विड्वराहस्ततः परम् ॥ ५७
जज्ञेऽथ सारमेयोऽसौ पश्चाद्वायसतां गतः ।
अथ चण्डालतां प्राप्य शूद्रयोनिमगात्ततः ॥ ५८
गतवान् वैश्यतां पश्चात् क्षत्रियस्तदनन्तरम् ।
प्रबलैर्बाध्यमानोऽसौ ब्राह्मणो वै तदाऽभवत् ॥ ५९
उपनीतः स पित्रा तु वर्षे गर्भाष्टमे द्विजः ।
वर्तमानः पितुर्गेहे स्वाचाराभ्यासतत्परः ॥ ६०
गच्छन् कदाचिद्गहने गृहीतो ब्रह्मरक्षसा ।
रुदन् भ्रमन् स्खलन् मूढः प्रलपन् प्रहसन्नसौ ॥ ६१
शश्वद्धाहेति च वदन् वैदिकं कर्म सोऽत्यजत् ।
दृष्ट्वा सुतं तथाभूतं पिता दुःखेन पीडितः ॥ ६२
सुतमादाय च स्नेहात् अगस्त्यं शरणं ययौ ।
सुवर्णमुखरीतीरे तपस्यन्तं शिवाग्रतः ॥ ६३
भक्त्या मुनिं प्रणम्याऽसौ पिता तस्य सुतस्य वै ।
तस्मै निवेदयामास स्वपुत्रस्य विचेष्टितम् ॥ ६४

## अगस्त्योक्त्या दुर्गत्यपनोदनार्थं सुमतेर्वेङ्कटाद्रिगमनम् ।

अब्रवीच्च तदा विप्रः कुम्भजं मुनिपुङ्गवम् ।
'एष मे तनयो ब्रह्मन्! गृहीतो ब्रह्मरक्षसा ॥ ६५
सुखं न लभते ब्रह्मन्! रक्ष तं करुणादृशा ।
नास्ति मे तनयोऽप्यन्यः पितॄणामृणमुक्तये ॥ ६६

तस्य पीडाविनाशार्थं उपायं ब्रूहि कुम्भज ! ।
त्वत्समस्त्रिषु लोकेषु तपःशीलो न विद्यते ॥ ६७
त्वां विनाऽस्य परित्राता न मे पुत्रस्य विद्यते ।
पुत्रे दयां कुरु गुरो! दयाशीला हि साधवः ' ॥ ६८

एवमुक्तस्तदा तेन कुम्भजो ध्यानमास्थितः ।
ध्यात्वा तु सुचिरं कालं अब्रवीद्ब्राह्मणं ततः ॥ ६९

' पूर्वजन्मनि ते पुत्रो ब्राह्मणोऽयं महामते ! ।
सुमतिर्नाम विप्रोऽयं मतिं शूद्राय वै ददौ ॥ ७०
कर्माणि वैदिकान्येष सर्वाण्युपदिदेश वै ।
अतोऽयं नरकान् भुङ्क्त्वा कल्पकोटिसहस्रकम् ॥ ७१
जातो भुवि तदन्तेषु स्थावरादिषु योनिषु ।
इदानीं ब्राह्मणो जातः कर्मशेषेण ते सुतः ॥ ७२
यमेन प्रेषितेनात्र गृहीतो ब्रह्मरक्षसा ।
क्रूरेण पातकेनाद्य पूर्वजन्मकृतेन वै ॥ ७३
उपायं ते प्रवक्ष्यामि ब्रह्मरक्षोविनाशने ।
शृणुष्व श्रद्धया युक्तः समाधाय च मानसम् ॥ ७४
सुवर्णमुखरीतीरे ऋषिसङ्घनिषेविते ।
वर्तते दैवतैः सेव्यः पावनो वेङ्कटाचलः ॥ ७५
तस्योपरि महातीर्थं नाम्ना पापविनाशनम् ।
अस्ति पुण्यं प्रसिद्धञ्च महापातकनाशनम् ॥ ७६
भूतप्रेतपिशाचानां वेतालब्रह्मरक्षसाम् ।
महताञ्चैव रोगाणां तीर्थं तन्नाशकं स्मृतम् ॥ ७७

सुतमादाय गच्छ त्वं तत्तीर्थं गिरिमध्यगम् ।
प्रयत्नः स्नापय सुतं तीर्थे पापविनाशने ॥ ७८
स्नानेन त्रिदिनं तत्र ब्रह्मरक्षो विनश्यति ।
नैवोपायान्तरं तस्य विनाशे विद्यते भुवि ॥ ७९
तस्माच्छीघ्रं प्रयाहि त्वं वेङ्कटाऽह्वयपर्वतम् ।
तत्र पापविनाशाख्यतीर्थे स्नापय ते सुतम् ॥ ८०
मा विलम्बं कुरुष्वात्र त्वरया याहि वै द्विज! ' ।
इत्युक्तः स द्विजोऽगस्त्यं प्रणम्य भुवि दण्डवत् ॥ ८१
अनुज्ञातश्च तेनासौ प्रययौ वेङ्कटाचलम् ।
सुतेन साकं विप्रोऽसौ गत्वा पापविनाशनम् ॥ ८२

## सुमतेः पापनाशनस्नानेन दुर्गत्यपनोदनम् ।

सङ्कल्पपूर्वं संस्नाप्य दिनत्रयमसौ सुतम् ।
सस्नौ स्वयञ्च विप्रेन्द्रः पिता पापविनाशने ॥ ८३
समागतः पपौ तोयं कृत्वा चाप्याह्निकक्रमम् ।
अथ तस्य सुतस्तत्र विमुक्तो ब्रह्मरक्षसा ॥ ८४
समजायत नीरोगः स्वस्थः सुन्दररूपधृक् ।
सर्वसम्पत्समृद्धोऽसौ भुक्त्वा भोगाननेकशः ॥ ८५
देहान्ते प्रययौ मुक्तिं स्नानात् पापविनाशने ।
पिताऽपि तत्र स्नानेन देहान्ते मुक्तिमाप्तवान् ॥ ८६

## वैदिककर्मानुष्ठातुर्दृढमतेः दुर्गतित्राण्त्यपनोदनम् ।

तेनोपदिष्टोऽयं शूद्रः स भुक्त्वा नरकान् क्रमात् ।
अनेकासु जनित्वा च कुत्सितास्वपि योनिषु ॥ ८७

गृध्रजन्माऽभवत्पश्चात् वेङ्कटाचलभूधरे ।
स कदाचिज्जलं पातुं तीर्थे पापविनाशने ॥ ८८
समागतः पपौ तोयं सिषिचे चात्मनस्तनुम् ।
तदैव दिव्यदेहः सन् सर्वाऽभरणभूषितः ।
दिव्यं विमानमारुह्य प्रययावमराऽलयम् ॥ ८९

श्रीसूत :– एवम्प्रभावमेतद्वै तीर्थं पापविनाशनम् ।
पापानां नाशनाद्विप्राः पापनाशाभिधं हि तत् ॥ ९०

इत्थं रहस्यं कथितं मुनीन्द्राः! तद्वैभवं पापविनाशनस्य ।
यत्राभिषेकात् सहसा विमुक्तौ द्विजश्च शूद्रश्च विनिन्द्यकृत्यौ ॥ ९१

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये पापविनाशन-
तीर्थमहिमानुवर्णनं नाम नवमोऽध्यायः ।

---

अथ दशमोऽध्यायः

—:※:—

## भूयः पापविनाशनतीर्थमाहात्म्यवर्णनम् ।

श्रीसूतः–

पुनश्चाहं प्रवक्ष्यामि पापनाशनवैभवम् ।
भगवद्भक्तिभावेन शृणुध्वं सुसमाहिताः! ॥ १
इतिहासं प्रवक्ष्यामि सर्वपापविनाशनम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ २

## भद्रमत्याख्यदरिद्रद्विजवृत्तान्तः ।

आसीत् पुरा द्विजवरो वेदवेदाङ्गपारगः ।
दरिद्रो वृत्तिहीनश्च नाम्ना भद्रमतिर्द्विजः ॥ ३

श्रुतानि सर्वशास्त्राणि तेन विप्रेण धीमता ।
श्रुतानि च पुराणानि धर्मशास्त्राणि सर्वशः ॥ ४
अभवंस्तस्य षट् पत्न्यः कृता सिन्धूर्यशोवती ।
कामिनी मालिनी चैव शोभा चैव प्रकीर्तिताः ॥ ५
तासु पत्नीषु तस्याऽसीत् पुत्राणाञ्च शतद्वयम् ।
ते सर्वे तस्य पुत्राद्याः क्षुधया परिपीडिताः ॥ ६
अकिञ्चनो भद्रमतिः क्षुधार्तानात्मजान् प्रियान् ।
पश्यन् प्रियाः क्षुधार्ताश्च विललापाऽकुलेन्द्रियः ॥ ७
धिक् जन्म भाग्यरहितं धिक् जन्म धनवर्जितम् ।
धिक् जन्म कीर्तिरहितं धिक् जन्माऽतिथ्यवर्जितम् ॥ ८
धिक् जन्माऽचाररहितं धिक् जन्म ज्ञानवर्जितम् ।
धिक् जन्म यत्नरहितं धिक् जन्म सुखवर्जितम ॥ ९
धिक् जन्म बन्धुरहितं धिक् जन्म ख्यातिवर्जितम् ।
नरस्य वह्वपत्यस्य धिक् जन्मैश्वर्यवर्जितम् ॥ १०
अहो गुणाः सौम्यता च विद्वत्ता जन्म सत्कुले ।
दारिद्र्याम्बुधिमग्नस्य सर्वमेतन्न शोभते ॥ ११
विप्राः पुत्राश्च पौत्राश्च बान्धवा भ्रातरस्तथा ।
शिष्याश्च सर्वे मनुजाः त्यजन्त्यैश्वर्यवर्जितम् ॥ १२
इति निश्चित्य मतिमान् धीरो भद्रमतिर्द्विजः ।
चण्डालो वा द्विजो वापि भाग्यवानेव पूज्यते ॥ १३
दरिद्रः पुरुषो लोके शववल्लोकनिन्दितः ।
अहो सम्पत्समायुक्तो निष्ठुरो वाऽप्यनिष्ठुरः ॥ १४
गुणहीनोऽपि गुणवान् मूर्खो वापि स पण्डितः ।
निष्ठुरो वा गुणी वापि धर्महीनोऽथ वा नरः ॥ १५

ऐश्वर्यगुणयुक्तश्चेत् पूज्य एव न संशयः ।
अहो दरिद्रता दुःखं तत्राप्याशाऽतिदुःखदा ।
आशाभिभूताः पुरुषाः दुःखमश्नुवते क्षणात् ॥ १६

आशाया दासा ये दासाः ते सर्वलोकस्य ।
आशा दासी येषां तेषां दासायते लोकः ॥ १७

सर्वशास्त्रार्थवेत्ताऽपि दरिद्रो भाति मूर्खवत् ।
आकिञ्चन्यमहाग्राहग्रस्तानां नास्ति मोचकः ॥ १८

अहो दुःखमहो दुःखमहो दुःखं दरिद्रता ।
तत्रापि पुत्रदाराणां बाहुल्यमतिदुःखदम् ॥ १९

एवमुक्त्वा भद्रमतिः सर्वशास्त्रार्थपारगः ।
अत्यैश्वर्यपदं धर्मं मनसा चिन्तयंस्तदा ।
तूष्णीं स्थितो भद्रमतिः महाक्लेशसमन्वितः ॥ २०

## भद्रमतेः कामिनीकृतवेङ्कटाद्रिगमनप्रोत्साहनम् ।

तदानीं तासु भार्यासु कामिनी पतिदेवता ।
भार्या साधुगुणैर्युक्ता पतिं तं प्रत्यभाषत ॥ २१

कामिनीः—

"भगवन्! सर्वधर्मज्ञ! सर्वशास्त्रार्थपारग! ।
मम नाथ! महाभाग! वाक्यं शृणु महामते! ॥ २२

सुवर्णमुखरीतीरे ऋषिसङ्घनिषेविते ।
वर्तते दैवतैः सेव्यः पावनो वेङ्कटाचलः ॥ २३

तस्मिन् वेङ्कटशैलेन्द्रे सुरासुरनमस्कृते ।
वर्तते पावनं तीर्थं पापानां दाहकं शुभम् ॥ २४

तत्र गत्वा महाभाग! पापनाशे महामते! ।
कुरु स्नानं प्रयत्नेन भार्यापुत्रसमन्वितः ॥ २५

तस्य तीर्थस्य माहात्म्यं नारदेन श्रुतं मया ।
बालभावे मम पितुरन्तिके प्रोक्तवान् मुनिः ॥ २६
'वेङ्कटाद्रौ महापुण्ये सर्वपातकनाशने ।
सर्वदुःखप्रशमने सर्वसम्पत्प्रदायके ॥ २७
पापनाशे महातीर्थे स्नात्वा सङ्कल्पपूर्वकम् ।
अत्यैश्वर्यप्रदं धर्मं मनसा चिन्तयंस्तदा ॥ २८
भूमिदानं विनिश्चित्य सर्वदानोत्तमोत्तमम् ।
प्रापकं परलोकस्य सर्वकामफलप्रदम् ॥ २९
दानानामुत्तमं दानं भूदानं परिकीर्तितम् ।
तद्दत्वा समवाप्नोति यद्यदिष्टतमं नरः' ॥ ३०
इत्येवं नारदेनोक्तं श्रुत्वा मे जनको द्विजः ।
सम्प्रहृष्टमना भूत्वा शेषाद्रिं प्राप्तवांस्तदा ॥ ३१
तत्र गत्वा महाभागः सर्वसम्पत्प्रदायकम् ।
भूदानं विप्रवर्याय श्रोत्रियाय प्रदत्तवान् ॥ ३२
ततो मे जनको विद्वन्! सर्वभाग्यसमन्वितः ।
इह लोके सुखं प्राप्य चान्ते विष्णुपुरं ययौ ॥ ३३
त्वञ्च गत्वा महाभाग! वेङ्कटाद्रिं नगोत्तमम् ।
कुरु दानं प्रयत्नेन भूदानं सर्वकामदम् ॥ ३४

## कामिनीकथितभूदानप्रशंसा ।

भूमिदानस्य माहात्म्यं शृणुष्व सुसमाहितः ।
न कोऽपि गदितुं शक्तो लोकेऽस्मिन् भगवन्! प्रभो! ॥ ३५
भूमिदानात् परं दानं न भूतं न भविष्यति ।
परं निर्वाणमाप्नोति भूमिदो नात्र संशयः ॥ ३६

स्वल्पामपि महीं दत्त्वा श्रोत्रियायाऽहिताग्नये ।
ब्रह्मलोकमवाप्नोति पुनरावृत्तिवर्जितम् ॥ ३७
भूमिदः सर्वदः प्रोक्तो भूमिदो मोक्षभाक् भवेत् ।
भूमिदानं वृषाद्रौ च सर्वपापप्रणाशनम् ॥ ३८
महापातकयुक्तो वा युक्तो वा सर्वपातकैः ।
दशहस्तां महीं दत्त्वा सर्वपापैः प्रमुच्यते ॥ ३९
सत्पात्रे भूमिदाता यः सर्वदानफलं लभेत् ।
भूमिदस्य समो नान्यः त्रिषु लोकेषु विद्यते ॥ ४०
द्विजस्य वृत्तिहीनस्य यः प्रदद्यान्महीं शुभाम् ।
तस्य पुण्यफलं वक्तुं शेषो नार्हः कदाचन ॥ ४१
विप्रस्य वृत्तिहीनस्य सदाचारस्य कस्य चित् ।
योऽल्पामपि महीं दद्यात् स विष्णुर्नात्र संशयः ॥ ४२
इक्षुगोधूमकेदारपूगवृक्षादिसंयुता ।
पृथ्वी प्रदीयते येन स विष्णुर्नात्र संशयः ॥ ४३
वृत्तिहीनस्य विप्रस्य दरिद्रस्य कुटुम्बिनः ।
स्वल्पामपि महीं दत्त्वा विष्णुसायुज्यमश्नुते ॥ ४४
सक्तस्य देवपूजासु विप्रस्याटविका मही ।
दत्ता भवति गङ्गायां त्रिरात्रस्नानजं फलम् ॥ ४५
विप्रस्य वृत्तिहीनस्य सदाचाररतस्य च ।
द्रोणिकां पृथिवीं दत्त्वा यत्फलं लभते शृणु ॥ ४६
गङ्गातीरेऽश्वमेधानां शतानि विधिवन्नरः ।
कृत्वा यत्फलमाप्नोति तदाप्नोति महत्फलम् ॥ ४७
ददाति भारिकां भूमिं दरिद्राय द्विजातये ।
तस्य पुण्यं प्रवक्ष्यामि मन्नाथ! भगवन्! प्रभो! ॥ ४८

अश्वमेधसहस्राणि वाजपेयशतानि च ।
विधाय जाह्नवीतीरे यत्फलं तल्लभेत सः ॥ ४०

भूमिदानं महादानमतिदानं प्रकीर्तितम् ।
सर्वपापप्रशमनं अपवर्गफलप्रदम् ॥ ५०

यच्छ्रुत्वा श्रद्धया युक्तो भूमिदानफलं लभेत् ।
भार्याया वचनं श्रुत्वा त्वितिहाससमन्वितम् ॥ ५१

सन्तुष्टो मनसि ध्यात्वा शेषाचलनिवासिनम् ।
गन्तुं प्रचक्रमे बुद्ध्या क्रीडाचलमनुत्तमम् ॥ ५२

## भद्रमतये भूप्रदानात् सुघोषस्य सद्गतिः

ततो भद्रमतिः सौम्यः सर्वधर्मपरायणः ।
सुशालिं नाम नगरीं कलत्रसहितो ययौ ॥ ५३

सुघोषं नाम विप्रेन्द्रं सर्वैश्वर्यसमन्वितम् ।
गत्वा याचितवान् भूमिं पञ्चहस्ताऽयतां द्विजः ॥ ५४

सुघोषो धर्मनिरतः तं निरीक्ष्य कुटुम्बिनम् ।
मनसा प्रीतिमापन्नः समभ्यर्च्यैनमब्रवीत् ॥ ५५

'कृतार्थोऽहं भद्रमते! सफलं मम जन्म च ।
मत्कुलञ्चानघं जातं त्वं हि ग्राह्योऽसि मे यतः' ॥ ५६

इत्युक्त्वा तं समभ्यर्च्य सुघोषो धर्मतत्परः ।
पञ्चहस्तप्रमाणां तां ददौ तस्मै महामतिः ॥ ५७

'पृथिवी वैष्णवी पुण्या पृथिवी विष्णुपालिता ।
पृथिव्यास्तु प्रदानेन प्रीयतां मे जनार्दनः' ॥ ५८

मन्त्रेणानेन विप्रेन्द्राः! सुघोषस्तं द्विजेश्वरम् ।
विष्णुबुद्ध्या समभ्यर्च्य तावतीं पृथिवीं ददौ ॥ ५९

स भद्रमतये विप्राः ! धीमांस्तां याचितां भुवम् ।
दत्तवान् हरिभक्ताय श्रोत्रियाय कुटुम्बिने ॥ ६०
सुघोषो भूमिदानेन कोटिवंशसमन्वितः ।
प्रपेदे विष्णुभवनं यत्र गत्वा न शोचति ॥ ६१

## भद्रमतेः पापनाशनतीरे भूदानार्थं वेङ्कटाद्रिगमनम्

विप्रो भद्रमतिश्चापि पुत्रदारसमन्वितः ।
गतो वेङ्कटशैलेन्द्रं सुरासुरनमस्कृतम् ॥ ६२
गन्धर्वयक्षशैलादिसेवितं मेरुपुत्रकम् ।
वैकुण्ठादागतं दिव्यं क्रीडाचलमनुत्तमम् ॥ ६३
तत्र स्वामिसरस्तोये निर्मले पावने शुभे ।
दारपुत्रादिसंयुक्तः स्नात्वा सङ्कल्पपूर्वकम् ॥ ६४
तत्पश्चिमतटे श्वेतसूकरं वसुधाधरम् ।
नत्वा तत्र विधानेन श्रीनिवासाऽलयं गतः ॥ ६५
तत्र ब्रह्मादिदेवैश्च सेवितं वेङ्कटेश्वरम् ।
दृष्टवान् सहपुत्राद्यैः विष्णुभक्तो महामतिः ॥ ६६
भक्त्या प्रणम्य देवेशं श्रीनिवासं कृपानिधिम् ।
पुत्रदारादिसंयुक्तः पापनाशनमाययौ ॥ ६७
तत्र स्नात्वा विधानेन कृतधर्मादिसत्क्रियः ।
कस्मैचित् विष्णुभक्ताय श्रोत्रियाय महामतिः ।
विष्णुबुद्ध्या स प्रददौ भूदानं मोक्षदं शुभम् ॥ ६८

## भूदानप्रभावेण भगवत्साक्षात्कारः

तदा प्रादुरभूद्देवः शङ्खचक्रगदाधरः ।
विनतानन्दनारूढो वनमालाविभूषितः ॥ ६९

पापनाशस्य तीरे तु भूदानस्य प्रभावतः ।
तदा भद्रमतिः सौम्यः स्तोतुं समुपचक्रमे ॥ ७०

नमो नमस्तेऽखिलकारणाय
नमो नमस्तेऽखिलपालकाय ।
नमो नमस्तेऽमरनायकाय
नमो नमो दैत्यविमर्दनाय ॥ ७१

नमो नमो भक्तजनप्रियाय
नमो नमः पापविदारणाय ।
नमो नमो दुर्जननाशकाय
नमोऽस्तु तस्मै जगदीश्वराय ॥ ७२

नमो नमः कारणवामनाय
नारायणायामितविक्रमाय ।
श्रीशार्ङ्गचक्रासिगदाधराय
नमोऽस्तु तस्मै पुरुषोत्तमाय ॥ ७३

नमः पयोराशिनिवासकाय
नमोऽस्तु लक्ष्मीपतयेऽव्ययाय ।
नमोऽस्तु सूर्याद्यमितप्रभाय
नमो नमः पुण्यगतागताय ॥ ७४

नमो नमोऽर्केन्दुविलोचनाय
नमोऽस्तु ते यज्ञफलप्रदाय ।
नमोऽस्तु यज्ञाङ्गविराजिताय
नमोऽस्तु ते सज्जनवल्लभाय ॥ ७५

नमो नमः कारणकारणाय
नमोऽस्तु शब्दादिविवर्जिताय ।

नमोऽस्तु तेऽभीष्टसुखप्रदाय
नमो नमो भक्तमनोरमाय ॥ ७६

नमो नमस्तेऽखिलकारणाय
नमोऽस्तु ते मन्दरधारकाय ।
नमोऽस्तु ते यज्ञवराहनाम्ने
नमो हिरण्याक्षविदारकाय ॥ ७७

नमोऽस्तु ते वामनरूपभाजे
नमोऽस्तु ते क्षत्रकुलान्तकाय ।
नमोऽस्तु ते रावणमर्दनाय
नमोऽस्तु ते नन्दसुताग्रजाय ॥ ७८

नमस्ते कमलाकान्त! नमस्ते सुखदायिने ।
श्रितार्तिनाशिने तुभ्यं भूयो भूयो नमो नमः' ॥ ७९

विप्रेण संस्तुतो देवो भगवान् भक्तवत्सलः ।
वात्सल्येनाब्रवीद्वाक्यं श्रीनिवासो दयानिधिः ॥ ८०

'तात! तुष्टोऽस्मि भद्रं ते स्तोत्रेण महता द्विज! ।
सर्वभोगसमायुक्तः पुत्रपौत्रादिभिर्युतः ॥ ८१

इह लोके सुखं प्राप्य देहान्ते मुक्तिमाप्नुहि' ।
इत्युक्त्वा भगवान् विष्णुः तत्रैवान्तरधीयत ॥ ८२

एवं वः कथितं विप्राः पापनाशनवैभवम् ।
तत्तीरे भूप्रदानस्य माहात्म्यञ्चापि वर्णितम् ॥ ८३

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये पापविनाशनतीर्थे
भूदानफलानुवर्णनं नाम दशमोऽध्यायः ।

---

### अथ एकादशोऽध्यायः

## रामानुजाख्यद्विजवृत्तान्तः

श्रीसूतः—

भो भोस्तपोधनाः! सर्वे नैमिशारण्यवासिनः!।
आकाशगङ्गातीर्थस्य माहात्म्यं प्रवदाम्यहम् ॥ १
आकाशगङ्गानिकटे सर्वशास्त्रार्थपारगः।
रामानुज इति ख्यातो विष्णुभक्तो जितेन्द्रियः ॥ २
तपश्चकार धर्मात्मा वैखानसमते स्थितः।
ग्रीष्मे पञ्चाग्निमध्यस्थो विष्णुध्यानपरायणः ॥ ३
जपन्नष्टाक्षरं मन्त्रं ध्यायन् हृदि जनार्दनम्।
वर्षास्वाकाशगो नित्यं हेमन्तेषु जलेशयः ॥ ४
सर्वभूतहितो दान्तः सर्वद्वन्द्वविवर्जितः।
वर्षाणि कतिचित्सोऽयं जीर्णपर्णाशनोऽभवत्।
कञ्चित्कालं जलाहारो वायुभक्षः कियत्समाः ॥ ५

## आकाशगङ्गातीरे रामानुजतपस्तुष्टभगवदाविर्भावः

अथ तत्तपसा तुष्टो भगवान् भक्तवत्सलः।
प्रत्यक्षतामगात्तस्य शङ्खचक्रगदाधरः ॥ ६
विकचाम्बुजपत्राक्षः सूर्यकोटिसमप्रभः।
विनतानन्दनारूढः छत्रचामरशोभितः ॥ ७
हारकेयूरमकुटः कटकादिविभूषितः।
विष्वक्सेनसुनन्दादिकिङ्करैः परिवारितः ॥ ८
वीणावेणुमृदङ्गादिवादकैर्नारदादिभिः।
गीयमानः सुविभवः पीताम्बरविराजितः ॥ ९

लक्ष्मीविराजितोरस्को नीलमेघनिभच्छविः ।
सनकादिमहायोगिसेवितः पार्श्वयोर्द्वयोः ॥ १०
मन्दस्मितेन सकलं मोहयन् भुवनत्रयम् ।
स्वभासा भासयन् सर्वा दिशो दश विराजयन् ॥ ११
सुभक्तसुलभो देवो वेङ्कटेशो दयानिधिः ।
पुनः सन्निदधे तस्य रामानुजमहामुनेः ॥ १२
आविर्भूतं तदा दृष्ट्वा श्रीनिवासं कृपानिधिम् ।
पीताम्बरधरं देवं तुष्टिं प्राप महामुनिः ।
भक्त्या परमया युक्तः तुष्टाव जगदीश्वरम् ॥ १३

## रामानुजाख्यविप्रकृतभगवत्स्तुतिः

रामानुजः– 'नमो देवाधिदेवाय शङ्खचक्रगदाभृते ।
नमो नित्याय शुद्धाय वेङ्कटेशाय ते नमः ॥ १४
नमो भक्तार्तिहन्त्रे ते हव्यकव्यस्वरूपिणे ।
नमस्त्रिमूर्तये तुभ्यं सृष्टिस्थित्यन्तकारिणे ॥ १५
नमः परेशाय नमोऽतिभूम्ने
नमोऽस्तु लक्ष्मीपतये विधात्रे ।
नमोऽस्तु सूर्येन्दुविलोचनाय
नमो विरिञ्चाद्यभिवन्दिताय ॥ १६
यो नामजात्यादिविकल्पहीनः
समस्तदोषैरपि वर्जितो यः ।
समस्तसंसारभयापहारिणे
तस्मै नमो दैत्यविनाशकाय ॥ १७
वेदान्तवेद्याय रमेश्वराय वृषाद्रिवासाय विधातृपित्रे ।
नमो नमः सर्वजनार्तिहारिणे नारायणायामितविक्रमाय ॥ १८

नमस्तुभ्यं भगवते वासुदेवाय शार्ङ्गिणे ।
भूयो भूयो नमस्तुभ्यं वेङ्कटाद्रिनिवासिने' ॥ १९
इति स्तुत्वा वेङ्कटेशं श्रीनिवासं जगद्गुरुम् ।
रामानुजो मुनिस्तूष्णीं आस्ते विप्रवरोत्तमः ॥ २०
श्रुत्वा स्तुतिं श्रुतिसुखां हरिस्तस्य महात्मनः ।
अवाप परमं तोषं वेङ्कटाचलनायकः ॥ २१
अथाऽलिङ्ग्य मुनिं शौरिः चतुर्भिर्बाहुभिस्तदा ।
बभाषे प्रीतिसंयुक्तो 'वरं वै व्रियता'मिति ॥ २२
'तुष्टोऽस्मि तपसा तेऽद्य स्तोत्रेणापि महामुने! ।
नमस्कारेण च प्रीतो वरदोऽहं तवाऽगतः ॥ २३

## रामानुजाख्यविप्रकृतभगवत्प्रार्थना

रामानुजः—

'नारायण रमानाथ श्रीनिवास जगन्मय! ।
जनार्दन जगद्धाम गोविन्द नरकान्तक! ॥ २४
त्वद्दर्शनात्कृतार्थोऽस्मि वेङ्कटाद्रिशिरोमणे! ।
त्वां नमस्यन्ति धर्मिष्ठा यतस्त्वं धर्मपालकः ॥ २५
यन्न वेत्ति भवो ब्रह्मा यन्न वेत्त त्रयी तथा ।
त्वां वेद्मि परमात्मानं किमस्मादधिकं परम्? ॥ २६
योगिनो यं न पश्यन्ति यं न पश्यन्ति कर्मठाः ।
पश्यामि परमात्मानं किमस्मादधिकं परम्? ॥ २७
एतेन च कृतार्थोऽस्मि वेङ्कटेश जगत्पते! ।
यन्नामस्मृतिमात्रेण महापातकिनोऽपि च ॥ २८
मुक्तिं प्रयान्ति मनुजाः तं पश्यामि जनार्दनम् ।
त्वत्पादपद्मयुगले निश्चला भक्तिरस्तु मे' ॥ २९

## भगवद्वर्णिताऽऽकाशगङ्गातीर्थस्नानकालः

श्रीभगवान्– मयि भक्तिर्दृढा तेऽस्तु रामानुज! महामते!।
श्रृणु चाप्यपरं वाक्यं उच्यते ते मया द्विज!॥ ३०
मेषसङ्क्रमणे भानोः चित्रानक्षत्रसंयुते।
पौर्णमास्याञ्च गङ्गायां स्नानं कुर्वन्ति ये जनाः॥ ३१
ते यान्ति परमं धाम पुनरावृत्तिवर्जितम्।
वियद्गङ्गासमीपे त्वं वस रामानुज द्विज!॥ ३२
एतत्प्रारब्धदेहान्ते मत्स्वरूपमवाप्स्यसि।
बहुना किमिहोक्तेन वियद्गङ्गाजले शुभे॥ ३३
स्नान्ति ये वै जनाः सर्वे ते वै भागवतोत्तमाः।
भवन्ति मुनिशार्दूल! नात्र कार्या विचारणा॥ ३४

रामानुजः—
'किंलक्षणा भागवता ज्ञायन्ते केन कर्मणा।
एतदिच्छाम्यहं श्रोतुं कौतूहलपरो यतः'॥ ३५

## भगवद्वर्णितभागवतलक्षणानि

श्रीभगवान्– 'लक्ष्म भागवतानान्तु श्रृणुष्व मुनिसत्तम!।
वक्तुं तेषां प्रभावन्तु शक्यते नाब्दकोटिभिः॥ ३६
ये हिताः सर्वजन्तूनां गताऽसूया विमत्सराः।
ज्ञानिनो निःस्पृहाः शान्ताः ते वै भागवतोत्तमाः॥ ३७
कर्मणा मनसा वाचा परपीडां न कुर्वते।
अपरिग्रहशीलाश्च ते वै भागवतोत्तमाः॥ ३८
सत्कथाश्रवणे येषां वर्तते सात्त्विकी मतिः।
मत्पादाम्बुजभक्ता ये ते वै भागवतोत्तमाः॥ ३९

मातापित्रोश्च शुश्रूषां कुर्वते ये नरोत्तमाः ।
ये तु देवार्चनरता ये तु तत्साधका नराः ।
पूजां दृष्ट्वा तु मोदन्ते ते वै भागवतोत्तमाः ॥ ४०

वर्णिनाञ्च यतीनाञ्च परिचर्यापराश्च ये ।
परनिन्दामकुर्वाणाः ते वै भागवतोत्तमाः ॥ ४१

सर्वेषां हितवाक्यानि ये वदन्ति नरोत्तमाः ।
ये गुणग्राहिणो लोके ते वै भागवतोत्तमाः ॥ ४२

आत्मवत्सर्वभूतानि ये पश्यन्ति नरोत्तमाः ।
तुल्याः शत्रुषु मित्रेषु ते वै भागवताः स्मृताः ॥ ४३

धर्मशास्त्रप्रवक्तारः सत्यवाक्यरताश्च ये ।
तेषां शुश्रूषवो ये च ते वै भागवतोत्तमाः ॥ ४४

व्याकुर्वन्ति पुराणानि तानि शृण्वन्ति ये तथा ।
तद्वक्तरि च भक्ता ये ते वै भागवतोत्तमाः ॥ ४५

ये गोब्राह्मणशुश्रूषां कुर्वन्ति सततं नराः ।
तीर्थयात्रापरा ये च ते वै भागवतोत्तमाः ॥ ४६

अन्येषामुदयं दृष्ट्वा येऽभिनन्दन्ति मानवाः ।
हरिनामपरा ये च ते वै भागवतोत्तमाः ॥ ४७

आरामारोपणरताः तटाकपरिरक्षकाः ।
कासारकूपकर्तारः ते वै भागवतोत्तमाः ॥ ४८

ये वै तटाककर्तारो देवसद्मानि कुर्वते ।
गायत्रीनिरता ये च ते वै भागवतोत्तमाः ॥ ४९

येऽभिनन्दन्ति नामानि हरेः श्रुत्वाऽतिहर्षिताः ।
रोमाञ्चितशरीराश्च ते वै भागवतोत्तमाः ॥ ५०

तुलसीकाननं दृष्ट्वा ये नमस्कुर्वते नराः ।
तत्काष्ठाङ्कितकर्णा ये ते वै भागवतोत्तमाः ॥ ५१
तुलसीगन्धमाघ्राय सन्तोषं कुर्वते तु ये ।
तन्मूलमृद्धरा ये च ते वै भागवतोत्तमाः ॥ ५२
स्वाश्रमाचारनिरताः तथैवातिथिपूजकाः ।
ये च वेदार्थवक्तारः ते वै भागवतोत्तमाः ॥ ५३
विदितानि च शास्त्राणि परार्थं प्रवदन्ति ये ।
सर्वत्र गुणभाजो ये ते वै भागवतोत्तमाः ॥ ५४
पानीयदाननिरता ह्यन्नदानरताश्च ये ।
एकादशीव्रतपराः ते वै भागवतोत्तमाः ॥ ५५
गोदाननिरता ये च कन्यादानरताश्च ये ।
मदर्थं कर्मकर्तारः ते वै भागवतोत्तमाः ॥ ५६
मन्मानसाश्च मद्भक्ता ये मद्भजनलोलुपाः ।
मन्नामस्मरणासक्ताः ते वै भागवतोत्तमाः ॥ ५७
बहुनाऽत्र किमुक्तेन? सङ्क्षेपात्ते ब्रवीम्यहम् ।
सद्गुणाय प्रवर्तन्ते ते वै भागवतोत्तमाः ॥ ५८
एते भागवता विप्राः केचिदत्र प्रकीर्तिताः ।
ममापि गदितुं शक्या नाब्दकोटिशतैरपि ॥ ५९
रामानुज! महाभाग! मद्भक्तानाञ्च लक्षणम् ।
मयि भक्ते त्वयि प्रीत्या ह्युक्तं किल महामते! ॥ ६०
श्रीसूतः— एवं वः कथितं विप्राः! शौनकाद्या! महौजसः! ।
वृषाद्रौ च वियद्गङ्गातीर्थमाहात्म्यमुत्तमम् ॥ ६१

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये आकाशगङ्गामाहात्म्य-रामानुजव्रतचर्यादिवर्णनं नाम एकादशोऽध्यायः ।

---

अथ द्वादशोऽध्यायः

## दानार्हसत्पात्रनिर्णयः

ऋषयः— भगवन् सूत! सर्वज्ञ! वेदवेदान्तकोविद! ।
दानानि कस्मै देयानि दानकालश्च कीदृशः
कश्च तत्प्रतिगृह्णीयात् सर्वं नो वक्तुमर्हसि ॥ १

श्रीसूतः— महापुण्यप्रदे क्षेत्रे वेङ्कटाख्ये द्विजोत्तमाः! ।
सर्वेषामेव वर्णानां ब्राह्मणः परमो गुरुः ॥ २

तस्मै दानानि देयानि स तारयति पण्डितः ।
ब्राह्मणः प्रतिगृह्णीयात् वर्जयित्वा त्ववर्णकम् ॥ ३

षण्डस्य पुत्रहीनस्य दम्भाचाररतस्य च ।
वेदविद्वेषिणश्चैव द्विजविद्वेषिणस्तथा ॥ ४

स्वकर्मत्यागिनश्चापि दत्तं भवति निष्फलम् ।
परदाररतस्यापि परद्रव्यरतस्य च ॥ ५

गायकस्यापि विप्रस्य दत्तं भवति निष्फलम् ।
असूयाविष्टमनसः कृतघ्नस्य च मायिनः ॥ ६

ज्ञानशून्यस्य विप्रस्य दत्तं भवति निष्फलम् ।
नित्यं याच्ञापरस्यापि हिंसकस्याबलस्य च ॥ ७

नामविक्रयिणश्चैव वेदविक्रयिणस्तथा ।
स्मृतिविक्रयिणश्चैव धर्मविक्रयिणस्तथा ॥ ८

परोपतापशीलस्य दत्तं भवति निष्फलम् ।
ये केचित्पापनिरता निन्दिताः सुकृतैस्तथा ॥ ९

न तेभ्यः प्रतिगृह्णीयात् न देयं वापि किञ्चन ।
सत्कर्मनिरतायैव श्रोत्रियायाऽहिताग्नये ॥ १०

वृत्तिहीनाय वै देयं दरिद्राय कुटुम्बिने ।
देवपूजासु सक्ताय पुराणकथकाय च ॥ ११
देयं प्रयत्नतो विप्राः! दरिद्राय विशेषतः ।
बहुना किमिहोक्तेन! शृणुध्वं द्विजसत्तमाः! ॥ १२
सर्वेषां ब्राह्मणानाञ्च प्रदातुं शक्यते सदा ।
वन्ध्याभर्त्रे प्रदत्तञ्चेत् रासभो जायते नरः ॥ १३
नास्तिकं भिन्नमर्यादं पुत्रहीनं जडं खलम् ।
स्तेयिनं कितवञ्चैव कदाचिन्नाभिवादयेत् ॥ १४
पाषण्डं पतितं व्रात्यं वेदविक्रयिणं तथा ।
कृतघ्नं पापनिरतं कदाचिन्नाभिवादयेत् ॥ १५
तथा स्नानं प्रकुर्वन्तं समित्पुष्पकरं तथा ।
उदपात्रधरञ्चैव भुञ्जन्तं नाभिवादयेत् ॥ १६
विवादशीलिनं चण्डं वमन्तं जनमध्यगम् ।
भिक्षान्नधारिणञ्चैव शयानं नाभिवादयेत् ॥ १७
वन्ध्याञ्च पुष्पिणीं जारां सूतिकां गर्भपातिनीम् ।
व्रतघ्नीञ्च तथा चण्डीं कदाचिन्नाभिवादयेत् ॥ १८
सभायां यज्ञशालायां देवतायतनेष्वपि ।
प्रत्येकं तु नमस्कारो हन्ति पुण्यं पुरातनम् ॥ १९
श्राद्धव्रते नियुक्तञ्च देवताभ्यर्चकं तथा ।
यज्ञञ्च तर्पणञ्चैव कुर्वन्तं नाभिवादयेत् ॥ २०
कुर्वते वन्दनं यस्तु न कुर्यात्प्रतिवन्दनम् ।
नाभिवाद्यः स विज्ञेयो यथा शूद्रस्तथैव च ॥ २१
तस्मात्सर्वेषु कालेषु बुद्धिमान् ब्राह्मणोत्तमः ।
वन्ध्यापतिं द्विजं क्रूरं कदाचिन्नाभिवादयेत् ॥ २२

## आकाशगङ्गामाहात्म्यम्

श्रीसूतः—

अत्रेतिहासं वक्ष्यामि पुण्यशीलस्य धीमतः ।
सनत्कुमारमुनये नारदेन प्रभाषितम् ।
तद्वक्ष्यामि मुनिश्रेष्ठाः! शृणुध्वं सुसमाहिताः ॥ २३

पुरा गोदावरीतीरे सर्वधर्मपरायणः ।
पुण्यशीलो द्विजवरः सत्यवादी जितेन्द्रियः ॥ २४

दयावान् सर्वभूतेषु देवाग्निद्विजपूजकः ।
कर्मणा जन्मशुद्धश्च मातापितृहिते रतः ॥ २५

गुरुभक्तिः सदाक्षिण्यो ब्रह्मण्यः साधुसम्मतः ।
एतादृशगुणैर्युक्तःपुण्यशीलस्य धीमतः ॥ २६

गृहं सम्प्राप्तवान् विप्रो वेदवेदाङ्गपारगः ।
प्रार्थितः पुण्यशीलेन पितृश्राद्धेऽतिवेगतः ॥ २७

तं विप्रं श्रोत्रियं शान्तं पितृश्राद्धे नियोज्य वै ।
श्राद्धं चकार धर्मात्मा प्रत्याब्दिकमनुत्तमम् ॥ २८

## पुण्यशीलस्य वन्ध्यापतिनिमन्त्रणेन गर्दभमुखत्वप्राप्तिः

ततः कालान्तरे तस्य पुण्यशीलस्य चानने ।
वैरूप्यं प्राप्तमत्युग्रं रासभाननवत्तदा ॥ २९

ततः खिन्नमना भूत्वा पुण्यशीलोऽतिधार्मिकः ।
निःश्वस्य बहुधा खिन्नः प्रपेदेऽगस्त्ययोगिनः ॥ ३०

सुवर्णमुखरीतीरे ऋषिसङ्घनिषेविते ।
आश्रमं परमं दिव्यं सर्वकामफलप्रदम् ॥ ३१

तत्राऽश्रमे मुनिवरैः सेव्यमानमहर्निशम् ।
दृष्ट्वाऽगस्त्यं महात्मानं सर्वलोकहितैषिणम् ।
प्रणाममकरोत्तस्मै गार्दभास्योऽतिदुःखितः ॥ ३२

पुण्यशीलः—

'तपोनिधे ! नमस्तुभ्यमगस्त्य ! मुनिसेवित ! ।
कुत्सितास्यं महापापं रक्ष रक्ष दयानिधे ! ॥ ३३
केन दोषेण मे चात्र मुखस्यासीद्विरूपता ।
मयि प्रीत्या महाभाग ! वदस्व मुनिसत्तम ! ॥ ३४

अगस्त्यः—

'विप्रवर्य ! महाभाग ! पुण्यशील महामते ! ।
आननस्य विरूपं वै शृणु नान्यमना द्विज ! ॥ ३५

## वन्ध्यापतेः श्राद्धनिमन्त्रणानर्हत्वप्रशंसा

कञ्चिद्विप्रं गुणनिधिं वेदवेदाङ्गपारगम् ।
श्रोत्रियं पुत्ररहितं श्राद्धे त्वं विनियुक्तवान् ॥ ३६
तेन दोषेण महता मुखे तव विरूपता ।
ये लोके हव्यकव्यादौ वन्ध्यायाः स्वामिनं द्विजम् ॥ ३७
नियोजयन्ति ते यान्ति मुखे गर्दभरूपताम् ।
शुभकर्मणि वा विप्र ! पैतृके वापि कर्मणि ॥ ३८
वन्ध्यापतिं महापापं कदाचिन्न निमन्त्रयेत् ।
वन्ध्यापतिं महाक्रूरं वृषलीपतिमेव वा ॥ ३९
श्रेयस्कामी हि विप्रेन्द्र ! श्राद्धे तु न निमन्त्रयेत् ।
वेदशास्त्रादियुक्तोऽपि कुलीनः कर्मठोऽपि वा ॥ ४०
वन्ध्याभर्ता द्विजश्रेष्ठ ! श्राद्धे त्याज्यः कथञ्चन ।
ज्योतिष्टोमादियज्ञेषु व्रतेषु च तपःसु च ॥ ४१

समर्थोऽपि द्विजश्रेष्ठः श्राद्धे वन्ध्यापतिं त्यजेत् ।
अलभ्ये तु द्विजे पात्रे तन्तुमात्रोपजीविनम् ॥ ४२

पुत्रवन्तं सदाऽचारं श्राद्धार्थन्तु निमन्त्रयेत् ।
तदभावे द्विजश्रेष्ठ! पुत्रं वाऽनुजमेव वा ॥ ४३

आत्मानं वा नियुञ्जीत श्राद्धे वन्ध्यापतिं त्यजेत् ।
पुण्यशील! महाभाग! चोद्धृत्य भुजमुच्यते ॥ ४४

सर्वथा पुत्रहीनन्तु श्राद्धार्थं न नियोजयेत् ।
वन्ध्यापतिं द्विजं यस्तु श्राद्धकर्ता नियोक्ष्यति ।
तच्छ्राद्धमासुरं ज्ञेयं कर्ता च नरकं व्रजेत् ॥ ४५

## आकाशगङ्गास्नानेन पुण्यशीलस्य तद्विकृतिनिवृत्तिः

बहुनाऽत्र किमुक्तेन तद्दोषविनिवृत्तये ।
उपायं ते प्रवक्ष्यामि स्वर्णमुख्यास्तटे शुभे ॥ ४६

वर्तते देवसङ्घैश्च सेवितो वेङ्कटाचलः ।
मेरुपुत्रो महापुण्यः सर्वकामफलप्रदः ॥ ४७

तस्मिन् वेङ्कटशैलेन्द्रे सुरासुरनमस्कृते ।
वियद्गङ्गेति नाम्ना वै तीर्थमस्ति महत्तरम् ॥ ४८

सर्वपापप्रशमनं आयुरारोग्यवर्धनम् ।
त्वं गत्वा वेङ्कटं शैलं स्वामिपुष्करिणीजले ॥ ४९

स्नात्वा सङ्कल्पपूर्वन्तु गङ्गातीर्थमनन्तरम् ।
गत्वा तीर्थविधानेन स्नानं कुरु महामते! ॥ ५०

स्नानमात्रात्ततः सद्यो मुखस्यास्य महामते! ।
वैरूप्यं तत्क्षणादेव नश्यत्येव न संशयः ' ॥ ५१

श्रीसूतः —

एवमुक्तः पुण्यशीलो ह्यगस्त्येन महात्मना ।
तं प्रणम्य महात्मानं वेङ्कटाद्रिं ततो ययौ ॥ ५२

तत्र गत्वा महाभागः स्वामिपुष्करिणीजले ।
स्नात्वा नियमपूर्वन्तु वियद्गङ्गासमीपगः ॥ ५३

तत्र स्नानेन धर्मात्मा कामवक्त्रोपमं मुखम् ।
प्राप्तवान् पुण्यशीलस्तु अहो तीर्थस्य वैभवम्! ॥ ५४

एवं वः कथितं विप्राः! नारदेन प्रभाषितम् ।
सनत्कुमारमुनये शौनकाद्या महौजसः! ॥ ५५

इति श्रीस्कन्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये आकाशगङ्गामाहात्म्यवर्णनं नाम द्वादशोऽध्यायः ॥



अथ त्रयोदशोऽध्यायः



## चक्रतीर्थमाहात्म्यम्

श्रीसूतः—

अथाहं सम्प्रवक्ष्यामि द्विजेन्द्राः! सत्यवादिनः! ।
चक्रतीर्थस्य माहात्म्यं सर्वपापप्रणाशनम् ॥ १

ये शृण्वन्ति महापुण्यं चक्रतीर्थस्य वैभवम् ।
ते यान्ति विष्णुभवनं पुनरावृत्तिवर्जितम् ॥ २

अन्नदाने च विमुखा जलदाने तथैव च ।
गोदानविमुखा ये च शुद्धास्तेऽत्र निमज्जनात् ।
तस्मात्पुण्यतमं तीर्थं चक्रतीर्थमनुत्तमम् ॥ ३

## पद्मनाभाख्यद्विजकृततपस्तुष्टभगवदाविर्भावः

श्रीसूत:— पुरा श्रीवत्सगोत्रीयः पद्मनाभो जितेन्द्रियः।
चक्रपुष्करिणीतीरे सोऽतप्यत महत्तपः ॥ ४
दयायुक्तो निराहारः सत्यवादी जितेन्द्रियः ।
आत्मवत्सर्वभूतानि पश्यन् विषयनिःस्पृहः ॥ ५
सर्वभूतहितो दान्तः सर्वद्वन्द्वविवर्जितः ।
वर्षाणि कतिचित्सोऽयं जीर्णपर्णाशनोऽभवत् ॥ ६
कञ्चित्कालं जलाहारो वायुभक्षः कियत्समाः ।
एवं द्वादशवर्षाणि पद्मनाभो महामुनिः ॥ ७
अतप्यत तपो घोरं देवैरपि सुदुष्करम् ।
अथ तत्तपसा तुष्टो भगवान् कमलापतिः ॥ ८
प्रत्यक्षतामगात्तस्य शङ्खचक्रगदाधरः ।
विकचाम्बुजपत्राक्षः सूर्यकोटिसमप्रभः ।
उन्मील्य चक्षुषी तत्र दृष्टवान् वेङ्कटेश्वरम् ॥ ९
शङ्खचक्रधरं शान्तं श्रीनिवासं कृपानिधिम् ।
दृष्ट्वा देवं महात्मानं स्तोतुं समुपचक्रमे ॥ १०

## पद्मनाभाख्यद्विजकृतश्रीनिवासस्तुतिः

'नमो देवाधिदेवाय वेङ्कटेशाय शार्ङ्गिणे ।
नारायणाद्रिवासाय श्रीनिवासाय ते नमः ॥ ११
नमः कल्मषनाशाय वासुदेवाय विष्णवे ।
शेषाचलनिवासाय श्रीनिवासाय ते नमः ॥ १२
नमस्त्रैलोक्यनाथाय विश्वरूपाय साक्षिणे ।
शिवब्रह्मादिवन्द्याय श्रीनिवासाय ते नमः ॥ १३

नमः कमलनेत्राय क्षीराब्धिशयनाय ते ।
दुष्टराक्षससंहर्त्रे श्रीनिवासाय ते नमः ॥ १४
भक्तप्रियाय देवाय देवानां पतये नमः ।
प्रणतार्तिविनाशाय श्रीनिवासाय ते नमः ॥ १५
योगिनां पतये नित्यं वेदवेद्याय विष्णवे ।
भक्तानां पापसंहर्त्रे श्रीनिवासाय ते नमः ' ॥ १६
एवं स्तुतो महाभागः श्रीनिवासो जगन्मयः ।
पद्मनाभाख्यऋषिणा चक्रतीर्थनिवासिना ।
सन्तोषं परमं प्राप्य वेङ्कटेशो दयानिधिः ॥ १७
पद्मनाभं द्विजवरं शान्तं धर्मपरायणम् ।
सुधाधारोपमं वाक्यं अब्रवीत् पुरुषोत्तमः ॥ १८

## पद्मनाभस्य चक्रतीर्थे निरन्तरवासाय भगवन्नियमनम्

श्रीभगवान्—

' द्विजवर्य ! महाभाग ! मत्पादकमलार्चक ! ।
चक्रतीर्थस्य तीरे त्वं आकल्पं पूजयन् वस ' ॥ १९
इत्युक्त्वा भगवान् विष्णुः तत्रैवान्तरधीयत ।
अन्तर्धानं गते देवे श्रीनिवासे जगद्गुरौ ॥ २०
चक्रतीर्थस्य तीरे तु वासं चक्रे महामतिः ।
ततः कालान्तरे कश्चित् राक्षसो भीमदर्शनः ॥ २१
मुनिं तं पद्मनाभाख्यं नारायणपरायणम् ।
आययौ भक्षितुं क्रूरः क्षुधया परिपीडितः ॥ २२
ब्राह्मणं तरसा सोऽयं राक्षसो जगृहे तदा ।
गृहीतस्तरसा तेन विप्रो वेदाङ्गपारगः ॥ २३

प्रचुक्रोश दयाम्भोधिं आपन्नानां परायणम् ।
नारायणं चक्रपाणिं रक्ष रक्षेति वै मुहुः ॥ २४

'वेङ्कटेश ! दयासिन्धो ! शरणागतपालक ! ।
त्राहि मां पुरुषव्याघ्र ! रक्षोवशमुपागतम् ॥ २५

लक्ष्मीकान्त ! हरे ! विष्णो ! वैकुण्ठ ! गरुडध्वज ! ।
मां रक्ष राक्षसाऽऽक्रान्तं ग्राहाक्रान्तं गजं यथा ॥ २६

दामोदर ! जगन्नाथ ! हिरण्यासुरमर्दन ! ।
प्रह्लादमिव मां रक्ष राक्षसेनातिपीडितम् ' ॥ २७

### पद्मनाभहननोद्युक्तासुरवधाय भगवत्कृतचक्रप्रेषणम्

इत्येवं स्तुवतस्तस्य पद्मनाभस्य हे द्विजाः ! ।
स्वभक्तस्य भयं ज्ञात्वा चक्रपाणिर्दयानिधिः ॥ २८

स्वचक्रं प्रेषयामास भक्तरक्षणकारणात् ।
प्रेरितं विष्णुचक्रं तत् विष्णुना प्रभविष्णुना ॥ २९

आजगामाथ वेगेन चक्रपुष्करिणीतटम् ।
अनन्तादित्यसङ्काशं अनन्ताग्निसमप्रभम् ॥ ३०

महाज्वालं महानादं महासुरविमर्दनम् ।
दृष्ट्वा सुदर्शनं विष्णोः राक्षसोऽथ प्रदुद्रुवे ॥ ३१

### भगवत्प्रेषितचक्रकृतासुरवधः

द्रवमाणस्य तस्याशु राक्षसस्य सुदर्शनम् ।
शिरश्चकर्त सहसा ज्वालामालादुरासदम् ॥ ३२

ततो विप्रवरो दृष्ट्वा राक्षसं पतितं भुवि ।
मुदा परमया युक्तः तुष्टाव च सुदर्शनम् ॥ ३३

पद्मनाभः— 'विष्णुचक्र ! नमस्तेऽस्तु विश्वरक्षणदीक्षित ! ।
नारायणकराम्भोजभूषणाय ! नमोऽस्तु ते ॥ ३४
युद्धेष्वसुरसंहारकुशलाय महारव ।
सुदर्शन ! नमस्तुभ्यं भक्तानामार्तिनाशन ! ॥ ३५
रक्ष मां भयसंविग्नं सर्वस्मादपि कल्मषात् ।
स्वामिन् ! सुदर्शन ! विभो ! चक्रतीर्थे सदा भवान् ॥ ३६
सन्निधेहि हिताय त्वं जगतो मुक्तिकाङ्क्षिणः' ।
ब्राह्मणेनैवमुक्तं तत् विष्णुचक्रं मुनीश्वराः ! ।
तं प्राह पद्मनाभाख्यं प्रीणयन्निव सौहृदात् ॥ ३७

## द्विजप्रार्थनया चक्रकृतवरदानादिः

सुदर्शनः— 'पद्मनाभ ! महापुण्यं चक्रतीर्थमनुत्तमम् ।
अस्मिन् वसामि सततं लोकानां हितकाम्यया ।
त्वत्पीडां परिचिन्त्याह राक्षसेन दुरात्मना ॥ ३८
प्रेरितो विष्णुना विप्र ! त्वरया समुपागतः ।
त्वत्पीडकोऽपि निहतो मयाऽयं राक्षसाधमः ॥ ३९
मोचितस्त्वं भयादस्मात् त्वं हि भक्तो हरेः सदा ।
चक्रतीर्थे महापुण्ये सर्वपापहरे द्विज ! ॥ ४०
सततं लोकरक्षार्थं सन्निधानं करोमि ते ।
अस्मिन् मत्सन्निधानात्ते तथाऽन्येषामपि द्विज ! ॥ ४१
इतः परं न पीडा स्यात् भूतराक्षससम्भवा ।
अस्मिन् मत्सन्निधानात्स्यात् 'चक्रतीर्थ'मिति प्रथा ॥ ४२
स्नानं येऽत्र प्रकुर्वन्ति चक्रतीर्थे विमुक्तिदे ।
तेषां पुत्राश्च पौत्राश्च वंशजाः सर्व एव हि ॥ ४३

विधूतपापा यास्यन्ति तद्विष्णोः परमं पदम् ' ।
इत्युक्त्वा विष्णुचक्रं तत् पद्मनाभस्य पश्यतः ॥ ४४
अन्येषामपि विप्राणां पश्यतां सहसा द्विजाः ! ।
चक्रपुष्करिणीं तान्तु प्राविशत् पापनाशिनीम् ॥ ४५
श्रीसूतः— चक्रतीर्थस्य माहात्म्यं विप्रेन्द्राः ! पापनाशनम् ।
युष्माकं कथितं सर्वं शौनकाद्याः ! महौजसः ! ॥ ४६
चक्रतीर्थसमं तीर्थं न भूतं न भविष्यति ।
अत्र स्नात्वा नरो विप्राः ! मोक्षभाजो न संशयः ॥ ४७
कीर्तयेदिममध्यायं शृणुयाद्वा समाहितः ।
चक्रतीर्थाभिषेकस्य प्राप्नोति फलमुत्तमम् ॥ ४८

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये चक्रतीर्थमहिमानुवर्णनं नाम त्रयोदशोऽध्यायः ।

---

अथ चतुर्दशोऽध्यायः

## सुन्दराख्यगन्धर्वस्य राक्षसत्वप्राप्तिनिवृत्त्योरुपोद्धातः

ऋषयः— भगवन् ! राक्षसः कोऽसौ सूत पौराणिकोत्तम ! ।
विष्णुभक्तं महात्मानं यो ब्राह्मणमबाधत ॥ १
श्रीसूतः— वक्ष्यामि राक्षसं क्रूरं तं विप्राः ! शृणुतादरात् ।
यथा च राक्षसो जातो मुनीनां शापवैभवात् ॥ २
पुरा वैकुण्ठसदृशे श्रीरङ्गे विष्णुमन्दिरे ।
वसिष्ठात्रिमुखाः सर्वे विष्णुभक्ता महौजसः ॥ ३
श्रीरङ्गनाथं देवेशं भक्तानामभयप्रदम् ।
उपासाञ्चक्रिरे मुक्त्यै श्रीरङ्गपुरवासिनः ॥ ४

कदाचित्तत्र गन्धर्वो वीरबाहुसुतो बली ।
सुन्दरो नाम विप्रेन्द्राः! विटगोष्ठीपरायणः ॥ ५

ललनाशतसंयुक्तो विवस्त्रः सलिलाशये ।
चिक्रीड स विवस्त्राभिः साकं युवतिभिर्मुदा ॥ ६

कवेरजायास्तीर्थे तु वसिष्ठो मुनिभिः सह ।
माध्याह्निकं कर्तुमना ययौ श्रीरङ्गमन्दिरात् ॥ ७

तानृषीनवलोक्याथ रामास्ता भयकातराः ।
वासांस्याच्छादयामासुः सुन्दरो न तु साहसी ।
ततो वसिष्ठः कुपितः शशापैनं गतत्रपम् ॥ ८

वसिष्ठः—

'यस्मात्सुन्दर! गन्धर्व! दृष्ट्वाऽस्माँल्लज्जया त्वया ।
वासो नाच्छादितं शीघ्रं याहि राक्षसतां ततः' ॥ ९

एवमुक्ते वसिष्ठेन रामाः प्राञ्जलयस्तदा ।
प्रणिपत्य वसिष्ठं तं भक्तिनम्रेण चेतसा ।
मुनिमण्डलमध्ये तु वसिष्ठमिदमब्रुवन् ॥ १०

रामाः—

'भगवन्! सर्वधर्मज्ञ! चतुराननन्दन! ।
दयासिन्धोऽवलोक्यास्मान् न कोपं कर्तुमर्हसि ॥ ११

पतिरेव हि नारीणां भूषणं परमुच्यते ।
पतिहीना तु या नारी शतपुत्राऽपि सा मुने! ॥ १२

विधवेत्युच्यते लोके तासां जन्म निरर्थकम् ।
तत्प्रसादं कुरु मुने! पत्यावस्माकमादरात् ॥ १३

एकोऽपराधः क्षन्तव्यो मुनिभिस्तत्त्वदर्शिभिः ।
क्षमां कुरु दयासिन्धो! युष्मच्छिष्येऽत्र सुन्दरे' ॥ १४

श्रीसूतः— वसिष्ठः प्रार्थितस्त्वेवं सुन्दरस्याङ्गनाजनैः ।
प्रोवाच वचनं भूयः प्रसन्नः स द्विजोत्तमः ॥ १५

## सुन्दराख्यस्य वसिष्ठोक्तराक्षसत्वनिवृत्त्युपायः

वसिष्ठः— 'न मे स्याद्वचनं मिथ्या कदाचिदपि सुभ्रुवः! ।
उपायं वः प्रवक्ष्यामि शृणुध्वं श्रद्धया सह ॥ १६
षोडशाब्दावधिः शापो भर्तुर्वै भविता ध्रुवम् ।
षोडशाब्दावधौ चैव सुन्दरो राक्षसाकृतिः ॥ १७
यदृच्छया वेङ्कटाद्रिं सर्वपापहरं शुभम् ।
गत्वाऽसौ चक्रतीर्थं तत् गमिष्यति सुराङ्गनाः! ॥ १८
आस्ते तत्र महायोगी पद्मनाभो मुनीश्वरः ।
भक्षार्थं तं मुनिं सोऽयं राक्षसोऽभिगमिष्यति ॥ १९
ततो ब्राह्मणरक्षार्थं प्रेरितं चक्रमुत्तमम् ।
विष्णुनाऽस्य शिरः कायात् हरिष्यति न संशयः ॥ २०
ततः स्वं रूपमासाद्य शापान्मुक्तः स सुन्दरः ।
पतिर्वस्त्रिदिवं भूयो गन्ता नास्त्यत्र संशयः ॥ २१
ततस्त्रिदिवमासाद्य सुन्दरोऽयं पतिर्हि वः ।
रमयिष्यति सुन्दर्यो! युष्मान् सुन्दरवेषभृत्' ॥ २२

श्रीसूतः— इत्युक्त्वा तु वसिष्ठस्ताः सुन्दरस्य वराङ्गनाः ।
स्वाश्रमं प्रययौ तूर्णं श्रीरङ्गेश्वरभक्तिमान् ॥ २३
अथ रामास्तमालिङ्ग्य सुन्दरं पतिमात्मनः
रुरुदुः शोकसन्तप्ताः दुःखसागरमध्यगाः ॥ २४
दृश्यमानासु तास्वेवं सुन्दरो राक्षसोऽभवत् ।
महादंष्ट्रो महाकायो रक्तश्मश्रुशिरोरुहः ॥ २५

तं दृष्ट्वा भयसंविग्ना जग्मुः रामास्त्रिविष्टपम् ।
ततो राक्षसवेषोऽयं सुन्दरो भैरवाकृतिः ॥ २६

भक्षयन् प्राणिनः सर्वान् देशाद्देशं वनाद्वनम् ।
भ्रमन्ननिलवेगोऽयं वेङ्कटाद्रिं नगोत्तमम् ॥ २७

प्रविश्यासौ महापापी चक्रतीर्थं ततो ययौ ।
एवं षोडशवर्षाणि भ्रमतोऽस्य ययुस्तदा ॥ २८

ततस्तु षोडशाब्दान्ते राक्षसोऽयं मुनीश्वराः! ।
भक्षितुं पद्मनाभन्तं चक्रतीर्थनिवासिनम् ॥ २९

उपाद्रवद्वायुवेगः स चास्तौषीज्जनार्दनम् ।
योगिना च स्तुतो विष्णुः तदा चक्रमचोदयत् ॥ ३०

रक्षितुं पद्मनाभं तं राक्षसेन प्रपीडितम् ।
अथाऽगत्य हरेश्चक्रं राक्षसस्य शिरोऽहरत् ॥ ३१

## सुन्दराख्यस्य राक्षसत्वविमुक्तिपूर्वकं स्वस्वरूपप्राप्तिः

ततोऽयं राक्षसं देहं त्यक्त्वा दिव्यकलेवरः ।
विमानवरमारुह्य सुन्दरः पुष्पवर्षितः ॥ ३२

प्राञ्जलिः प्रणतो भूत्वा ववन्दे तत्सुदर्शनम् ।
तुष्टाव श्रुतिरम्याभिः वाग्भिरग्र्याभिरादरात् ॥ ३३

सुन्दरः— 'सुदर्शन! नमस्तेऽस्तु विष्णुहस्तैकभूषण! ।
नमस्तेऽसुरसंहर्त्रे सहस्रादित्यतेजसे ॥ ३४

कृपावेशेन भवतः त्यक्त्वाऽहं राक्षसीं तनुम् ।
स्वं रूपमभजं विष्णोः चक्रायुध! नमोऽस्तु ते ॥ ३५

अनुजानीहि मां गन्तुं त्रिदिवं विष्णुवल्लभ! ।
भार्या मे परिशोचन्ति विरहातुरचेतसः ॥ ३६

त्वन्मनस्को भविष्यामि यावज्जीवं यथा ह्यहम् ।
तथा रूपं कुरुष्व त्वं मयि चक्र ! नमोऽस्तु ते' ॥ ३७
एवं स्तुतं विष्णुचक्रं सुन्दरेण सभक्तिकम् ।
अनुजग्राह सहसा 'तथाऽस्त्वि' ति मुनीश्वराः ! ॥ ३८
चक्रायुधाभ्यनुज्ञातः सुन्दरो ब्राह्मणोत्तमम् ।
प्रणम्य तेनानुज्ञातो गन्धर्वस्त्रिदिवं ययौ ॥ ३९
सुन्दरे तु गते स्वर्गं पद्मनाभो मुनीश्वरः ।
तच्चक्रं प्रार्थयामास 'विष्ण्वायुध ! नमोऽस्तु ते ॥ ४०
चक्रायुध ! नमामि त्वां महासुरविमर्दन ! ।
सन्निधानं कुरुष्व त्वं चक्रतीर्थेऽमले शुभे ॥ ४१
त्वत्सन्निधानात्सर्वेषां स्नातानां पापिनामिह ।
पापनाशं कुरुष्व त्वं मोक्षञ्च कुरु शाश्वतम् ॥ ४२
'चक्रतीर्थ'मिति ख्यातिं लोकेऽस्य परिकल्पय ।
त्वत्सन्निधानादत्रत्यमुनीनां भयनाशनम् ॥ ४३
इतः परं भवत्वार्य ! चक्रायुध ! नमोऽस्तु ते ।
भूतप्रेतपिशाचेभ्यो भयं मा भवतु प्रभो ! ॥' ४४
इति सम्प्रार्थितं चक्रं पद्मनाभेन योगिना ।
'तथैवास्त्व'ति सम्भाष्य तस्मिंस्तीर्थे तिरोहितम् ॥ ४५
श्रीसूतः— एवं वः कथितं विप्राः ! राक्षसस्योद्भवो मया ।
माहात्म्यं चक्रतीर्थस्य कथितञ्च मलापहम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो भुवि ॥ ४६

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये चक्रतीर्थमहिमानुवर्णनं नाम चतुर्दशोऽध्यायः ।

---

अथ पञ्चदशोऽध्यायः

## जाबालितीर्थमाहात्म्यवर्णनम्

श्रीसूतः—

भो भो तपोधनाः! सर्वे नैमिशारण्यवासिनः।
वेङ्कटाद्रौ महापुण्ये सर्वपातकनाशने॥ १

ततो जाबालितीर्थस्य माहात्म्यं वर्णयाम्यहम्।
दुराचाराभिधो यत्र स्नात्वा मुक्तोऽभवद् द्विजाः!॥ २

मुनयः—

दुराचाराभिधः कोऽसौ सूत! तत्त्वार्थकोविद!।
किञ्च पापं कृतं तेन दुराचारेण वै मुने!॥ ३

कथं वा पातकान्मुक्तः तीर्थेऽस्मिन् स्नानवैभवात्।
एतच्छुश्रूषमाणानां विस्तराद्वद नो मुने!॥ ४

## कावेरीतीरवासिदुराचाराख्यद्विजोदन्तः

श्रीसूतः—

मुनयः श्रूयतां तस्य दुराचारस्य पातकम्।
जाबालितीर्थस्नानेन यथा मुक्तश्च पातकात्॥ ५

दुराचाराभिधो विप्रः कावेरीतीरमाश्रितः।
कश्चिदास्ते द्विजः पापी क्रूरकर्मरतः सदा॥ ६

ब्रह्मघ्नैश्च सुरापैश्च स्तेयिभिर्गुरुतल्पगैः।
सदा संसर्गदुष्टोऽसौ तैः साकं न्यवसद् द्विजाः!॥ ७

महापातकसंसर्गदोषेणास्य द्विजस्य वै।
ब्राह्मण्यं सकलं नष्टं निःशेषेण द्विजोत्तमाः!॥ ८

महापातकिभिः सार्धं दिनमेकं तु यो द्विजः ।
निवसेत्सादरं तस्य तत्क्षणाद्वै द्विजन्मनः ॥ ९

ब्राह्मण्यस्य तु चैकांशो नश्यत्येव न संशयः ।
द्विदिनं सेवनात्स्पर्शात् दर्शनाच्छयनात्तथा ॥ १०

भोजनात् सहपङ्क्तौ च महापातकिभिर्द्विजाः! ।
द्वितीयभागो नश्येत ब्राह्मण्यस्य न संशयः ॥ ११

त्रिदिनाच्च तृतीयांशो नश्यत्येव न संशयः ।
चतुर्दिनाच्चतुर्थांशो विलयं याति हि ध्रुवम् ॥ १२

अतः परञ्च तैः साकं शयनासनभोजनैः ।
तत्तुल्यपातकी भूयात् महापातकिसङ्गवान् ॥ १३

तेन ब्राह्मण्यहीनोऽयं दुराचाराभिधो द्विजः ।
ग्रस्तोऽभवद्भीषणेन व्यालेनेव बलीयसा ॥ १४

असौ परवशस्तेन वेतालेनातिपीडितः ।
देशाद्देशं भ्रमन् विप्रो वनाच्चैव वनान्तरम् ॥ १५

पूर्वपुण्यविपाकेन दैवयोगेन स द्विजः ।
वेङ्कटाद्रिं महापुण्यं सर्वपातकनाशनम् ॥ १६

### जाबालितीर्थस्नानात् दुराचारवेतालयोर्महापातकादिनिवृत्तिः

अनुद्रुतः पिशाचेन वेतालेन द्विजो ययौ ।
न्यमज्जयत्स वेतालो महापातकनाशने ॥ १७

जाबालितीर्थे विप्रेन्द्राः! महापातकिसङ्गिनम् ।
उदतिष्ठत्क्षणादेव वेतालेन विमोचितः ॥ १८

उत्थितोऽसौ द्विजो विप्राः! तस्मात्तीर्थात्तु पावनात् ।
स्वस्थो व्यचिन्तयत् 'कोऽयं स्वर्णमुख्याः समीपतः ॥ १९

कथं मयाऽगतमहो! कावेरीतीरवासिना'।
इति चिन्ताकुलः सोऽयं जाबालेस्तीर्थमुत्तमम्॥ २०
जाबालिञ्च महात्मानं योगीन्द्रवरमुत्तमम्।
समागम्य प्रणम्यासौ दुराचारोऽभ्यभाषत॥ २१
'न जाने भगवन् विप्र! पर्वतोऽयं वदाधुना।
कावेरीतीरनिलयो दुराचाराभिधो ह्यहम्॥ २२
कृपया ब्रूहि मे ब्रह्मन्! मयाऽत्र कथमागतम्'।
इति पृष्टो मुनिस्तेन दुराचारेण सुव्रतः।
ध्यात्वा मुहूर्तमवदत् दुराचारं कृपानिधिः॥ २३

## जाबालिवर्णितपार्वणश्राद्धाकरणदोषप्रशंसा

जाबालिः

'महापातकिसंसर्गात् दुराचारस्य ते पुरा।
ब्राह्मण्यं नष्टमभवत् वेतालस्त्वां ततोऽग्रहीत्॥ २४
तेनाविष्टस्त्वमायातो विवशोऽत्र विमूढधीः।
न्यमज्जयत्त्वां वेतालः तीर्थेऽस्मिन्नतिपावने॥ २५
अत्र मज्जनमात्रेण विमुक्तः पातकाद्भवान्।
जाबालितीर्थे ये स्नानं पुण्यं कुर्वन्ति मानवाः॥ २६
तेषां नश्यन्ति वै सत्यं पञ्चपातकसञ्चयाः।
सत्कर्मसाधने पुण्यतीर्थेऽस्मिन् स्नानमात्रतः॥ २७
महापातकिसंसर्गदोषस्ते विलयं गतः।
त्वामग्रहीद्यो वेतालः पुराऽयं ब्राह्मणोऽभवत्॥ २८
मृतेऽहनि पितृश्राद्धं नाकरोत्पार्वणेन वै।
तेन स्वपितृभिः शप्तो वेतालत्वमगादयम्॥ २९

सोऽपि जाबालितीर्थस्य जले स्नानप्रभावतः ।
वेतालत्वं विहायैव विष्णुलोकमवाप्तवान् ॥ ३०
न कुर्याद्यो नरः श्राद्धं मातापित्रोर्मृतेऽहनि ।
वेतालत्वमवाप्याऽशु पश्चान्नरकमश्नुते' ॥ ३१

श्रीसूतः—

दुराचारो महापापी तीर्थेऽस्मिन् स्नानमात्रतः ।
प्राप्तवान्विष्णुलोकं वै पुनरावृत्तिवर्जितम् ॥ ३२
एवं वः कथितं पुण्यं दुराचारविमोक्षणम् ।
तस्मात्पुण्यतमं तीर्थं सर्वपापहरं शुभम् ॥ ३३
यत्र हि स्नानमात्रेण दुराचारो विमोचितः ।
यानि निष्कृतिहीनानि पापान्यपि विनाशयेत् ॥ ३४
शूद्रेण पूजितं लिङ्गं विष्णुं वा यो नमेत् द्विजः ।
प्रायश्चित्तं न स्मृतिषु तस्योक्तं परमर्षिभिः ॥ ३५
नश्येत्तस्यापि तत्पापं तीर्थे जाबालिसंज्ञके ।
विप्रनिन्दाकृताञ्चैव प्रायश्चित्तं न विद्यते ॥ ३६
विश्वासघातुकानाञ्च कृतघ्नानाञ्च निष्कृतिः ।
भ्रातृभार्यारतानाञ्च प्रायश्चित्तं न विद्यते ॥ ३७
तेषां जाबालितीर्थे वै स्नानाच्छुद्धिर्भविष्यति ।
एवं वः कथितं विप्राः! जाबालेस्तीर्थवैभवम् ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते मानवो भुवि ॥ ३८

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये जाबालितीर्थमहिमानु-
वर्णनं नाम पञ्चदशोऽध्यायः ।

———

अथ षोडशोऽध्यायः



## (तुम्बुरु)घोणतीर्थमाहात्म्यम्

श्रीसूतः—

अत्राहं सम्प्रवक्ष्यामि शौनकाद्या महौजसः! ।
घोणतीर्थस्य माहात्म्यं सर्वपातकनाशनम् ॥ १

तत्र स्नानं जनानान्तु जन्मान्तरतपः फलम् ।
उत्तराफल्गुनीयुक्तशुक्लपक्षीयपर्वणि ॥ २

तुम्बोस्तीर्थे मीनसंस्थे रवौ तीर्थानि सर्वशः ।
अपराण्हे समायान्ति गङ्गादीनि जगत्त्रये ॥ ३

ऋषयः—

भगवन् सूत! सर्वज्ञ! सर्वशास्त्रार्थपारग! ।
गङ्गाद्याः सरितः सर्वा घोणतीर्थेऽतिपावने ।
किमर्थं स्नान्ति वै तत्र मीनसंस्थे प्रभाकरे ॥ ४

श्रीसूतः—

'पापिनो मनुजाः सर्वे ह्यस्मासु स्नान्ति यत्नतः ।
विसृज्य पापजालानि कृतार्था यान्ति वै जनाः ॥ ५

अस्माकं पापजालं तत् कथं नश्यति सर्वतः' ।
एवमालोच्य तीर्थानि गङ्गादीनि प्रयत्नतः ॥ ६

संस्मृत्य ब्रह्मपुत्रस्य नारदस्य महात्मनः ।
वाक्यं मनोहरं दिव्यं सर्वपापनिषूदनम् ॥ ७

गत्वा श्रीवेङ्कटं शैलं ब्रह्महत्यादिशोधकम् ।
तत्र स्नात्वा तीर्थवर्ये स्वामिपुष्करिणीजले ॥ ८

अनन्तरं ततो विप्राः! घोणतीर्थेऽतिपावने ।
उत्तराफल्गुनीयुक्तशुक्लपक्षीयपर्वणि ॥ ९

स्नान्ति तीर्थानि सर्वाणि मीनसंस्थे प्रभाकरे ।
तस्य तीर्थस्य महात्म्यं को वेत्ति? भुवनत्रये ॥ १०

## घोणतीर्थस्नानविमुखानां महादोषवर्णनम्

तस्मात्पुण्यतमं तीर्थं घोणतीर्थं द्विजोत्तमाः ।
आरामच्छेदकं क्रूरं कन्यातुरगविक्रयम् ॥ ११
घोणस्नानपरित्यक्तं तमाहुर्ब्रह्मघातुकम् ।
देवद्रव्यापहर्तारं तथा दत्तापहारकम् ॥ १२
घोणस्नानपरित्यक्तं तमाहुर्ब्रह्मघातुकम् ।
तटाकसेतुभेत्तारं परस्त्रीसङ्गलोलुपम् ॥ १३
घोणस्नानपरित्यक्तं तमाहुः स्तेयिनं बुधाः ।
'ददामी' ति द्विजायोक्त्वा पश्चाद्यो नास्तिकोऽधमः ॥ १४
घोणस्नानपरित्यक्तं सुरापं तं विदुर्बुधाः ।
गुरुविप्रजनद्वेष्यं आत्मस्तुतिपरायणम् ॥ १५
घोणस्नानपरित्यक्तं तमाहुः स्तेयिनं बुधाः ।
असंस्कृतान्नभोक्तारं पितृशेषान्नभोजिनम् ॥ १६
घोणस्नानपरित्यक्तं तमाहुः स्तेयिनं द्विजाः ।
पितृशेषान्नदातारं मातापितृविरोधिनम् ॥ १७
घोणस्नानपरित्यक्तं तमाहुः स्तेयिनं बुधाः ।
परस्त्रीसङ्गनिरतं भ्रातृभार्यारतिप्रियम् ॥ १८
घोणस्नानपरित्यक्तं तमाहुर्गुरुतल्पगम् ।
चण्डालभाषिणं विप्रं सदैवादर्भपाणिकम् ॥ १९
घोणस्नानपरित्यक्तं तत्संसर्गं तु पञ्चमम् ।
रजस्वलाश्वचण्डालध्वनिं श्रुत्वाऽन्नभोजिनम् ॥ २०

घोणस्नानपरित्यक्तं तत्संसर्गन्तु पञ्चमम् ।
पुराणोद्वाहमौञ्ज्यादिधर्माणां विघ्नकारकम् ॥ २१

घोणस्नानपरित्यक्तं तमाहुः पशुघातुकम् ।
शरणागतहन्तारं सर्वतीर्थपराङ्मुखम् ॥ २२

घोणस्नानपरित्यक्तं तमाहुर्भ्रूणह बुधाः ।
पितृयज्ञपरित्यागं त्यक्तभार्यं कुलाधमम ॥ २३

घोणस्नानपरित्यक्तं तमाहुर्गोविघातुकम् ।
महापापसमानानि क्षुद्रपापानि यानि च ।
घोणस्नानपरित्यक्तं आश्रयन्ति द्विजोत्तमाः! ॥ २४

## घोणस्नानस्य सर्वपापापनोदकत्ववर्णनम्

महापापरतं विप्राः! श्वपचं वा कुलाधमम् ।
क्रूरं कुलान्तकं कष्टं अदत्तं कर्मवर्जितम् ॥ २५

पशुघ्नञ्च परद्रोहमाश्रितं पिशुनं तथा ।
असत्यभाषिणं दम्भं परपाकरतं तथा ॥ २६

मित्रद्रोहं कृतघ्नञ्च भ्रूणहं चातिपातकम् ।
परदाररतं पापं पराणामर्थसूचकम् ॥ २७

अनृतं कृषिकर्माणं स्वामिद्रोहञ्च वञ्चकम् ।
सलोभं पितृहन्तारं सर्वदेवपराङ्मुखम् ॥ २८

आत्मप्रशंसां कुर्वाणं धर्मविघ्नकरं शठम् ।
अपात्रव्ययकर्तारं सानुकूल्यविभेदकम् ॥ २९

सुपल्लवफलोपेतवृक्षविच्छेदकारकम् ।
विश्वासघातुकञ्चैव वीरहत्यापरायणम् ॥ ३०

अनग्निकमपुत्रञ्च विषकर्मप्रयोगिणम् ।
गुरुद्वेषकरं पापं दम्पत्योर्विरसावहम् ॥ ३१
ग्रामाधिपत्यं कुर्वाणं तथा देवालयस्य च ।
भृतकाध्यापकं विप्रं क्रूरकर्मपरायणम् ॥ ३२
प्रकटीकृतपापौघं गुह्याघौघपरायणम् ।
अज्ञानादघकर्तारं ज्ञानात् दुष्कर्मकारकम् ॥ ३३
एतान् सर्वांश्च विप्रेन्द्राः! घोणतीर्थं मनोहरम् ।
पुनाति स्नानपानाद्यैः अहो! तीर्थस्य वैभवम् ॥ ३४

## तुम्बुर्वाख्यगन्धर्वचरितम्

श्रीसूतः— अत्रेतिहासं वक्ष्यामि पुराणं पापनाशनम् ।
सर्वपापप्रशमनं अपवर्गफलप्रदम् ॥ ३५
पुरा गार्ग्यो महातेजाः सर्वविद्याविशारदः ।
सर्वज्ञो नीतिमान् विप्रः प्राह चेत्थं जितेन्द्रियः ॥ ३६
देवलञ्च महात्मानं नमस्कृत्य प्रसन्नधीः ।
'कथयस्व माहाभाग! मयि कारुणिको भव ।
घोणतीर्थस्य माहात्म्यं सर्वपापहरं शुभम्' ॥ ३७
देवलः— 'तुम्बुरुर्नाम गन्धर्वो भार्यां शप्त्वा पतिव्रताम् ।
अत्र स्नात्वा समभ्यर्च्य वेङ्कटेशं दयानिधिम् ।
प्राप्तवान् विष्णुलोकं वै पुनरावृत्तिवर्जितम्' ॥ ३८
गार्ग्यः— 'किमर्थं देवल! ऋषे भार्यां रूपवतीं स्त्रियम् ।
तुम्बुरुर्नाम गन्धर्वः सर्वविद्याविशारदः ॥ ३९
शप्तवान् केन दोषेण भार्यां सर्वगुणान्विताम् ।
तद्वदस्व महाभाग! श्रोतुं कौतूहलं हि मे ॥' ४०

## स्वभार्यायै तुम्बुरूपदिष्टमाघस्नानविधिप्रकारः

लः— 'तुम्बुरुर्नाम गन्धर्वो भार्यां प्रीत्या ह्युवाच ह ।
माघत्रये मया साकं स्नानं कुरु मलापहम् ॥ ४१
माघमास्युदिते सूर्ये सर्वकल्मषनाशने ।
तीरेऽस्मिन् विष्णुपूजार्थं गोमयालेपनं कुरु ॥ ४२
रङ्गवल्ल्यादिभिः शुभ्रपद्मस्वस्तिकधातुभिः ।
शुश्रूषां कुरु मे विष्णोः मासेऽस्मिन् मङ्गलप्रदे ॥ ४३
माघेऽस्मिन् माधवस्यास्य कुरु त्वं दीपवर्तिकाम् ।
सधूपं पावकं भक्त्या समर्पय हरेः पुरः ॥ ४४
कुरु पाकं शुचिर्भूत्वा माधवाय महात्मने ।
प्रदक्षिणनमस्कारैः भक्त्या माघे मया सह ॥ ४५
कुरुष्व देवदेवस्य सपर्यां विष्णवेऽन्वहम् ।
पुराणश्रवणं विष्णोः कुरु नित्यमतन्द्रितः ॥ ४६
नित्यं स्नात्वा प्रयत्नेन पिब पादोदकं हरेः ।
कृष्ण! विष्णो! मुकुन्देति नारायण! जनार्दन! ॥ ४७
अच्युतानन्त! विश्वात्मन्निति कीर्तय सन्ततम् ।
क्रोधमात्सर्यलोभादीन् त्यक्त्वा त्वं व्रतमाचर ।
तेन ते जायते मुक्तिः विष्णुलोकश्च शाश्वतः ॥' ४८

## भार्यां प्रति तुम्बुरुदत्तशापतद्विमुक्तिप्रकारौ

इत्थं सा भर्तृगदितं श्रुत्वा गन्धर्ववल्लभा ।
भर्तारमब्रवीत्कोपात् असह्यं दुर्गतिप्रदम् ॥ ४९
'माघे चोद्भूतशीते तु प्रातर्मन्दोदिते रवौ ।
कथं निमज्जयेदस्मिन् माघे शीतार्तिदेऽनघ! ॥ ५०

यत्त्वयोक्तानि कर्माणि न शक्यानि मयाऽसकृत् ।
न करोमि पते! स्नानं प्रातःकाले त्वया सह ॥ ५१
मृते शीतातिपातेन न च मे रक्षको भवान् ।'
इत्येवमुदितं श्रुत्वा पतिर्गन्धर्ववल्लभः ॥ ५२
स शान्तोऽपि शशापाथ भार्याञ्चाप्रियवादिनीम् ।
'पुत्रञ्च धर्मविमुखं भार्याञ्चाप्रियभाषिणीम् ॥ ५३
अब्रह्मण्यञ्च राजानं सद्यः शापेन दण्डयेत्' ।
इति न्यायं विचिन्त्यासौ शशापेत्थं सतीं तदा ॥ ५४
'वेङ्कटाद्रौ महापुण्ये सर्वपातकनाशने ।
घोणतीर्थसमीपे च पिप्पलद्रुमकोटरे ॥ ५५
तत्राम्बुरहिते मूढे मण्डूका भव केवलम् ।'
इत्येवं भर्तृवाक्यं तत् श्रुत्वा गन्धर्ववल्लभा ॥ ५६
पतित्वा पादयोस्तस्य तुम्बुरुं प्रार्थयत् सती ।
विशापमवदत्पश्चात् भर्ता वै तुम्बुरुस्तदा ॥ ५७
अगस्त्यो वै महाभागः तपस्वी विजितेन्द्रियः ।
घोणतीर्थवरे स्नात्वा पौर्णमास्यां महातिथौ ॥ ५८
शिष्येभ्यो वै यदा तस्मिन् अश्वत्थद्रुमसन्निधौ ।
घोणतीर्थस्य माहात्म्यं वक्ति वै ब्राह्मणोत्तमः ॥ ५९
तदा पिप्पलवृक्षस्य कोटरे त्वं समाहिता ।
श्रुत्वा वै घोणतीर्थस्य माहात्म्यं मोक्षदायकम् ॥ ६०
विधूय सर्वपापानि मया साकं रमिष्यसि' ।
इत्युक्त्वा विररामाथ धर्मपत्नी पतिव्रता ॥ ६१
भर्तृशापान्महाघोरात् मण्डूकतनुमाश्रिता ।
शेषाद्रिशिखरे तस्मिन् घोणतीर्थस्य दक्षिणे ॥ ६२

शनैःशनैर्गता नारी पिप्पलद्रुमकोटरम् ।
अब्दायुतं गतं तस्याः अश्वत्थद्रुमकोटरे ॥ ६३

ततः कालान्तरेऽगस्त्यो वेङ्कटाद्रिं मनोहरम् ।
गत्वा श्रीस्वामितीर्थे च स्नात्वा नियमपूर्वकम् ॥ ६४

वराहस्वामिनं देवं नत्वा तीर्थस्य दक्षिणे ।
वेङ्कटेशाऽलयं गत्वा श्रीनिवासं कृपानिधिम् ॥ ६५

वेदवेद्यं विशालाक्षं देवदेवं सनातनम् ।
नत्वाऽगस्त्यो महाभागो घोणतीर्थं ततो ययौ ॥ ६६

तत्र स्नात्वा तीर्थवर्ये स्वशिष्यैर्योगिनां वरः ।
पिप्पलद्रुमछायायां शिष्येभ्यो भक्तिपूर्वकम् ॥ ६७

घोणतीर्थस्य माहात्म्यं ब्रह्महत्याविनाशकम् ।
सर्वमङ्गलदं पुण्यं सर्वसम्पत्प्रदायकम् ।
उक्तवान् योगिनां श्रेष्ठो ह्यगस्त्यो भगवानृषिः ॥ ६८

## घोणतीर्थे अगस्त्यदर्शनेन तुम्बुरुपत्न्या वर्षाभूत्वनिवृत्तिः

तदा श्रुत्वा तु वर्षाभूः पादयोस्तस्य योगिनः ।
पतित्वा ज्ञानदीपेन विदित्वा वैभवं मुनेः ॥ ६९

पूर्वरूपं समासाद्य नारीरूपं मनोहरम् ।
'अगस्त्य! योगिनां श्रेष्ठ! रक्ष रक्ष दयानिधे! ॥ ७०

मां रक्ष दयया ब्रह्मन्! पतिवाक्यविरोधिनीम् ।'
इत्युक्त्वा तं विशालाक्षी विरराम ततः परम् ॥ ७१

अगस्त्यः—

'का त्वं सुश्रोणि! भद्रं ते भेकजन्मप्रदायकम् ।
पापं पूर्वभवे चासीत् तद्वदस्व च मा चिरम्' ॥ ७२

नारी:—

‘तुम्बुरुर्नाम गन्धर्वः सर्वविद्याविशारदः ।
तस्य भार्याऽस्म्यहं विप्र! ह्यगस्त्य! मुनिसेवित! ॥ ७३
भर्ता मे सर्वधर्मज्ञः तुम्बुरुर्मुनिसत्तमः ।
सर्वधर्मान् मनोज्ञा त्वं कुरु नित्यं मया सह ॥ ७४
पतिवाक्यं तदा श्रुत्वा परलोकोपकारकम् ।
असह्यं वाक्यमत्युग्रं दुर्गतिप्रदमेव हि ।
मया चोक्तं हि दुर्बुद्ध्या हे तात! मुनिसत्तम!’ ॥ ७५

## अगस्त्यकथितपतिव्रताधर्माः

अगस्त्यः—

‘कुशाग्रबुद्धिस्ते भर्ता शशाप त्वां रुषाऽन्वितः ।
एवं शापो युक्त एव पतिवाक्यविरोधिनीम् ॥ ७६
पतिवाक्यमनादृत्य स्वेच्छया वर्तते तु या ।
सा नारी निरये घोरे पतत्याचन्द्रतारकम् ॥ ७७
न स्वातन्त्र्यं तु नारीणां नोल्लंघ्यं पतिभाषणम् ।
पातिव्रत्येन पुण्येन पतिशुश्रूषणेन च ॥ ७८
स्त्रियो विष्णुपदं यान्ति न चान्यैरपि सुव्रतैः ।
पतिर्माता पतिर्विष्णुः पतिर्ब्रह्मा पतिः शिवः ॥ ७९
पतिर्गुरुः पतिस्तीर्थं इति स्त्रीणां विदुर्बुधाः ।
पतिवाक्यमपाकृत्य या नारी सुकृतैः परैः ॥ ८०
सदैव युज्यते सापि नैव शुद्धा भवेत्सकृत् ।
पतिहीना तु या नारी गुरुभिर्धर्मवित्तमैः ॥ ८१
सा कृतज्ञा विदध्यात्तु व्रतं धर्मफलप्रदम् ।
पतिना प्रेरिता सैव पतिबुद्धिपरायणा ॥ ८२

पतिपादाब्जतीर्थेन या स्नाता सा हरिप्रिया ।
सा स्नाता सर्वतीर्थेषु गङ्गादिषु न संशयः ॥ ८३
तस्मात्त्वत्कृतदोषस्तु त्वामायातीति तत्फलम् ।
भुञ्जन्त्यास्तेऽत्र शृण्वन्त्या घोणतीर्थस्य वैभवम् ।
मुक्तिरासीच्छुभाङ्ग तत् नारीरूपं पुनर्यथा' ॥ ८४

श्रीसूतः—

तस्माद्घोणस्य तीर्थस्य तुम्बुतीर्थमितीह वै ।
लोके प्रसिद्धिरभवत् अहो तीर्थस्य वैभवम् ॥ ८५

## घोणतीर्थस्नातॄणां नानाविधफलप्राप्तिः

घोणतीर्थे महापुण्ये सर्वपापविनाशिनि ।
स्नान्ति ये पौर्णमास्यां वै शौनकाद्याः! महौजसः! ॥ ८६
तेषां क्रतुफलं पुण्यं तीर्थायुतफलं भवेत् ।
कपिलागोसहस्रं तु यो ददाति दिने दिने ॥ ८७
तत्फलं समवाप्नोति स्नानात्तुम्बुरुतीर्थके ।
रत्नकोटिसहस्राणि यो ददाति दिने दिने ॥ ८८
मत्तेभानां सहस्राणि तथैवाश्वायुतान्यपि ।
तत्फलं समवाप्नोति घोणतीर्थावगाहनात् ॥ ८९
कन्याकोटिप्रदानेन यत्फलं ऋषिभिः स्मृतम् ।
तत्फलं समवाप्नोति घोणतीर्थाच्च पावनात् ॥ ९०
हेमाम्बरसहस्रं यः कुरुक्षेत्रे प्रयच्छति ।
तत्फलं समवाप्नोति घोणतीर्थस्य वैभवात् ॥ ९१
गुर्वर्थे ब्राह्मणार्थे वा स्वाम्यर्थे यस्त्यजेत्तनुम् ।
तत्फलं समवाप्नोति घोणतीर्थस्य वैभवात ॥ ९२

आपन्नार्तिहराणाञ्च तीर्थसेवापरात्मनाम् ।
सत्यव्रतानां यत्पुण्यं घोणतीर्थाच्च तद्भवेत् ॥ १३

यत्फलं श्राद्धकर्तॄणां पितॄणामिन्दुसङ्क्षये ।
तत्फलं समवाप्नोति घोणतीर्थाद्धि पावनात् ॥ १४

गङ्गायां नर्मदायाञ्च सरयूचन्द्रभागयोः ।
सर्वेषु पुण्यतीर्थेषु यः स्नानं कुरुते नरः ॥ १५

तत्फलं समवाप्नोति घोणतीर्थाद्धि पावनात् ।
तस्मात्पुण्यतमं तीर्थं घोणतीर्थं विदुर्बुधाः ॥ १६

य इमं शृणुतेऽध्यायं सर्वपापनिबर्हणम् ।
वाजपेयफलं तस्य विष्णुलोकश्च शाश्वतः ॥ १७

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये तुम्बुरुतीर्थमाहात्म्यवर्णनं नाम षोडशोऽध्यायः

---

अथ सप्तदशोऽध्यायः

## श्रीवेङ्कटाचलस्य सर्वपुण्यतीर्थाधारत्ववर्णनम्

ऋषयः—

वेङ्कटाद्रौ महापुण्ये सर्वसङ्कटनाशने ।
सन्ति वै कति तीर्थानि? सूत! पौराणिकोत्तम! ॥ १

तेषां संख्याञ्च मे ब्रूहि कति मुख्यानि? तत्र वै ।
तत्राप्यत्यन्तमुख्यानि वद नो मुनिसत्तम! ॥ २

सद्धर्मरतिदान्यत्र कति मुख्यानि? तानि च ।
कानि च ज्ञानदान्यत्र? भक्तिवैराग्यदानि च? ।
मुक्तिप्रदानि कान्यत्र? तानि मे वद सुव्रत! ॥ ३

श्रीसूतः —

षट्षष्टिकोटितीर्थानि पुण्यान्यत्र नगोत्तमे ।
अष्टोत्तरसहस्राणि तेषु मुख्यानि सुव्रत! ॥ ४
सद्धर्मरतिदान्यत्र सन्ति चाष्टोत्तरं शतम् ।
सहस्रेभ्यश्च मुख्यानि पृथक् तेभ्यश्च तानि च ।
भक्तिवैराग्यदान्यत्र षष्टिरष्टोत्तरे शते ॥ ५
मुक्तिदान्यत्र षट् चैव वेङ्कटाचलमूर्धनि ।
स्वामिपुष्करिणी चैव वियद्गङ्गा ततः परम् ॥ ६
पश्चात्पापविनाशश्च पाण्डुतीर्थमतःपरम् ।
कुमारधारिकातीर्थं तुम्बोस्तीर्थमतः परम् ॥ ७

## स्वामिपुष्करिण्यादिषट्तीर्थस्नानकालनिर्णयः

कुम्भमासे पौर्णमास्यां मघायोगो यदा भवेत् ।
कुमारधारिकां यान्ति सर्वतीर्थानि हे द्विजाः! ॥ ८
तत्र यः स्नाति विप्रेन्द्राः! राजसूयफलं लभेत् ।
मुक्तिश्च भविता तत्र नात्र कार्या विचारणा ॥ ९
अन्नदानविधिस्तत्र सार्धं दक्षिणया द्विजाः! ।
उत्तराफल्गुनीयुक्तशुक्लपक्षीयपर्वणि ॥ १०
तुम्बोस्तीर्थं मीनसंस्थे रवौ तीर्थानि सर्वशः ।
अपराह्णे समायान्ति तत्र स्नातो न जायते ॥ ११
मौञ्जीबन्धं विवाहञ्च कारयेद् द्रव्यदानतः ।
मेषसङ्क्रमणे भानौ चित्रानक्षत्रसंयुते ॥ १२
पौर्णमास्यां समायान्ति वियद्गङ्गां तथैव च ।
तत्र स्नात्वा नरः सद्यः शतक्रतुफलं लभेत् ॥ १३

सुवर्णं तत्र दातव्यं कन्यादानं विशेषतः ।
वृषभस्थे रवौ विप्राः ! द्वादश्यां हरिवासरे ॥ १४
शुक्ले वाऽप्यथ कृष्णे वा भौमेनापि समन्विते ।
पाण्डुतीर्थं समायान्ति गङ्गादीनि जगत्त्रये ॥ १५
तत्र स्नात्वा च गां दत्त्वा मुच्यते प्रतिबन्धकात् ।
आश्वयुक्छुक्लपक्षे च सप्तम्यां भानुवासरे ॥ १६
उत्तराषाढयुक्तायां तथा पापविनाशनम् ।
उत्तराभाद्रयुक्तायां द्वादश्यां वा समागतः ॥ १७
सालग्रामशिलां दत्त्वा स्नात्वा च विधिपूर्वकम् ।
मुच्यते सर्वपापैश्च जन्मकोटिशतोद्भवैः ॥ १८
धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।
आयान्ति सर्वतीर्थानि स्वामिपुष्करिणीजले ॥ १९
तत्र स्नात्वा नरः सद्यो मुक्तिमेति न संशयः ।
यस्य जन्मसहस्रेषु पुण्यमेवार्जितं पुरा ॥ २०
तस्य स्नानं भवेद्विप्राः ! नान्यस्य त्वकृतात्मनः ।
विभवानुगुणं दानं कार्यं तत्र यथाविधि ।
सालग्रामशिलादानं गां दद्याच्च विशेषतः ॥ २१

**पुराणश्रवणस्य विशेषतः प्राशस्त्यवर्णनम्**

ये शृण्वन्ति कथां विष्णोः सदा भुवनपावनीम् ।
ते वै मनुष्यलोकेऽस्मिन् विष्णुभक्ता भवन्ति हि ॥ २२
यद्यशक्तः सदा श्रोतुं कथां भुवनपावनीम् ।
मुहूर्तं वा तदर्धं वा क्षणं वा विष्णुसत्कथाम् ॥ २३
यः शृणोति नरो भक्त्या दुर्गतिर्नास्ति तस्य हि ।
यत्फलं सर्वयज्ञेषु सर्वदानेषु यत्फलम् ॥ २४

सकृत्पुराणश्रवणात् तत्फलं विन्दते नरः ।
कलौ युगे विशेषेण पुराणश्रवणादृते ॥ २५
नास्ति धर्मः परः पुंसां नास्ति मुक्तिप्रदं परम् ।
पुराणश्रवणं विष्णोः नामसङ्कीर्तनं परम् ॥ २६
उभे एव मनुष्याणां पुण्यद्रुममहाफले ।
पिबन्नेवामृतं यत्नात् एकः स्यादजरामरः ।
विष्णोः कथाऽमृतं कुर्यात् कुलमेवाजरामरम् ॥ २७

## पुराणवक्तुः सर्वपूजनीयत्ववर्णनम्

बालो युवाऽथ वृद्धो वा दरिद्रो दुर्भगोऽपि वा ।
पुराणज्ञः सदा वन्द्यः स पूज्यः सुकृतात्मभिः ॥ २८
नीचबुद्धिं न कुर्वीत पुराणज्ञे कदाचन ।
यस्य वक्त्रोद्गता वाणी कामधेनुः शरीरिणाम् ॥ २९
भवकोटिसहस्रेषु भूत्वा भूत्वाऽवसीदताम् ।
यो ददात्यपुनर्वृत्तिं कोऽन्यस्तस्मात्परो गुरुः ॥ ३०
व्यासासनसमारूढो यदा पौराणिको द्विजः ।
आसमाप्तेः प्रसङ्गस्य नमस्कुर्यान्न कस्यचित् ॥ ३१
न दुर्जनसमाकीर्णे न शूद्रश्वापदावृते ।
देशे न द्यूतसदने वदेत् पुण्यकथां सुधीः ॥ ३२
सुग्रामे सुजनाकीर्णे सुक्षेत्रे देवताऽऽलये ।
पुण्ये वाऽथ नदीतीरे वदेत् पुण्यकथां सुधीः ॥ ३३
श्रद्धाभक्तिसमायुक्ताः नान्यकार्येषु लालसाः ।
वाग्यताः शुचयोऽव्यग्राः श्रोतारः पुण्यभागिनः ॥ ३४
अभक्त्या ये कथां पुण्यां शृण्वन्ति मनुजाधमाः ।
तेषां पुण्यफलं नास्ति दुःखं जन्मनि जन्मनि ॥ ३५

पुराणं ये तु सम्पूज्य ताम्बूलाद्यैरुपायनैः ।
शृण्वन्ति च कथां भक्त्या न दरिद्रा न पापिनः ॥ ३६
कथायां कथ्यमानायां ये गच्छन्त्यन्यतो नराः ।
भोगान्तरे प्रणश्यन्ति तेषां दाराश्च सम्पदः ॥ ३७
सोष्णीषमस्तका ये च कथां शृण्वन्ति पावनीम् ।
ते बालकाः प्रजायन्ते पापिनो मनुजाधमाः ॥ ३८
ताम्बूलं भक्षयन्तो ये कथां शृण्वन्ति पावनीम् ।
श्वविष्ठां भक्षयन्त्येते नरके च पतन्ति हि ॥ ३९
ये च तुङ्गासनारूढाः कथां शृण्वन्ति दाम्भिकाः ।
अक्षय्यान्नरकान् भुक्त्वा ते भवन्त्येव वायसाः ॥ ४०
ये च वीरासनारूढा ये च सिंहासनस्थिताः ।
शृण्वन्ति सत्कथां ते वै भवन्त्यर्जुनपादपाः ॥ ४१
असम्प्रणम्य शृण्वन्तो विषवृक्षा भवन्ति हि ।
तथा शयानाः शृण्वन्तो भवन्त्यजगरा हि ते ॥ ४२
यः शृणोति कथां वक्तुः समानासनसंस्थितः ।
गुरुतल्पसमं पापं सम्प्राप्य नरकं व्रजेत् ॥ ४३
ये निन्दन्ति पुराणज्ञं सत्कथां पापहारिणीम् ।
ते वै जन्मशतं मर्त्याः शुनकाश्च भवन्ति हि ॥ ४४
कथायां कीर्त्यमानायां ये वदन्ति दुरुत्तरम् ।
ते गर्दभाः प्रजायन्ते कृकलासास्ततः परम् ॥ ४५
कदाचिदपि ये पुण्यां न शृण्वन्ति कथां नराः ।
ते भुक्त्वा नरकान् घोरान् भवन्ति वनसूकराः ॥ ४६
कथायां कीर्त्यमानायां विघ्नं कुर्वन्ति ये नराः ।
कोट्यब्दं नरकान् भुक्त्वा भवन्ति ग्रामसूकराः ॥ ४७

ये कथामनुमोदन्ते कीर्त्यमानां नरोत्तमाः ।
अशृण्वन्तोऽपि ते यान्ति शाश्वतं पदमव्ययम् ॥ ४८
ये श्रावयन्ति मनुजाः पुण्यां पौराणिकीं कथाम् ।
कल्पकोटिशतं साग्रं तिष्ठन्ति ब्रह्मणः पदे ॥ ४९
आसनार्थं प्रयच्छन्ति पुराणज्ञस्य ये नराः ।
कम्बलाजिनवासांसि तथा मञ्चकमेव वा ॥ ५०
स्वर्गलोकं समासाद्य भुक्त्वा भोगान् यथेप्सितान् ।
स्थित्वा ब्रह्मादिलोकेषु पदं यान्ति निरामयम् ॥ ५१
पुराणस्य प्रयच्छन्ति ये च सूत्रं नवं वरम् ।
भोगिनो ज्ञानसम्पन्नाः ते भवन्ति भवे भवे ॥ ५२
ये महापातकैर्युक्ता ह्युपपातकिनश्च ये ।
पुराणश्रवणादेव ते यान्ति परमं पदम् ॥ ५३
वेङ्कटाद्रेस्तु माहात्म्यं श्रुत्वा ते ऋषयस्ततः ।
व्यासप्रसादसम्पन्नं सूतं पौराणिकोत्तमम् ॥ ५४
पूजयित्वा यथान्यायं प्रहर्षमतुलं गताः ॥ ५५

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये सर्वतीर्थमहिमोपसंहार-
पूर्वकपुराणश्रवणप्रक्रियाद्यनुवर्णनं नाम
सप्तदशोऽध्यायः ।

प्रथमो भागः समाप्तिमगगात् ॥

॥ हरिः ॐ तत्सत् ॥

॥ श्रीरस्तु ॥



श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

# श्रीवेङ्कटाचलमाहात्म्यम्

(श्रीस्कान्दपुराणान्तर्गतम्)

द्वितीयो भागः

हरिः ॐ

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥
श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥

अथ सप्तत्रिंशोऽध्यायः

## कटाहतीर्थमाहात्म्यम्

ऋषयः—

सूत ! सर्वार्थतत्त्वज्ञ ! वेदवेदान्तपारग ! ।
श्रीवेङ्कटाचले तीर्थं कटाहाख्यं सुपावनम् ॥ १
श्रूयते तस्य माहात्म्यं घुष्यते च जगत्त्रये ।
अस्माकमेतद् ब्रूहि त्वं कृपया व्यासशासित ! ॥ २
पुरा वै नारदः श्रीमान् ब्रह्मपुत्रो महानृषिः ।
दृष्टुं वै नैमिशारण्यं संप्राप्तो द्विजसत्तमः ॥ ३
तदानीं ब्रह्मपुत्रं तं अर्घ्यपाद्यादिभिः शुभैः ।
पूजयित्वा यथान्यायं पवित्रे च कुशासने ॥ ४

सन्निवेश्य महाभक्त्या विनयानतकन्धराः ।
प्रणम्य प्रार्थयामासुः इमे सर्वे महर्षयः ॥ ५
त्वां विना नारद ! श्रीमन् ! अस्माकं भुवनत्रये ।
धर्मोपदेशकः कश्चित् नास्ति नास्ति महर्षिषु ॥ ६
वेङ्कटाद्रौ महापुण्ये सर्वदेवनिषेविते ।
वैकुण्ठादागते दिव्ये सिद्धगन्धर्वसेविते ॥ ७
कटाहतीर्थमाहात्म्यं वर्णयाद्य वनौकसाम् ॥ ८

श्रीनारदः—

'श्रृणुध्वमृषयः सर्वे शौनकाद्याः ! महौजसः ! ।
कटाहतीर्थमाहात्म्यं को वेत्ति ? भुवनत्रये ॥ ९
महादेवो विजानाति तस्य तीर्थस्य वैभवम् ।
यानि कानि च पुण्यानि ब्रह्माण्डान्तर्गतानि वै ॥ १०
तानि गङ्गादितीर्थानि स्वपापपरिशुद्धये ।
कटाहतीर्थसेवाञ्च कुर्वन्ति द्विजसत्तमाः ! ॥ ११
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्राश्चेतरजातयः ।
स्पृशन्ति तज्जलमिति न पिबेद्यो विमूढधीः ॥ १२
स हि चण्डालतां प्राप्य कुम्भीपाके पतिष्यति ।
ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतीश्वरः ॥ १३
सेवया तस्य तीर्थस्य प्राप्नोति परमं पदम् ।
श्रुतिस्मृतिपुराणेषु तस्य तीर्थप्रशंसनम् ॥ १४
बहुधा वर्ण्यते पञ्चमहापातकनाशनम् ।
अत्यद्भुततरं विप्राः ! सर्वलोकैकपावनम् ॥ १५
ब्रह्महत्याऽयुतं चापि सुरापानाऽयुतं तथा ।
अयुतं गुरुदाराणां गमनं पापकारणम् ॥ १६

स्तेयायुतं सुवर्णानां तत्संसर्गाश्च कोटयः ।
शीघ्रं विलयमायान्ति तस्य तीर्थस्य सेवया ॥ १७
यानि निष्कृतिहीनानि पापानि विविधानि च ।
तानि सर्वाणि नश्यन्ति तीर्थस्यास्य निषेवणात् ॥ १८
इदं तीर्थं महापुण्यं भगवत्पादनिस्सृतम् ।
कुष्ठादिरोगयुक्तो यः प्रत्यहञ्च पिबेदिदम् ॥ १९
सोऽपि रोगविहीनः सन् विष्णुलोकञ्च गच्छति ।
भगवान् शङ्करो देवो रहस्यानुभवे पुरा ॥ २०
पार्वत्यै कथयामास तस्य तीर्थस्य वैभवम् ।
उक्तेष्वेतेषु सन्देहो न कर्तव्यः कदाचन ॥ २१

## कटाहतीर्थमहिमश्रद्धाशून्यानां महानरकप्राप्तिः

अर्थवादोऽयमिति च न वक्तव्यं कदाचन ।
येऽर्थवादमिदं ब्रूयुः तेषां वै नास्तिकात्मनाम् ॥ २२
जिह्वाग्रे परशुं तप्तं प्रक्षिपन्ति च किङ्कराः ।
तस्मात्कटाहतीर्थन्तु सेवनीयं प्रयत्नतः ॥ २३
सर्वदुःखप्रशमनं अपवर्गफलप्रदम् ।
यत्र पीत्वा नरो भक्त्या सर्वान् कामानवाप्नुयात्' ॥ २४
एवमुक्त्वा महाभागः काशीं त्रैलोक्यपावनीम् ।
सम्प्राप्तो नारदः श्रीमान् सूत ! पौराणिकोत्तम ! ॥ २५
सङ्क्षेपतश्च भगवान् नैमिशे ह्युक्तवान् खलु ।
इदानीं श्रोतुमिच्छामः कटाहस्य च वैभवम् ।
सुविस्तरेण चास्माकं वद सूत ! कृपावशात् ॥ २६

## कटाहतीर्थपानक्रमः

भोभोस्तपोधनाः सर्वे ! नैमिशारण्यवासिनः ! ।
कटाहतीर्थमाहात्म्यं शृणुध्वं द्विजसत्तमाः ! ॥ २७
कटाहतीर्थं भो विप्राः ! सर्वलोकेषु विश्रुतम् ।
सर्वसम्पत्करं शुद्धं सर्वपापप्रणाशनम् ॥ २८
दुःस्वप्ननाशनं ह्येतत् महापातकनाशनम् ।
महाविघ्नप्रशमनं महाशान्तिकरं नृणाम् ॥ २९
स्मृतिमात्रेण यत्पुंसां सर्वपापनिषूदनम् ।
मन्त्रेणाष्टाक्षरेणैव पिबेत्तीर्थं मनोहरम् ॥ ३०
अथवा केशवाद्यैश्च नामभिर्वा पिबेज्जलम् ।
यद्वा नामत्रयेणाऽपि पिबेत्तीर्थं शुभप्रदम् ॥ ३१
आहोस्विद्वेङ्कटेशस्य मन्त्रेणाष्टाक्षरेण वै ।
पिबेत्कटाहतीर्थं तत् भुक्तिमुक्तिप्रदायकम् ॥ ३२
विना मन्त्रेण यो विप्रः सम्पिबेत्तीर्थमुत्तमम् ।
'पापं मे नाशय क्षिप्रं जन्मान्तरकृतं महत्' ॥ ३३
इत्युक्त्वा स पिबेन्नित्यं मोक्षमार्गैकसाधनम् ।
स्वामिपुष्करिणीस्नानं वराहश्रीशदर्शनम् ॥ ३४
कटाहतीर्थपानञ्च त्रयं त्रैलोक्यदुर्लभम् ।
बहुना किमिहोक्तेन ! ब्रह्महत्यादिनाशनम् ॥ ३५

## केशवाख्यद्विजवृत्तान्तः

पुरा कश्चिद् द्विजो मोहात् केशवाख्यो बहुश्रुतः ।
हत्वा खड्गेन दुर्बुद्ध्या ब्रह्महत्यामवाप्तवान् ॥ ३६

सोऽपि तस्मिन् महातीर्थे पीत्वा जलमनुत्तमम् ।
केशवाख्यो महापापी विमुक्तो ब्रह्महत्यया ॥ ३७

ऋषयः—

कस्य पुत्रः केशवाख्यः कथं प्राप्तो भयङ्करीम् ।
ब्रह्महत्यामतिक्रूरां अस्माकं वक्तुमर्हसि ॥ ३८

श्रीसूतः-

## गणिकालम्पटस्य केशवद्विजस्य ब्रह्महत्याप्राप्तिक्रमः

तुङ्गभद्रातटे रम्ये गन्धर्वैरुपसेविते ।
अग्रहारो महानासीत् 'वेदाढ्य' इति नामतः ॥ ३९
तस्मिन् वेदपुरे रम्ये ब्राह्मणा वेदपारगाः ।
शब्दशास्त्रपराः सर्वे ज्योतिःशास्त्रप्रवर्तकाः ॥ ४०
मीमांसातर्कशास्त्रज्ञाः सर्वे वेदान्तवादिनः ।
धर्मशास्त्रेषु निरताः अन्नदानपराः सदा ॥ ४१
पुत्रवन्तश्च ते सर्वे ह्यग्रहारे महाजनाः ।
वेदाढ्येऽप्यग्रहारे वै पद्मनाभ इति श्रुतः ॥ ४२
तस्य पुत्रः केशवाख्यः सर्वकर्मबहिष्कृतः ।
मातरं पितरं त्यक्त्वा भार्यामपि पतिव्रताम् ॥ ४३
सर्वदा गणिकासक्तो वेश्यागारं विवेश ह ।
दिनद्वये च तां वेश्यामनुभूय द्विजस्ततः ॥ ४४
निष्कद्वयं प्रदातव्यं हस्ते दत्त्वा गतः सुखम् ।
वेश्यया चाधनस्त्यक्तः तत्संयोगैकतत्परः ॥ ४५
इतस्ततश्चोरयित्वा बहुद्रव्याणि सन्ततम् ।
दत्त्वा तया चिरं रेमे तद्गृहे बुभुजे च सः ॥ ४६

एकेन चषकेणासौ तया सह सुरां पपौ ।
स कदाचित् किरातैस्तु द्रव्यं हर्तुं ययौ द्विजः ॥ ४७
विप्रस्य कस्यचिद्गेहे सोऽपि कैरातवेषधृक् ।
केशवो विप्रबन्धुर्वै साहसी खड्गहस्तवान् ॥ ४८
तद्गृहस्वामिनं विप्रं हत्वा खड्गेन साहसात् ।
समादाय बहु द्रव्यं वेश्यागारं विवेश ह ॥ ४९
तं यान्तमनुयाति स्म ब्रह्महत्या भयङ्करी ।
नीलवस्त्रधरा भीमा भृशं रक्तशिरोरुहा ॥ ५०
गर्जन्ती साट्टहासं सा कम्पयन्ती च रोदसी ।
अनुद्रुतस्तया विप्रो बभ्राम जगतीतले ॥ ५१
एवं भ्रमन् धरां सर्वां विप्रबन्धुर्दुरात्मवान् ।
स्वग्रामं प्रययौ भीत्या शौनकाद्याः! महौजसः! ॥ ५२
अनुद्रुतस्तया भीतः प्रययौ स्वनिकेतनम् ।
ब्रह्महत्याऽप्यनुद्रुत्य तेन साकं गृहं ययौ ॥ ५३
जनकं 'रक्ष रक्षे' ति केशवः शरणं ययौ ।
मा भैषीरिति स प्रोच्य पिता रक्षितुमुद्यतः ।
क्रूरैनं ब्रह्महत्या सा जनकं प्रत्यभाषत ॥ ५४

## स्वसुतरक्षणोद्युक्ते पद्मनाभे ब्रह्महत्योक्तिः

ब्रह्महत्याः—

मैनं त्वं प्रतिगृण्हीष्व पद्मनाभ! द्विजोत्तम! ।
अयं सुरापी स्तेयी च ब्रह्महा चातिपातकी ॥ ५५
मातृद्रोही पितृद्रोही भार्यात्यागी च दुष्टधीः ।
गणिकासक्तचित्तश्च ह्येनं मुञ्च दुरात्मकम् ॥ ५६

गृह्णासि चेत्सुतं विप्र! महापातकिनं वृथा ।
त्वद्भार्यामस्य भार्याञ्च त्वाञ्च पुत्रमिमं द्विज! ॥ ५७
भक्षयिष्यामि वंशञ्च तस्मान्मुञ्च दुरात्मकम् ।
इमं त्यजसि चेत्पुत्रं युष्मान् मुञ्चामि साम्प्रतम् ॥ ५८
नैकस्यार्थे कुलं हन्तुं अर्हसि त्वं महामते! ।'
इत्युक्तः स तया तत्र पद्मनाभोऽब्रवीच्च ताम् ॥ ५९

पद्मनाभः—

'बाधते मां सुतस्नेहः कथं पुत्रं परित्यजे?' ।
ब्रह्महत्या तदाकर्ण्य पद्मनाभं तमब्रवीत् ॥ ६०

ब्रह्महत्या:—

'पुत्रोऽयं पतितोऽभूच्च वर्णाश्रमबहिष्कृतः ।
पुत्रेऽस्मिन् मा कुरु स्नेहं निन्दितं तस्य दर्शनम्' ॥ ६१
इत्युक्त्वा ब्रह्महत्या सा पद्मनाभस्य पश्यतः ।
हस्तेन प्रजहारास्य सुतं केशवनामकम् ॥ ६२
रुरोद 'तात तात' ति जनकं प्रब्रुवन् मुहुः ।
रुरुदुर्जनको माता भार्या तस्य दुरात्मनः ॥ ६३
तस्मिन् काले महाभागो भरद्वाजो महामुनिः ।
दिष्ट्या समाययौ योगी शौनकाद्या! महौजसः! ॥ ६४
पद्मनाभोऽथ तं दृष्ट्वा भरद्वाजं महामुनिम् ।
स्तुत्वा प्रणम्य शरणं ययाचे पुत्रकारणात् ॥ ६५

## पद्मनाभं प्रति भरद्वाजकथित ब्रह्महत्याविमुक्त्युपायः

'भरद्वाज महाभाग! साक्षाद्विष्णुवंशको भवान् ।
त्वद्दर्शनमपुण्यानां भविता न कदाचन ॥ ६६

ब्रह्महा च सुरापी च स्तेयी चाभूत्सुतो मम ।
पुत्रं प्रहर्तुमायाता ब्रह्महत्या भयङ्करी ॥ ६७

भूयाद्यथा मे पुत्रोऽयं महापातकमोचितः ।
घोरेयं ब्रह्महत्या च यथा शीघ्रं लयं व्रजेत् ॥ ६८

तमुपायं वदस्वाद्य मम पुत्रे दयां कुरु ।
एक एव हि पुत्रो मे नान्योऽस्ति तनयो मुने! ॥ ६९

सुते मृते तु वंशो मे समुच्छिद्येत मूलतः ।
ततः पितृभ्यः पिण्डानां दाताऽपि न भवेद्ध्रुवम् ॥ ७०

ततः कृपां कुरुष्व त्वं अस्मासु भगवन् मुने!' ।
इत्युक्तः स भरद्वाजः साक्षान्नारायणांशकः ।
ध्यात्वा तु सुचिरं कालं पद्मनाभं वचोऽब्रवीत् ॥ ७१

भरद्वाजः—

'पद्मनाभ! कृतं पापं अतिक्रूरं सुतेन ते ।
नास्य पापस्य शान्तिः स्यात् प्रायश्चित्तायुतैरपि ॥ ७२

तथाऽपि ते सुतस्याहं अस्य पापस्य शान्तये ।
प्रायश्चित्तं वदिष्यामि पद्मनाभ! शृणु द्विज! ॥ ७३

गङ्गाया दक्षिणे भागे द्विशतीयोजने द्विज! ।
पूर्वाम्भोधेः पश्चिमे तु पञ्चभिर्योजनैर्मिते ॥ ७४

सुवर्णमुखरीतीरे चोत्तरे क्रोशमात्रके ।
वेङ्कटाद्रिरिति ख्यातः सर्वलोकनमस्कृतः ॥ ७५

मेरुपुत्रो महापुण्यः सर्वदेवाभिवन्दितः ।
वैकुण्ठलोकादानीतो विष्णोः क्रीडाचलो महान् ॥ ७६

गरुत्मता वेगवता स्वर्णमुख्यास्तटे शुभे ।
वर्तते देवसङ्घैश्च ऋषिसङ्घैश्च पूजितः ॥ ७७

तस्मिन् वेङ्कटशैलेन्द्रे साक्षान्नारायणः स्वयम् ।
लक्ष्मीदेव्या च भूदेव्या नीलादेव्या समागतः ॥ ७८
वर्तते वेङ्कटेशः सः साक्षान्मोक्षप्रदायकः ।
तस्य वेङ्कटनाथस्य ह्यालयस्य तथोत्तरे ॥ ७९
कटाहतीर्थं विप्रेन्द्र! वर्तते मङ्गलप्रदम् ।
ब्रह्महत्यादिपापघ्नं वाञ्छितार्थप्रदायकम् ॥ ८०
सुतेन साकं विप्रेन्द्र! पिब तीर्थं मनोहरम्' ।
भरद्वाजस्य वाक्यं तत् श्रुत्वा वै वेदसम्मितम् ।
शिरसा तं प्रणम्याऽथ ययौ वेङ्कटपर्वतम् ॥ ८१

**भरद्वाजोक्त्या कटाहतीर्थपानेन केशवस्य ब्रह्महत्याविमुक्तिः**

तं गत्वा वेङ्कटं शैलं स्वामिपुष्करिणीजले ।
सुतेन साकं विप्रेन्द्रः सस्नौ नियमपूर्वकम् ॥ ८२
वराहस्वामिनं नत्वा श्रीनिवासाऽलयं गतः ।
प्रदक्षिणं ततः कृत्वा विमानं सम्प्रणम्य च ॥ ८३
पद्मनाभोऽथ पुत्रेण केशवेन दुरात्मना ।
पपौ कटाहतीर्थं तत् ब्रह्महत्याविनाशकम् ॥ ८४
तदानीं ब्रह्महत्या सा शीघ्रमेव लयं गता ।
अनन्तरं ततो गत्वा वेङ्कटेशं कृपानिधिम् ॥ ८५
पुत्रेण सह विप्रेन्द्रः पद्मनाभो ददर्श सः ।
तदा प्रादुरभूद्देवो वेङ्कटेशो दयानिधिः ।
कटाहतीर्थपानेन तोषितो वाक्यमब्रवीत् ॥ ८६

**ब्रह्महत्याविमुक्तसुतेन सहितं पद्मनाभं प्रति भगवदुक्तिः**

श्रीभगवान्—'पद्मनाभ! महाबुद्धे! वेदवेदान्तपारग! ।
भरद्वाजस्य वाक्येन प्राप्य वेङ्कटपर्वतम् ॥ ८७

कटाहतीर्थं त्वं पीत्वा कृतार्थोऽसि न संशयः ।
तव पुत्रः केशवाख्यो विमुक्तो ब्रह्महत्यया ॥ ८८

तस्मात्कटाहतीर्थन्तु सेवनीयं प्रयत्नतः ।
तस्मिंस्तीर्थे महाभाग! पीत्वा जलमनुत्तमम् ॥ ८९

पापिनोऽपि कृतार्थाः स्युः सत्यं सत्यं न संशयः ।
मामकं लोकमागत्य सुखी भव महामते!' ।
इत्युक्त्वा वेङ्कटेशोऽसौ अन्तर्धानं गतस्ततः ॥ ९०

श्रीसूतः—

तस्मात्तपोधनाः सर्वे शौनकाद्या महौजसः! ।
कटाहतीर्थमाहात्म्यं इतिहाससमन्वितम् ।
यथाश्रुतं मया सम्यक् तथोक्तं भवतां द्विजाः! ॥ ९१

इति श्रीस्कान्दपुराणे श्रीवेङ्कटाचलमाहात्म्ये सूतशौनकसंवादे
कटाहतीर्थप्रशंसनं नाम सप्तत्रिंशोऽध्यायः ।
समाप्तो द्वितीयो भागः



श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिर्नस्तरङ्गयतु मङ्गलम् ॥

॥ श्रीरस्तु ॥



श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते विष्वक्सेनाय नमः

# श्रीवेङ्कटाचलमाहात्म्यम्

(श्रीस्कान्दपुराणान्तर्गतम्)

(तृतीयो भागः)



हरिः ॐ

## अर्जुनतीर्थयात्राक्रमः

ॐ पावने नैमिशारण्ये शौनकाद्या महर्षयः ।
चक्रिरे लोकरक्षार्थं सत्त्रं द्वादशवार्षिकम् ॥ १

तानभ्यगच्छत् कथको व्यासशिष्यो महामतिः ।
मुनिरुग्रश्रवा नाम रोमहर्षणसम्भवः ॥ २

सम्यगभ्यर्चितस्तेषां सूतः पौराणिकोत्तमः ।
कथयामास तद्दिव्यं पुराणं स्कान्दनामकम् ॥ ३

सृष्टिसंहारवंशानां वंशानुचरितस्य च ।
कथां मन्वन्तराणाञ्च विस्तरात् स न्यवेदयत् ॥ ४

तथा तीर्थप्रभावांस्तु श्रुत्वा ते मुनिपुङ्गवाः ।
ऊचिरे वचनं सूतं कथाश्रवणकाङ्क्षया ॥ ५

ऋषयः—

तीर्थानामिह सर्वेषां प्रभावः कथितस्त्वया ।
नदीनां पर्वतानाञ्च क्षेत्राणां सरसामपि ॥ ६

निदेशात्पद्मगर्भस्य सुवर्णमुखरी नदी ।
नीता भुवमगस्त्येन व्याख्याता भवताऽनघ ! ॥ ७
तदुत्पत्तिप्रभावञ्च तीर्थौघांस्तत्समाश्रयान् ।
श्रोतुं सम्प्रीतिरुत्पन्ना तन्नो वक्तुं त्वमर्हसि ' ॥ ८
प्रणम्य शम्भुं नन्दीशं षडास्यं व्यासमेव च ।
मुनिभिः प्रार्थितः सूतः तदा वक्तुं प्रचक्रमे ॥ ९

श्रीसूतः— साधु पृष्टं महाभागाः ! भवद्भिर्मङ्गलावहम् ।
आख्यानमेतदाम्नायश्रवणोद्भूतसिद्धिदम् ॥ १०
शृणुतावहिता दिव्यां कथां कल्मषनाशिनीम् ।
भरद्वाजेन कथितां पार्थाय कथयामि वः ॥ ११
अवाप्य द्रुपदात् प्राज्ञात् याज्ञसेनीं पृथासुताः ।
धृतराष्ट्रनिदेशेन जग्मुः करिपुरं शुभम् ॥ १२
भीष्मेण चाम्बिकेयेन तत्र सम्मानितास्तदा ।
दुर्योधनादिभिः सार्द्धं न्यवसन् पञ्च वत्सरान् ॥ १३
ततोऽनुशिष्टो भीष्माद्यैः धृतराष्ट्रो महायशाः ।
सर्वेषां कुलवृद्धानां वासुदेवस्य चाग्रतः ॥ १४
प्रददौ पाण्डुपुत्रेभ्यः तत्सेवाहृष्टमानसः ।
सार्धराज्यं पुरवरं खाण्डवप्रस्थसंज्ञिकम् ॥ १५
आमन्त्र्य पाण्डुतनयाः धृतराष्ट्रादिकान् कुरून् ।
जग्मुस्तत्खाण्डवप्रस्थं पुरं कृष्णसमन्विताः ॥ १६
इन्द्रप्रस्थाह्वये तत्र रचिते विश्वकर्मणा ।
वसन् पुरेऽशिषत् पृथ्वीं सानुजो धर्मनन्दनः ॥ १७
गते कृष्णे निजपुरं नारदस्यानुशासनात् ।
प्रतिज्ञां चक्रिरे पार्थाः धर्मज्ञा द्रौपदीं प्रति ॥ १८

## अर्जुनतीर्थयात्रोपोद्घातः

यथाक्रमेण सा कृष्णा वर्षमेकैकमादरात् ।
एकैकस्य गृहे तिष्ठेत् प्रतिनिर्णयपूर्वकम् ॥ १९

यः पश्येत्तां परगृहे स्थितां पाञ्चालनन्दिनीम् ।
तेनैकहायनमितं विधेयं तीर्थसेवनम् ॥ २०

एवं कृतप्रतिज्ञास्ते पाण्डुभूपालनन्दनाः ।
व्यापारैर्लोकसामान्यैः निन्युः कालमतन्द्रिताः ॥ २१

अथ जानपदो विप्रो राजगेहाङ्गणे स्थितः ।
चुक्रोश बहुधा 'धेनुः हृता मे तस्करै' रीति ॥ २२

समाश्वास्य च तं विप्रं प्रविवेश धनञ्जयः ।
आयुधानि समानेतुं त्वरया शस्त्रमन्दिरम् ॥ २३

तत्रापश्यत् समासीनौ पाञ्चालीधर्मनन्दनौ ।
जानन्नपि प्रतिज्ञां सः धनुर्जग्राह सेषुधि ॥ २४

स गत्वा तस्करानाजौ निहत्य नृपनन्दनः ।
निवर्त्य धेनुं तां तस्मै ददौ विप्राय सादरम् ॥ २५

अथ विज्ञापयामास फाल्गुनो धर्मनन्दनम् ।
'तीर्थयात्रा मया कार्या समयोलङ्घना' दिति ॥ २६

अनुजस्य वचः श्रुत्वा सर्वधर्मविदां वरः ।
उवाच वचनं धीरः सादरं धर्मनन्दनः ॥ २७

युधिष्ठिरः—

'गवार्थं ब्राह्मणार्थञ्च यद्वदेदनृतं वचः ।
यदाचरेदसत्कर्म तत्सत्यं तत्समञ्जसम् ॥ २८

ब्राह्मणार्थं गवार्थञ्च त्वया कर्मेदृशं कृतम् ।
तदसद्भावमाप्नोति कथं कथय सुव्रत ! ॥ २९

प्रजापालनकृत्यस्य चोरोपेक्षणशिक्षणैः ।
नूनं फलं भवेद्राज्ञो ब्रह्महत्याश्वमेधजम् ॥ ३०
असाध्यान् वैरिणो ज्ञात्वाऽप्यवनीशो न भद्रभाक् ।
स्वदेशोपप्लवकराः तस्करा यद्यशिक्षिताः ॥ ३१
अस्माकं भूभुजां लोकजालस्य च हितं हि यत् ।
त्वयेदृशं कृतं कर्म नास्ति दोषो ह्यतस्तव ' ॥ ३२

श्रीसूतः—

धर्मपुत्रस्य वचनं आकर्ण्य रचिताञ्जलिः ।
पुनर्विज्ञापयामास धर्मनित्यो धनञ्जयः ॥ ३३

अर्जुनः—

'मैवं भूपाल! वादीस्त्वं स्वप्रतिज्ञातिलङ्घनम् ।
जानता धर्मसर्वस्वं उल्लसद्धर्ममूर्तिना ॥ ३४
कृत्याकृत्यविदा दक्षेणाऽऽत्मना प्राक् समीरिता ।
नोल्लङ्घनीया सततं प्रतिज्ञा पुरुषेण हि ॥ ३५
अशक्तानां गतिः सेयं यद्बन्धुगुरुवाक्यतः ।
धर्मं त्यजन्ति समयं त्यक्त्वा प्राक् स्वं समीरितम् ॥ ३६
कृपया तीर्थगमनात् आर्यो यदि निवर्तयेत् ।
हतप्रतिज्ञं मां लोकान् जल्पतः को निवारयेत् ॥ ३७
ममापि तीर्थयात्रायां कौतुकोत्तरलं मनः ।
कर्तव्यश्च स्मृतं राजन्! नारदादिष्टशासनम् ॥ ३८
तत्प्रसीद महाराज! यत्तीर्थगमनोद्यमे ।
सम्माननीयः प्रभुभिः स मया ह्यनुजीविनाम् ' ॥ ३९
तथेति भ्रातृभिः सार्द्धं कृतानुमतिरर्जुनः ।
अग्रजं तोषयामास प्रणामप्रश्रयादिभिः ॥ ४०

यथार्हं भीमसेनादीन् भ्रातॄनामन्त्र्य पाण्डवः ।
कृतस्वस्त्ययनो भव्यैः निर्ययौ धरणीसुरैः ॥ ४१
पौराणिका ज्यौतिषिकाः भिषजो धरणीसुराः ।
अनुजग्मुर्भृत्यगणाः शिल्पिनः सूतमागधाः ॥ ४२
युधिष्ठिराज्ञया तस्य भोगत्यागक्षमं धनम् ।
गृहीत्वाऽनुययुः स्निग्धाः सभ्याः कोशाधिकारिणः ॥ ४३

## अर्जुनस्य गङ्गादितीर्थावगाहनपूर्वकं सुवर्णमुखर्यागमनम्

स राजपुत्रः प्रथमं प्राप्य भागीरथीं नदीम् ।
गङ्गाद्वारं प्रयागञ्च सिषेवे काशिकामपि ॥ ४४
पश्यंस्तीर्थानि जाह्नव्याः तत्तीरोपान्तवर्त्मना ।
आससाद समुत्तुङ्गकल्लोलं दक्षिणोदधिम् ॥ ४५
महानदीं महापुण्यां प्रसिद्धं पुरुषोत्तमम् ।
सिंहाचलञ्च संवीक्ष्य प्राप्तवान् कृतकृत्यताम् ॥ ४६
ततो ददर्श कौन्तेयः पुण्यां गोदावरीं नदीम् ।
समस्तदुरितव्रातशातनोत्तीर्णगौरवाम् ॥ ४७
कृताभिषेकस्तत्तोयैः विधिवत् पाण्डुनन्दनः ।
प्रमोदं विविधैर्दानैः अकरोद्भूसुवर्णकैः ॥ ४८
नदीं मलापहाख्याञ्च दृष्ट्वा मोदं ययौ शुभम् ।
ततः समाससादासौ कृष्णवेणीं सरिद्वराम् ॥ ४९
शिवस्य नियतावासं चतुर्द्वारसमन्वितम् ।
नानातीर्थगणाकीर्णं श्रीपर्वतमवैक्षत ॥ ५०
नदीं पिनाकिनीं तीर्त्वा गत्वा देवर्षिसेवितम् ।
नारायणप्रियावासं अपश्यद्वेङ्कटाचलम् ॥ ५१

शृङ्गेऽस्य भूभृतस्तुङ्गे स्थितं लोकैकनायकम् ।
अपूजयद्धरिं भक्त्या प्रसिद्धं शुभसिद्धये ॥ ५२

अवरुह्य वेङ्कटमहाद्रिशृङ्गतः स ददर्श सिद्धमुनिसङ्घसेविताम् ।
कलशोद्भवेन मुनिना समाहृतां तटिनीं सुवर्णमुखरीसमाह्वयाम् ॥ ५३

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये (तृतीयभागे) सुवर्णमुखरीमाहात्म्ये अर्जुनतीर्थयात्रागमनवर्णनं नाम प्रथमोऽध्यायः ।

---

अथ द्वितीयोऽध्यायः

—: ※ :—

## सुवर्णमुखरीवर्णनम्

तथा सर्वाणि तीर्थानि समालोक्यागतस्य च ।
मुदं प्रगुणयाञ्चक्रे सा पार्थस्य महापगा ॥ १

यस्यास्तटनिकुञ्जेषु मोदन्ते वनितासखाः ।
सिद्धाः संसेविता वातैः शीकरासारशीतलैः ॥ २

या समुद्यतहस्तेव गङ्गामाकाशवाहिनीम् ।
आलिङ्गितु समुत्तुङ्गैः कल्लोलैरभ्रसङ्गिभिः ॥ ३

धूमैराहुतिसम्भूतैः तरुशाखोपलम्भिभिः ।
वल्कलैश्च विराजन्ते यत्तटाश्रमभूमयः ॥ ४

मुनीन्द्रैः सुरवर्यैश्च स्थापितानि समन्ततः ।
यत्तटद्वितये भान्ति दिव्यलिङ्गानि शूलिनः ॥ ५

यदीयसैकतावासविश्रान्ता मानसं सरः ।
न स्मरन्ति निजावासं मराला विहगोत्तमाः ॥ ६

शमितावग्रहातङ्कैः कुल्यामुखविनिर्गतैः ।
पुष्णाति तोयैः सस्यानि लोकरक्षाक्षमाणि या ॥ ७

चक्रवाककुचोत्तुङ्गवीचिवल्लीविभूषिता ।
आवर्तनाभिविलसत्सैकतश्रोणिमण्डला ॥ ८

प्रफुल्लपद्मवदना चलन्मीनयुगेक्षणा ।
विलसत्फेनवसना हंसयानमनोहरा ॥ ९

जलपक्षिरवालापा नयनानन्दकारिणी ।
अपूर्वकामिनीरूपा या विभात्यम्बुधिप्रिया ॥ १०

रोधस्यन्तरवाहिन्याः नद्याः प्राच्यां धनञ्जयः ।
ददर्श शैलमुत्तुङ्गं कालहस्तिसमाह्वयम् ॥ ११

उदग्रशिखराभोगोल्लिखिताकाशमण्डलम् ।
सप्तपातालमूलाधोरूढमूलोपलाञ्चितम् । १२

## अर्जुनस्य स्वर्णमुखरीतीरस्थकालहस्तीश्वरादिसेवाप्राप्तिः

स्नात्वा तस्यां महानद्यां तस्मिन् शैले सुरार्चितम् ।
अपश्यदर्जुनो देवं कालहस्तीशनामकम् ॥ १३

सम्पूज्य च महादेवं नागेन्द्रतनयासखम् ।
मनसा भक्तियुक्तेन कृतार्थत्वमुपेयिवान् ॥ १४

ततो महागिरौ तस्मिन् अद्भुतैकनिकेतने ।
चचाराभूतपूर्वाणां विशेषाणां दिदृक्षया ॥ १५

सिद्धानालोकयामास वसतो गिरिसानुषु ।
गायतो देवदेवस्य चरित्राण्यबलायुतान् ॥ १६

अप्सरोल्ललनाजुष्टान् पुष्पासवमदाकुलान् ।
निकुञ्जेषु समासीनान् गन्धर्वानैक्षताऽदरात् ॥ १७

विविक्तेषु प्रदेशेषु शिवध्यानपरायणान् ।
अपश्यद्योगिनो दिव्यान् आदरानन्दशालिनः ॥ १८
प्रशान्तान्याश्रमपदान्यवैक्षत समन्ततः ।
बलिनीवारविलसद्द्वारभूमींश्च पाण्डवः ॥ १९
निराहारान् वायुभुजः पर्णादानातपाशनान् ।
शान्तानालोकयामास मुनीन्नियमितेन्द्रियान् ॥ २०
मुदं वितेनिरे तस्य नेत्रयोः कमलाकराः ।
फुल्लसौगन्धिकामोदसंवासितदिगन्तराः ।
मृगयासम्भृतवियः चरतोऽधिज्यकार्मुकान् ॥ २१

**अर्जुनस्य सुवर्णमुखरीतीरस्थभरद्वाजाश्रमगमनम्**

ददर्शान्वेषितमृगान् किरातान् वनितायुतान् ।
ततो दक्षिणदिग्भागे चरन्नद्रेर्मनोहरे ॥ २२
पुण्यमाश्रममद्राक्षीत् भरद्वाजस्य कौरवः ।
कदलीनारिकेलाम्रकोलचम्पकचन्दनैः ॥ २३
तक्कोलाशोकहिन्तालतालकेतकिदाडिमैः ।
जम्बूकदम्बकतकखदिरार्जुनपाटलैः ॥ २४
नागपुन्नागसरलदेवदारुकरञ्जकैः ।
लवङ्गलुङ्गलवलीप्रियङ्गुतिलकैरपि ॥ २५
विभीतश्रीफलाश्वत्थमधूकप्लक्षकेसरैः ।
पूगजम्बीरनारङ्गनिम्बाऽमलककौशिकैः ॥ २६
अन्यैश्च फलपुष्पाढ्यैः शोभितं धरणीरुहैः ।
वासन्तीकुन्दजात्यादिलताभिः परिवेष्टितम् ॥ २७
अपूर्वसौरभाकृष्टभ्रमरीभिः समन्ततः ।
चक्रवाकबकक्रौञ्चहंसकारण्डवाश्रयैः ॥ २८

सौगन्धिकोत्पलाम्भोजकैरवौघविराजितैः ।
सरोभिरमृतस्यन्दिमधुरस्फारवारिभिः ॥ २९
समापादितलक्ष्मीकं कौतुकैकनिकेतनम् ।
सिंहदन्तावलव्याघ्रतरक्षुरुरुरङ्कुभिः ॥ ३०
मृगैरन्यैः समाकीर्णं अन्योऽन्यहितकारिभिः ।
जितचैत्ररथोद्यानं अधरीकृतनन्दनम् ॥ ३१
अतिवाङ्मनसोदारं परमानन्दकारणम् ।
शिवागमानां दिव्यानां अर्थजातमनुत्तमम् ॥ ३२
प्रकाशयन्ति शाखानां यत्र मञ्जुगिरः शुकाः ।
यस्मिन् हुताशनोदारधूमश्यामलितं नभः ॥ ३३
अकालजलदभ्रान्तिं आतनोति शिखण्डिनाम् ।
यस्मिन् विहारश्रान्तानां सिंहानां स्वेच्छया गताः ॥ ३४
निर्वापयन्ति गात्राणि करिणः करशीकरैः ।
तदाश्रमपदं पश्यन् विस्मयाक्रान्तमानसः ॥ ३५
प्रभावं पाण्डुतनयः प्रशशंस तपस्विनाम् ।
निवार्य तत्र तत्रैव सकलाननुजीविनः ॥ ३६

## अर्जुनकृतभरद्वाजसेवाक्रमः

मित्रैर्विप्रवरैः सार्धं प्रविवेश तमाश्रमम् ।
अग्रे ददर्श कौन्तेयः स्फुरत्पावकतेजसम् ॥ ३७
भरद्वाजं मुनिवरैः अनेकैः परिवारितम् ।
भस्मानुलिप्तसर्वाङ्गं मृगचर्मोत्तरीयकम् ॥ ३८
नववारिदसंवीतं कैलासमिव भास्वरम् ।
जटाभिर्लम्बमानाभिः भास्वन्तं स्वर्णकान्तिभिः ॥ ३९

स्थिरविद्युल्लताकीर्णं इव शारदनीरदम् ।
श्रुतिस्मृतिपुराणार्थैः एकीभूय समागतैः ॥ ४०
अङ्गीकृतमिवाकारं दिव्यज्ञानशुभास्पदम् ।
धृतिक्षान्तिदयातुष्टिशान्तिभिर्नित्यसेवितम् ॥ ४१
प्रियाभिरिव रक्ताभिः अखण्डब्रह्मवर्चसम् ।
उपगम्य शनैः पार्थः तत्पादाम्बुजयोः पुरः ।
चक्रे प्रणामं साष्टाङ्गं समालिङ्गितभूतलम् ॥ ४२

## अर्जुनं प्रति भरद्वाजकृतातिथ्यप्रकारः

तमागतं पृथापुत्रं उत्थाप्य मुनिपुङ्गवः ।
आशीर्भिरेधयाञ्चक्रे प्रहर्षोत्फुल्लमानसः ॥ ४३
सम्पूज्य च यथान्यायं तमर्घ्याद्यैः प्रियातिथिम् ।
विनिर्दिष्टासनासीनं तमपृच्छदनामयम् ॥ ४४
सम्मानमवाप्यास्मात् मुनेः पाण्डवमध्यमः ।
प्रियैर्वाक्यैर्मुनिपतेः अकरोन्मनसो मुदम् ॥ ४५
सस्माराथ भरद्वाजः स्वर्धेनुं कामदोहिनीम् ।
स वितेनेऽतिमहतीं भक्ष्यभोज्यादिकल्पनाम् ॥ ४६
भुक्त्वा पार्थः सानुचरः तमुपास्य तपोनिधिम् ।
दिनशेषं कथालापकौतुकेनात्यवाहयत् ॥ ४७
ततः सायन्तनीं सन्ध्यां उपास्य हुतपावकः ।
विप्रैरमात्यैः सहितो ययौ तस्य कुटीगृहान् ॥ ४८
तत्राऽसीनो मुनिपतेः आशीर्भिरभिनन्दितः ।
आनन्द्यमानो मुमुदे तन्नदीशीतलानिलैः ॥ ४९

'सम्प्रापिता केन भुवः प्रभूता कस्मान्महीध्रादधिकप्रभावा ।
इति प्रभावं परिपृच्छ्य नद्याः श्रोतुं मुनीन्द्रान्मतिरस्य जज्ञे ॥ ५०

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये
(तृतीयभागे) सुवर्णमुखरीमाहात्म्ये भरद्वाजाश्रमवर्णनं
नाम द्वितीयोऽध्यायः ।

---

अथ तृतीयोऽध्यायः

## सुवर्णमुखरीप्रभावशुश्रूषया भरद्वाजं प्रत्यर्जुनप्रश्नः

श्रीसूतः—

कृतसायन्तनविधिं हुताशनसमद्युतिम् ।
सुखासीनं मुनिपतिं प्रणम्य भरतर्षभः ॥ १
तदीयशीतलामोदसुधापूरानुमोदितः ।
गम्भीरं प्रश्रयोपेतं इदं वचनमब्रवीत् ॥ २

अर्जुनः—

'मुनिपुङ्गव! लोकेऽस्मिन् धन्य एकोऽहमेव हि ।
पुत्राविशेषं भवता यदेवं सम्यगादृतः ॥ ३
भवदादरसञ्जातकौतुकं मम मानसम् ।
भवद्वाक्यामृतं दिव्यं पातुं त्वरयतीव माम् ॥ ४
कस्माच्छैलादियं जाता केनाऽनीता महानदी ।
किं पुण्यं स्नानदानाद्यैः कृतैस्तत्रोपलभ्यते ॥ ५
अस्याः प्रभावं प्रभवं प्रहस्य मम सन्मुने! ।
वक्तुमर्हसि कार्यो हि भक्तानुग्रह एव ते' ॥ ६

अर्जुनस्य वचः श्रुत्वा भरद्वाजो द्विजोत्तमः ।
तदाननं समालोक्य वाक्यं वाक्यविदब्रवीत् ॥ ७

भरद्वाजः— 'त्वमर्जुन! महाबाहो! कौरवान्वयपावनः ।
विशेषान्मम मान्योऽसि धर्मपुत्रानुजो यतः ॥ ८

अनेके भूमिपा दृष्टाः न ते त्वमिव फाल्गुन! ।
लीलार्जवदयौदार्यधैर्यगाम्भीर्यशालिनः ॥ ९

कुलं विद्या धनञ्चैव बलिनां मदकारणम् ।
भवादृशानां भव्यानां तानि प्रश्रयकारणम् ॥ १०

प्राज्येषु राज्यभोगेषु विद्यमानेषु कौरव! ।
ऋते भवन्तं को वाऽन्यो नोपैति विकृतेर्वशम् ॥ ११

परवानस्मि कौन्तेय गुणैर्लोकोत्तरैस्तव ।
किमस्त्यकथनीयं ते कौतुकोपेतमानसः ॥ १२

शृणु राजन्! कथां दिव्यां मया मुनिमुखाच्छ्रुताम् ।
यां श्रुत्वा पातकातङ्कात् मुच्यन्ते सर्वजन्तवः ॥ १३

भरद्वाजकथित शङ्करविवाहप्रक्रिया

पूर्वं दाक्षायणी देवी जनकेनावमानिता ।
त्यक्त्वा तनुं तां नीहारगिरेरभवदात्मजा ॥ १४

सप्तर्षिभिरुपागम्य प्रार्थितो धरणीधरः ।
मृत्युञ्जयाय स्वां पुत्रीं विवाहे दातुमुद्यतः ॥ १५

वृषभाङ्को जगत्स्वामी विवोढुं सर्वमङ्गलाम् ।
प्राप्तो हिमवदावासं ओषधीप्रस्थनामकम् ॥ १६

तच्छासनात् समाजग्मुः स्थावराणि चराणि च ।
भूतानि भूतनाथस्य कल्याणमभिनन्दितुम् ॥ १७

तद्भूरिभारसम्भग्ना भूमिरुत्तरसंश्रया ।
निम्नतामाययौ तावत् यावत्पातालमास्थिता ॥ १८
निर्भारलाघवादस्मात् भृशं दक्षिणगामिनी ।
ऊर्ध्वं गता च तत् दृष्ट्वा सर्वेषामभवद्भयम् ॥ १९
ज्ञात्वा तां विकृतिं भूमेः दृष्ट्वाऽगस्त्यं महेश्वरः ।
इत एहि 'महाप्राज्ञ' त्युक्त्वा वचनमब्रवीत् ॥ २०
'आगतेषु समस्तेषु भूतेष्वत्र वसुन्धरा ।
तद्भारेण समाक्रान्ता विकृतिं समुपागता ॥ २१
तद्भुवः साम्यकरणे त्वमर्हसि महामते ! ।
ऋते त्वामत्र हि त्वत्तः परेणैतत् कथं भवेत् ? ॥ २२
मत्तेजःसम्भवो हि त्वं लोकसंरक्षणोद्यतः ।
तस्मान्मद्वचनाद्वत्स ! भुवमेतां समीकुरु ॥ २३
मत्पाणिग्रहणाल्लोककौतुकायत्तबुद्धिषु ।
आगतेषु समस्तेषु स्थातव्यं भवताऽपि च ॥ २४
त्वं न तिष्ठसि चेदत्र न कश्चिद्विकृतिं भुवः ।
अपनेतुं हि शक्नोति तद्गन्तव्यं त्वयाऽनघ ! ॥ २५
इमां गिरिसुतापाणिग्रहकल्याणभासुराम् ।
मूर्तिं प्रदर्शयिष्यामि यत्र तिष्ठसि तत्र ते' ।
इत्युक्त्वा तं परिष्वज्य विससर्ज महेश्वरः ॥ २६

## भूसाम्यकरणायागस्त्यस्य हिमाद्रेर्दक्षिणदिग्गमनम्

तथेति तं प्रणम्यासौ ययौ याम्यां दिशं मुनिः ॥ २७
विन्ध्याद्रिं समतिक्रम्य दक्षिणामागते दिशम् ।
अगस्त्ये मुनिशार्दूले मही साम्यमुपाययौ ॥ २८

भुवोऽपनीय विकृतिं स्थितं कलशजं मुनिम् ।
तुष्टुवुर्हर्षतरलाः सुरगन्धर्वकिन्नराः ॥ २९
स ददर्श ततो गत्वा कञ्चिच्छैलं समुन्नतम् ।
विततैर्धरिणीं पादैः धृत्वा संस्थितमग्रतः ॥ ३०
महौषधीनां रत्नानां अशेषाणां स्वयम्भुवा ।
अखण्डतेजोदीप्तानां विनिर्मितमिवाकरम् ॥ ३१
समुन्नतैर्यः शिखरैः निपतद्व्योम भूतले ।
उदारधारासम्पन्नैः दधातीव निरन्तरम् ॥ ३२
शनैरारुह्य तं शैलं अगस्त्यो मुनिपुङ्गवः ।
निवासाय मतिं चक्रे रम्ये तच्छिखरस्थले ॥ ३३
तस्यामृतोपमेयस्य पद्मोत्पलकुलश्रियः ।
नानाद्रुमपरीतस्य कासारस्योत्तरे तटे ॥ ३४
मनोहरे महीभागे विधायाश्रममुत्तमम् ।
आराध्य पितृदेवर्षीन् विधिवद्वास्तुदेवताम् ॥ ३५
उवास सुचिरं तत्र मुनिसङ्घसमन्वितः ।
देवतासिद्धगन्धर्वाप्सरोजुष्टमहीधरे ॥ ३६
तपःसमावेशितचित्तवृत्तौ तपोवने तिष्ठति कुम्भजाते ।
प्रशस्तसौभाग्यसमन्वितोऽद्रिः अगस्त्यशैलाह्वयमाससाद ॥ ३७

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये सुवर्णमुखरीमाहात्म्ये अर्जुनभरद्वाजसंवादे शङ्करविवाहागस्त्यदक्षिणदिग्गमनवर्णनं नाम तृतीयोऽध्यायः ।

---

अथ चतुर्थोऽध्यायः



## नद्युत्पादनाय अगस्त्यं प्रति अशरीर्युक्तिः

भरद्वाज.—

स कदाचिन्मुनिवरः कृतपौर्वाह्णिकक्रियः ।
विवेश देवतागारं समाराधयितुं शिवम् ॥ १
अदृश्यरूपा वाग्देवी तत्राश्रावि महात्मना ।
तेनाद्भुतोपपन्नेन व्यक्तवर्णसमुज्ज्वला ॥ २
आकाशवाण्युवाचैनं अगस्त्यं जपतां वरम् ।

आकाशवाणी—

'नदीहीनो ह्ययं देशः प्रसिद्धोऽपि न शोभते ॥ ३
ज्ञानविज्ञानविमुखः साकार इव भूसुरः ।
दीक्षेव दक्षिणाहीना ज्योत्स्नाहीनेव शर्वरी ॥ ४
न विभाति नदीहीना पृथ्वीयं भूसुरोत्तम ! ।
प्रवर्तय नदीं काञ्चित् लोकानां हितकाम्यया ॥ ५
अगाधदुरितोद्भूतभीतिमोचनशालिनीम् ।
हितमेतत्सुरौघानां एतन्मुनिवरार्थितम् ॥ ६
भद्रमेतन्मनुष्याणां एतदाचर सुव्रत ! ।
देवानामृषिवर्याणां भूजनानां हितावहाम् ।
पापपङ्कप्रशमनीं प्रवर्तय महानदीम्' ॥ ७

भरद्वाजः— तदाकर्ण्य वचो विप्रः क्षणं चिन्तापारायणः ।
समाप्य देवतापूजां बहिर्वेद्यामुपाविशत् ॥ ८
आनाययामास तदा तदाश्रमगतान् मुनीन् ।
तेषामकथयच्चासौ दिव्यवाणीरितं वचः ॥ ९

तदद्भुतमुपश्रुत्य मुनयो हृष्टमानसाः ।
अभिवन्द्य मुनिश्रेष्ठं मैत्रावरुणिमब्रुवन् ॥ १०

## सुवर्णमुखर्युत्पादनाय अगस्त्यं प्रति महर्षिप्रार्थना

मुनयः— आश्चर्याणां महाश्चर्यं मङ्गलानाञ्च मङ्गलम् ।
तवैव शोभते दिव्यं त्वच्चरित्रं कृपानिधे! ॥ ११
तव हुङ्कारमात्रेण भ्रष्टो देवाधिराज्यतः ।
नहुषः काटतां प्राप ततश्चित्रं न विद्यते ॥ १२
समावृतधराचक्रः कल्लोलाताडिताम्बरः ।
किन्न्वतो विद्यते चित्रं यदब्धिश्चुलुकीकृतः ॥ १३
सूर्यमार्गनिरोधार्थं प्रवृत्तो विन्ध्यभूधरः ।
त्वया प्रशान्तिं गमितः किन्न्वतो विद्यते परम्? ॥ १४
तवाद्भुतानि कर्माणि कः स्तोतुं प्रभवेद्भुवि ।
मन्महाभाग्ययोगात्त्वं प्राप्तोऽसीति शरीरिणाम् ॥ १५
वयं कृतार्थाः सञ्जाताः त्रैलोक्ये यन्महामुने! ।
निवसामोऽत्र भवता सनाथा ह्याश्रमस्थले ॥ १६
वर्ण्यो हि यास्यतो दूरे विषयोऽयं द्विजोत्तम! ।
समस्तवस्तुपूर्णोऽपि नदीहीनो न राजते ॥ १७
किमलब्धनदीस्नानेनामुना हतजन्मना ।
अनदीके जनपदे वासादजननं वरम् ॥ १८
परिपाकस्तु भाग्यानां अस्माकं समुपस्थितः ।
यदादिष्टोऽसि विबुधैः प्रवर्तय महानदीम् ॥ १९
प्रवर्तितायां देशेऽस्मिन् महानद्यां तवानघ! ।
कदा नु खलु यास्यामः कृतस्नानाः कृतार्थताम्? ॥ २०

किं वितर्केण बहुना प्रयत्नः क्रियतां ध्रुवम् ।
समानेतुं जगद्वन्द्यां शरण्यां सरिदुत्तमाम् ॥ २१

भरद्वाजः— सतेषां वचनं हृद्यं मानयित्वा महाद्विजः ।
'समानेष्यामि सरितं' इति चक्रे विनिश्चयम् ॥ २२

## सुवर्णमुखर्याविर्भावाय अगस्त्यकृततपःप्रकारः

मुनीश्वरैरनुज्ञातः तानभ्यर्च्य सुरानपि ।
विशेषपूजां विधिवत् विधाय पुरविद्विषः ॥ २३

अङ्गीकृत्य व्रत गाढं बहुलक्लेशदुःसहम् ।
अनन्यसुलभं यत्नात् चकारसु महत्तपः ॥ २४

घोरेषु धर्मदिवसेष्वन्तरस्थो हविर्भुजाम् ।
चतुर्णां सवितृन्यस्तदृष्टिः नापययौ क्लमम् ॥ २५

वार्षिकेपु दिनेषूग्रवायुसम्पातदुःसहैः ।
आसारैस्ताड्यमानोऽपि नोद्वेगमगमद्धृदि ॥ २६

हेमन्ते समये तिष्ठन् कण्ठदघ्नेषु वारिषु ।
जपध्यानपरो भूत्वा न किञ्चिद्विकृतिं ययौ ॥ २७

ततः समीहितार्थस्य विलम्बमवलोक्य सः ।
पुनर्गाढतरां निष्ठां प्रपेदे लोकभीषणाम् ॥ २८

निगृह्य मानसीं वृत्तिं निराहारो जितेन्द्रियः ।
अविज्ञातबहिर्वृत्तिः तस्थौ पाषाणवत्तदा ॥ २९

एवं तपस्यतस्तस्य सर्वाङ्गेषु हुताशनः ।
अभ्रंलिहो ज्वलज्ज्योतिः निश्चकाम भयङ्करः ॥ ३०

ततोऽद्भुतशिखाजालैः आवृताः सर्वतो दिशः ।
समुदग्रभयोद्विग्नाः जनौघाः परिचुक्रुशुः ॥ ३१

तदा तथाविधं घोरं जगत्सङ्क्षोभमागतम् ।
देवा विज्ञापयामासु नमस्कृत्याब्जजन्मने ॥ ३२

## अगस्त्याश्रमं प्रति चतुर्मुखागमनम्

तानाश्वास्य ततो ब्रह्मा सिद्धगन्धर्वसेवितः ।
प्रादुरासीत्कुम्भभुवः पुरोभागे तपस्यतः ॥ ३३
तमागतं समालोक्य ब्रह्माणं परमं द्विजः ।
प्रणम्य विविधैःस्तोत्रैः तोषयामास तन्मनाः ॥ ३४
ततस्तं विनयानम्रं अगस्त्यं वीक्ष्य पद्मभूः ।
प्रसादसुमुखो भूत्वा पूतां गिरमुपाददे ॥ ३५
ब्रह्मा— 'परितुष्टोऽस्मि तपसा दुश्चरेण तवानघ! ।
वृणीष्व यद्यदिष्टं ते तत्तद्दास्यामि सुव्रत' ॥ ३६
अगस्त्य — 'तव प्रसादात्सकलं उपपन्नं मम प्रभो! ।
सम्प्रयच्छसि चेत्कामं याचे निःशङ्कया धिया ॥ ३७
नदीहीनमिमं देशं दृष्ट्वा खिद्यति मे मनः ।
अर्थावबोधरहितं श्रुतिपाठमिवाधिकम् ॥ ३८
उर्वीं पावयितुं दक्षां रक्षितुञ्च महानदीम् ।
प्रसादं कुरु देवेश! ममेष्टमिदमेव हि' ॥ ३९

## अगस्त्यप्रार्थनया गङ्गां प्रति चतुर्मुखचोदना

भरद्वाज — अगस्त्यस्य वचः श्रुत्वा 'भूयादेव' मिति ब्रुवन् ।
सस्मार मनसा ब्रह्मा सुरवर्त्माश्रयां नदीम् ॥ ४०
अथोपेत्य वियद्गङ्गा पुरस्तात् परमेष्ठिनः ।
अतिष्ठन्मुकुटन्यस्तप्रशस्ताञ्जलिभासुरा ॥ ४१

स्वशासनात्समायातां विनयानतमस्तकाम् ।
तां सर्वजगतां धात्रीं इदं वचनमब्रवीत् ॥ ४२

ब्रह्मा—
'गङ्गे! मयानुशास्याऽसि कार्ये लोकोपकारके ।
तवापि लोकरक्षायां ममेव नियता स्थितिः ॥ ४३
देशे नदीविहीनेऽत्र प्रवर्तयितुमापगाम् ।
हितार्थं सर्वलोकानां कुम्भजन्मा समीहते ॥ ४४
तस्मात्त्वमवतीर्योर्वीं स्वांशेनैकेन भूजनान् ।
पुनीहि गच्छ वसुधामेतद्दर्शितवर्त्मना ॥ ४५
भूलोके सम्प्रवृत्ते तु प्रवाहे सिद्धिकाङ्क्षिणः ।
सेविष्यन्ते सुरवरा मुनिवर्याश्च सन्ततम् ॥ ४६
नदीभूत्तमतां याहि त्राहि त्वत्संश्रयान् जनान् ।
कुरु प्रियमगस्त्यस्य गच्छ भद्रे! यथासुखम्' ॥ ४७

## अगस्त्यसमीपे स्वांशत्वेन गङ्गाकृतनद्युत्पत्त्यभ्युपगमः

भरद्वाज—
इत्युक्त्वान्तर्दधे ब्रह्मा तया नद्या च तेन च ।
प्रणामपूजनस्तोत्रैः विशेषैरभिनन्दितः ॥ ४८
अथ गङ्गा मुनिपतेः पुरस्तात्स्वांशसंभवाम् ।
दिव्यतेजोमयीं मूर्तिं दर्शयित्वा वचोऽब्रवीत् ॥ ४९

गङ्गा—
'मदीयांशोऽयमवनीं सम्प्राप्य मुनिवल्लभ! ।
पूरयिष्यति तेऽभीष्टं नदीरूपं समाश्रितः' ॥ ५०

भरद्वाज—
इत्युक्ता सिद्धवाहिन्यां गतायां तत्प्रयुक्तया ।
गन्तव्यं वर्त्मना केनेत्युक्तो मुनिरुवाच ताम् ॥ ५१

अगस्त्यः—

'गच्छन् पुरस्तात्कल्याणि! त्वदीयगमनोचितम् ।
अहं प्रदर्शयिष्यामि मार्गं त्वं मामनुव्रज' ॥ ५२

इत्युक्ता मुनिना तेन सम्प्रहृष्टा 'तवानघ ।
यदिष्टं तत्करिष्येऽह'मिति प्रोवाच सा शुभा ॥ ५३

अथ मुनिरवतार्य तां नगेन्द्रात् धृततटिर्नीतनुमभ्रसङ्गिशृङ्गात् ।
मुदिततरमना ययौ पुरस्तात् तदभिमतां पदवीं प्रदर्शयन् सः ॥ ५४

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीसुवर्णमुखरीमाहात्म्ये
सुवर्णमुखर्याविर्भाववर्णनं नाम
चतुर्थोऽध्यायः ।

---

अथ पञ्चमोऽध्यायः ।

## सुवर्णमुखरीं प्रति शक्रादिस्तुतिः

भरद्वाजः—

तदा दिव्यविमानस्थाः शक्रमुख्या दिवौकसः ।
अगस्त्यमनुयान्तीं तां अनुजग्मुर्महापगाम् ॥ १

नवावतारां तां दिव्यां सर्वे च मुनिपुङ्गवाः ।
कृताञ्जलिपुटाः स्तोत्रैः अनुयाताः सिषेविरे ॥ २

सिद्धचारणगन्धर्वाः सम्भूताश्च सहस्रशः ।
तां नदीं तं मुनीन्द्रञ्च प्रशशंसुः शुभैः स्तवैः ॥ ३

'सुधोपमानममलं दिष्ट्या लब्धमिदं जलम् ।'
इत्यौत्सुक्यरसायत्ताः ननन्दुर्धरणीजनाः ॥ ४

तदा निदेशाद्देवस्य पद्मयोनेः समीरणः ।
शृण्वतां सर्वदेवानामिदं वचनमब्रवीत् ॥ ५

## वायुकथितसुवर्णमुखरीनामनिष्पत्तिः

वायु:—

'सुवर्णमिव लोकानां भागधेयादियं नदी ।
नीता भुवमगस्त्येन मुखरीकृतदिङ्मुखा ॥ ६
तस्माद्यास्यति विख्यातिं सर्वलोकाभिनन्दिताम् ।
सुवर्णमुखरीनाम्ना धाम्ना कैवल्यसम्पदः ॥ ७
एषा सुवर्णमुखरी सरित्सु सकलास्वपि ।
विशिष्टा सेवनीया च ब्रह्मणो वचनं त्विदम्' ॥ ८

## सुवर्णमुखर्याः समुद्रसमागमवर्णनम्

भरद्वाजः—

श्रुत्वेत्थं पवनेनोक्तं वचनं कुम्भसम्भवः ।
तुतोष विस्मयाक्रान्तः स्वान्तःपुलकिताङ्गकः ॥ ९
एवमेषा दिव्यनदी स्नानपानादिकल्पनैः ।
सौख्यावहा मनुष्याणां प्रतिष्ठामगमद्भुवि ॥ १०
आज्ञया पद्मगर्भस्य तटिन्याकाशवाहिनी ।
सुवर्णमुखरीनाम्ना पुनात्यात्मैकसंश्रयान् ॥ ११
बहून् गिरीन्द्रान् वनमण्डलञ्च देशाननेकान् सरिदुत्तमेयम् ।
क्रमादतिक्रम्य निषेव्यमाणा महानदीभिर्गिरिसम्भवाभिः ॥ १२
रोगाहतानामधिकातुराणां अनामयैकप्रतिपादकानि ।
अन्तर्बहिःसम्भृतभूरितापनिवारणानि प्रियकारणानि ॥ १३
विहारलोलद्विरदप्रकाण्डशुण्डामहाघातरयोत्थितेन ।
पुष्पोपहारं पृषतोत्करेण हर्षात् ददातीव दिवाकरस्य ॥ १४
सौगन्धिकाम्भोरुहकैरवाणां सौरभ्यसंवासितदिङ्मुखानाम् ।
द्विरेफभाग्यैकनिकेतनानां आधारभूतान्यतिनिर्मलानि ॥ १५

लीलावगाहोत्सुकनाकनारीसीमन्तसिन्दूररजोरुणानि ।
तत्केशपाशच्युतपारिजातप्रसूनगन्धैरधिवासितानि ॥ १६

सा बिभ्रती सम्भृतमङ्गलानि स्वादून्यपङ्कान्यतिनिर्मलानि ।
सुधोपमानानि सुरेन्द्रसूनोः पयांसि पापप्रतिघातुकानि ॥ १७

अगस्त्यशैलात् समवाप्तजन्मा नीता भुवं कुम्भसमुद्भवेन ।
प्रशस्ततीर्थौघविराजमाना समाययौ दक्षिणवारिराशिम् ॥ १८

शीकराक्षतविन्यासैः रत्नदीपार्पणैरपि ।
प्रत्युद्ययुस्तामम्भोधेः वीचयोऽभिमुखागताः ॥ १९

तरङ्गहस्तैरालिङ्ग्य सम्भाव्यैनां समागताम् ।
चकार सरितां नाथः प्रियमाघोषभाषणैः ॥ २०

प्राप्तायामनुकूलायां तदा तस्यामपां निधेः ।
प्रहृष्टेन तरङ्गेण जीवनं ववृधेतराम् ॥ २१

इत्थं संसृज्य सरितं अगस्त्यस्तामुदन्वता ।
स्तुत्वा ययौ समामन्त्र्य कृतकृत्यो यदृच्छया ॥ २२

अर्जुनः– त्वयैष कथितो ब्रह्मन् महानद्याः समुद्भवः ।
अस्याः प्रभावं भगवन्! इदानीं श्रोतुमुत्सहे ॥ २३

## भरद्वाजवर्णितसुवर्णमुखरीमाहात्म्यम्

भरद्वाजः––

अहो निबर्हणं सर्वश्रेयसामेककारणम् ।
शृणु माहात्म्यमस्यास्ते कथयिष्यामि पाण्डव! ॥ २४

पाश्चात्यं जन्म सम्प्राप्य ज्ञानिनां कर्मणः क्षये ।
सुवर्णमुखरीस्नानं सिद्ध्येद्ब्रह्मत्वकारणम् ॥ २५

एतां सुवर्णमुखरीं योजनानां शतैरपि ।
स्मृत्वा मनुष्यः पापेभ्यो मुच्यते नात्र संशयः ॥ २६

निःक्षिप्तमस्थि जन्तूनां सुवर्णमुखरीजले ।
सोपानतां समायाति ब्रह्मलोकाधिरोहणे ॥ २७

स्मरन्तः स्वर्णमुखरीं यत्र कुत्रापि मानवाः ।
तोयान्तरेषु स्नात्वाऽपि लभन्ते फलमुत्तमम् ॥ २८

तावदेवाभिभूयन्ते नराः पातककोटिभिः ।
सुवर्णमुखरीस्नानं यावत्तल्लभ्यते शुभम् ॥ २९

दिव्यान्तरिक्षभौमानि तीर्थानि निजसिद्धये ।
स्मरन्त्यहरहः प्रातः सुवर्णमुखरीं नदीम् ॥ ३०

अगस्त्याचलसम्भूता दक्षिणोदधिगामिनी ।
पापानि स्वर्णमुखरी स्मरणादेव नाशयेत् ॥ ३१

सुवर्णमुखरीस्नानलोलुपेनान्तरात्मना ।
वाञ्छन्ति मर्त्यतामेव देवाः शक्रपुरोगमाः ॥ ३२

सुवर्णमुखरीतोयपुष्टसस्यान्नभोजिनः ।
न लिप्यन्ते महापापैः दुर्भोजनशतोद्भवैः ॥ ३३

अपि निष्कमितं पीतं सुवर्णमुखरीजलम् ।
नाशयेदद्रितुल्यानि ह्याशु पापानि देहिनाम् ॥ ३४

प्राप्याऽपि मानुषं जन्म सुवर्णमुखरीजले ।
ये वा स्नानं न कुर्वन्ति तेषां जन्म निरर्थकम् ॥ ३५

सुवर्णमुखरीस्नानं यदेकं विधिना कृतम् ।
जाह्नवीस्नानकोटीनां समं भवति पर्वसु ॥ ३६

गोविन्द इव देवेषु नक्षत्रेष्विव चन्द्रमाः ।
नरेष्विव महीपालो भूरुहेष्विव कल्पकः ॥ ३७

महाभूतेष्विव वियत् मायेवाखिलशक्तिषु ।
गायत्रीव च मन्त्रेषु वज्रं देवायुधेष्विव ॥ ३८

तत्त्वेष्विवात्मनस्तत्त्वं रुद्राध्यायो यजुष्ष्विव ।
अनन्त इव नागेषु हिमाचल इवाद्रिषु ॥ ३९

पोत्रिक्षेत्रमिव क्षेत्रेष्विन्द्रियेष्विव मानसम् ।
नदीष्वपि च सर्वासु सुवर्णमुखरी वरा ॥ ४०

नित्यं स्मरेन्नमस्कुर्यात् कीर्तयेन्मनसाऽर्चयेत् ।
शुद्धिक्षेमशिवापेक्षी सुवर्णमुखरीं शुभाम् ॥ ४१

'अगस्त्याचलसम्भूतां दक्षिणोदधिगामिनीम् ।
समस्तपापहन्त्रीं त्वां सुवर्णमुखरीं श्रये ॥ ४२

महापातकविप्लुष्टं गात्रं मम तवोदकैः ।
क्षालयामि जगद्धात्रि! श्रेयसा योजयस्व माम् ॥' ४३

इति सूक्तद्वयं सम्यगुच्चार्य नियतो नरः ।
सुवर्णमुखरीतोये स्नात्वा शुद्धः प्रमोदते ॥ ४४

ब्रह्मणा निर्मिता पूर्वं अगस्त्येन समाहृता ।
स्वयं मन्दाकिनी मूर्ता सुवर्णमुखरी वरा ॥ ४५

एवंप्रभावा दिव्येयं कीर्तनीया शुभार्थिभिः ।
मनसा भक्तियुक्तेन स्नातव्या शुभकाङ्क्षिभिः ॥ ४६

सोमसूर्योपरागेषु स्नानदानादिकं कृतम् ।
स्यादमेयफलं पार्थ ! सुवर्णमुखरीतटे ॥ ४७

सङ्क्रान्तावयने पुण्ये व्यतीपातेऽथ वासरे ।
सुवर्णमुखरीस्नानं कुलकोटिं समुद्धरेत् ॥ ४८

जन्मर्क्षे जन्मदिवसे सुवर्णमुखरीजले ।
स्नात्वा विधिवदाप्नोति क्षेमारोग्यसुखश्रियः ॥ ४९

दुःस्वप्नविघ्नजं भूतग्रहदुःस्थानजं तथा ।
सुवर्णमुखरीतोये स्नात्वा तरति किल्बिषम् ॥ ५०

सुवर्णमुखरीतीरे गोपादप्रमितां भुवम् ।
दत्त्वा सर्वमहीदानात् यत्फलं तदवाप्नुयात् ॥ ५१
धेनुं सवस्त्रालङ्कारां सुवर्णमुखरीतटे ।
दत्त्वा विप्राय विधिवत् याति ब्रह्म सनातनम् ॥ ५२
पुण्यकालेषु दानानि विधेयान्यखिलान्यपि ।
इहामुत्र फलप्राप्त्यै सुवर्णमुखरीतटे ॥ ५३
जपो होमस्तपो दानं पितृकर्म सुरार्चनम् ।
कृतं भवेच्छतगुणं सुवर्णमुखरीतटे ॥ ५४
अन्यत्ते कथयिष्यामि विधेयं व्रतमुत्तमम् ।
सुवर्णमुखरीतीरे प्रतिवर्षं सुखार्थिभिः ॥ ५५
मेघकाले रविकरैः तिरोधानमुपागतः ।
यदुदेति मुनिः श्रीमान् मित्रावरुणनन्दनः ॥ ५६
तस्मिन् दिने ये नियताः स्नानमस्यां प्रकुर्वते ।
तैः कल्पञ्च सुरावासे स्थीयते कुरुनन्दन! ॥ ५७
तदाऽगस्त्यस्य यद्रूपं सुवर्णेन विनिर्मितम् ।
विधिना ददते पार्थ! ते यान्ति ब्रह्म शाश्वतम् ॥ ५८
अर्जुनः— 'विधिना केन कर्तव्यं व्रतमेतन्महामुने! ।
तन्ममाचक्ष्व सकलं जिज्ञासोस्तु महात्मनः' ॥ ५९

## अगस्त्यप्रतिमादानविधिः

भरद्वाजः— 'अगस्त्यस्योदयदिनं ज्ञात्वा नियतमानसः ।
स्वशक्त्या कारयेद्रूपं तस्य हेम्ना महामुनेः ॥ ६०
सुवर्णभास्वरच्छायं जटाबन्धमनोहरम् ।
दधानं करपद्माभ्यां अक्षमालां कमण्डलुम् ॥ ६१

वसानं मृदुलं वल्कं मृगचर्मोत्तरीयकम् ।
सौम्यं भस्माङ्करुचिरं रुद्राक्षकृतभूषणम् ॥ ६२
एवं विधाय तद्रूपं स्नात्वा नियतमानसः ।
आचार्यं गन्धपुष्पाद्यैः अलङ्कृत्य यथाविधि ॥ ६३
शालेयतण्डुलानां तां आढकस्योपरि स्थिताम् ।
वस्त्रद्वयसमायुक्तां प्रतिमां प्रतिपूजयेत् ॥ ६४
'विन्ध्यसंस्तम्भनो वार्धिचुलुकीकृतिपेशलः ।
ब्रह्मादिसर्वदेवानां तेजसा सुप्रकाशितः ॥ ६५
अगस्त्यः कुम्भसम्भूतो देवासुरनमस्कृतः ।
प्रीतिमाप्नोतु महतीं दानेनानेन मे प्रभुः' ॥ ६६
इमं मन्त्रं समुच्चार्य धारापूर्वं सदक्षिणम् ।
दत्त्वा विमुक्तः पापेभ्यो याति ब्रह्म सनातनम् ॥ ६७
जन्मान्तरकृतैर्नूनं इहजन्मकृतैरपि ।
महापापोपपापौघैः मुच्यते नात्र संशयः ॥ ६८
ब्रह्माद्याः सकला देवाः सनकाद्या महर्षयः ।
चराचराणि भूतानि प्रीतिं यान्ति न संशयः ॥ ६९
कृत्वा व्रतमिदं पुण्यं अगस्त्यस्य च सन्मुनेः ।
प्रीत्यर्थं भोजयेद्विप्रान् यथाशक्ति सदक्षिणम् ॥ ७०
तस्मिन् कर्मणि चाशक्तो यथाशक्ति महीसुरान् ।
स्वर्णधान्यादिदानेन तोषयेद्भक्तिसंयुतः ॥ ७१
तिथिं न वितथीकुर्यात् तां यत्नेन समाचरेत् ।
यत्किञ्चिदपि चावश्यं कर्म निर्मलपूरुषः ॥ ७२
महामुनेरगस्त्यस्य परिपक्वं तपःफलम् ।
नदी सुवर्णमुखरी कीर्तनीया सुरासुरैः ॥ ७३

एवं ते कथितः सम्यक् महानद्याः समुद्भवः ।
प्रभावश्च तदाचक्ष्व यद्भूयः श्रोतुमिच्छसि ' ॥ ७४

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये - सुवर्णमुखरी प्रभावप्रशंसा नाम पञ्चमोऽध्यायः ।

---

अथ षष्ठोऽध्यायः ।



## अगस्त्यतीर्थागस्त्येश्वरयोः प्रभावः

अर्जुन — ' श्रोत्राञ्जलिभ्यां पीत्वाऽपि भवद्वाक्यामृतं मुहुः ।
मनो नोपैति मे तृप्तिं भूयः श्रवणकाङ्क्षया ॥ १
क्रियासमभिहारो मे त्वद्वाक्याकर्णनैषिणः ।
मनःखेदाय माभूत्ते करुणाभरितात्मनः ॥ २
इदानीं श्रोतुमिच्छामि नद्यामस्यां महामुने ! ।
कुत्र कुत्र समर्थानि तीर्थान्यघनिबर्हणे ॥ ३
काः काः पुण्यतरङ्गिण्यः सङ्गता अनया मुने ! ।
कुत्र स्नानेन कृताघा नोपयान्ति यमाद्भयम् ॥ ४
हराच्युतादिदेवानां पुण्यान्यायतनानि च ।
यानि यानि च पुण्यानि तिष्ठन्त्यस्यास्तटद्वये ॥ ५
तेषु क्षेत्रेषु मनुजैः यत्फलं समवाप्यते ।
विहितैर्विधिवत्स्नानदानादिशुभकर्मभिः ॥ ६
सोपाख्यानं मदः सर्वं वेदितुं वेदवित्तम ! ।
सञ्जाता महती प्रीतिः विस्तार्याचक्ष्व मे क्रमात् ' ॥ ७

भरद्वाज — ' यत्पृष्टं भवता पार्थ ! क्रमाद्विस्तार्य कथ्यते ।
आरभ्यागस्त्यतीर्थेन्द्रात् अस्यास्तीर्थौघवैभवम् ॥ ८

अखण्डज्ञानरूपेण सर्वलोकहितैषिणा ।
सुरासुराणां सम्भाव्येनागस्त्येन महात्मना ॥ ९
वसुधामवतीर्णायां प्रथमं तद्धराधरात् ।
स्नात्वा यत्र महानद्यां सम्प्राप्नोति कृतार्थताम् ॥ १०
अगस्त्यतीर्थमित्युक्तं पावनं तज्जगत्त्रये ।
तत्र स्नानेन शुद्धिः स्यात् महापातकिनामपि ॥ ११
अनेकजन्माचरितमहापातकसंहतिम् ।
निरस्य दिवि मोदन्ते तत्र स्नानरता जनाः ॥ १२
ये तत्र तीर्थे यतिनः कृतस्नाना यतेन्द्रियाः ।
गोभूतिलहिरण्यादिमहादानानि कुर्वते ॥ १३
ते प्राप्नुवन्ति सम्पूर्णं गङ्गाद्वारे समाहितैः ।
विहितानां शतगुणं दानानां फलमर्जुन! ॥ १४
अत्रास्ति भगवानीशः ख्यातोऽगस्त्येशसंज्ञया ।
स्थापितोऽगस्त्यमुनिना लोकानन्दविधायिना ॥ १५
स्नात्वा तस्यां महानद्यां तल्लिङ्गं पूजयन्ति ये ।
दशानामश्वमेधानां फलं सम्प्राप्नुवन्ति ते ॥ १६

## सुवर्णमुखरीस्नानकालनिर्णयः

धनूराशिं परित्यज्य यदा मकरमंशुमान् ।
विशेत्तदयनं पुण्यं उत्तरं परिकीर्तितम् ॥ १७
तस्मिन् दिने ये नियता नद्यां स्नात्वा समाहिताः ।
पश्यन्ति पार्वतीनाथं अगस्त्येशं सुरार्चितम् ॥ १८
अग्निष्टोमसहस्रस्य वाजपेयशतस्य च ।
फलं सम्प्राप्य मोदन्ते दिवि देवगणार्चिताः ॥ १९

मृगसङ्क्रमवेलायां पुरुषैर्मङ्गलार्थिभिः ।
अवश्यमेव कर्तव्यं अगस्त्येशस्य दर्शनम् ॥ २०

## देवर्षिपितृतीर्थमाहात्म्यम्

ऐशान्यां तस्य तीर्थस्य देशे क्रोशमितेऽर्जुन ! ।
अस्ति तीर्थत्रयं ख्यातं देवर्षिपितृनामभिः ॥ २१
देवर्षिपितरस्तत्र मुनिना तेन पूजिताः ।
प्रददुर्हृष्टमनसः सर्वान् सम्भिवाञ्छितान् ॥ २२
सदा देवर्षिपितृभिः इदं तीर्थत्रयं क्रमात् ।
अस्मन्नामभिरीड्यं स्यात् इत्युक्तं तस्य सन्निधौ ॥ २३
तस्मिंस्तीर्थत्रये ये तु स्नात्वा विहिततर्पणाः ।
ऋणत्रयविनिर्मुक्ताः ते यान्ति दिवमक्षयाम् ॥ २४

## वेणासुवर्णमुखरीसङ्गमवर्णनम्

ततः प्रागुत्तरक्षोण्याः योजनद्वयसीमनि ।
प्राप्ता सुवर्णमुखरीं वेणा नाम महानदी ॥ २५
समुद्ररयावातनिपातिततटद्रुमा ।
कुल्यानिर्गतवाःपूरसमाप्लावितकानना ॥ २६
उत्तुङ्गपुलिनोत्सङ्गखेलत्कोककुलाकुला ।
अम्बुजामोदलोलालिमालालीलारवान्विता ॥ २७
अतिक्रम्य समुत्तुङ्गान् अनेकान् धरणीधरान् ।
प्रभूततोयरुचिरा सुवर्णमुखरीं गता ॥ २८
नदीद्वयव्यतिकरे कृतस्नाना यथाविधि ।
दशानामश्वमेधानां अखण्डं प्राप्नुयुः फलम् ॥ २९

सङ्गता वेणया पुण्या सुवर्णमुखरी नदी ।
गिरिदुर्गममार्गेण ययावुत्तरवाहिनी ॥ ३०
मध्यगेन महीध्राणां मार्गेण विषमेण सा ।
गत्वा विरेजे तटिनी योजनानां चतुष्टयम् ॥ ३१
पूर्वतस्तस्य देशस्य विषये सार्धयोजने ।
उदक्कूले महानद्याः प्राग्वाहिन्या मनोहरे ॥ ३२
अगस्त्येश्वरनामाऽऽस्ते ख्यातं लिङ्गं पुरद्विषः ।
स्मरणं देवमर्त्यानां समस्ताघनिवारणम् ॥ ३३
तत्र स्नात्वा महानद्यां ये नरा नियतेन्द्रियाः ।
पश्यन्ति पार्वतीनाथं अगस्त्येन प्रतिष्ठितम् ॥ ३४
अनेकैः पूर्वजननैः आर्जितं पापसञ्चयम् ।
ते निरस्य सुरावासे मोदन्ते कालमक्षयम् ॥ ३५
ततः सोदङ्मुखी भूत्वा सुवर्णमुखरी ययौ ।
योजनार्धमिदं देशं तीर्थसङ्घसमन्विता ॥ ३६

## सुवर्णमुखर्या व्याघ्रपदाह्वयनदीसङ्गमः

तस्मिन् देशे तु हिन्तालतालसालमनोरमे ।
गता सुवर्णमुखरीं नदी व्याघ्रपदाऽह्वया ॥ ३७
दुर्वारभूरिदुरितविनिवारणपेशला ।
नीरन्ध्रतीरवानीरवनमण्डलमण्डिता ॥ ३८
सिद्धगन्धर्वललनालीलागाहनशालिनी ।
तपस्विकन्यानिःक्षिप्तबलिपुष्पविराजिता ॥ ३९
हंसकारण्डवक्रौञ्चकुलकोलाहलाकुला ।
प्राक्प्रवाहा समागत्य शैलान्तरगताध्वना ॥ ४०

सङ्गमे सरितोस्तत्र कृतस्नाना नरोत्तमाः ।
समग्रमश्वमेधानां दशानां प्राप्नुयुः फलम् ॥ ४१

## शङ्खतीर्थवर्णनम्

तत्र व्याघ्रपदाऽख्यायाः तटे लोकमलापहे ।
अनघं सर्वपापघ्नं शङ्खतीर्थं विराजते ॥ ४२
ब्रह्मर्षिनियतावासं सुरगन्धर्वसेवितम् ।
दर्शनस्नानपानाद्यैः अमितानन्ददायकम् ॥ ४३
तत्राऽस्ते भगवानीशः शङ्खेशो नाम फाल्गुन ! ।
शङ्खनाम्ना मुनीन्द्रेण लिङ्गरूपं प्रतिष्ठितम् ॥ ४४
ये तत्र तीर्थे सुस्नाताः पश्यन्ति वृषवाहनम् ।
दशाश्वमेधजं पुण्यं लब्ध्वा यान्ति सुरालयम् ॥ ४५
युक्ता तया व्याघ्रपदाभिधानया गत्वा ततो योजनसम्मितां भुवम् ।
ययौ मुनीन्द्रैर्वृषभाचलान्तिकं संसेव्यमाना शुभनिर्मलोदका ॥ ४६

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये अगस्त्यतीर्थादि-
वर्णनं नाम षष्ठोऽध्यायः ।



अथ सप्तमोऽध्यायः



## सुवर्णमुखर्या कल्यानदीसङ्गमः

भरद्वाजः—

'सुवर्णमुखरीं तत्र सङ्गता मङ्गलप्रदा ।
कल्या नाम नदी पुण्या कालिन्दी जाह्नवीमिव ॥ १
वृषभाचलसम्भूता तीर्थराजविराजिता ।
नदीनामुत्तमा कल्या कलुषौघविनाशिनी ॥ २

नानातरुलताव्रातविभूषिततटद्वया ।
मुनिसङ्घसुखावासा पुण्याश्रमसमुत्कटा ॥ ३
द्विजदत्तार्घ्यविलसत्कुशाक्षतलसत्तटा ।
अप्सरःकुचकस्तूरीपङ्कक्षालनपङ्किला ॥ ४
दन्तावलकटच्योतन्मदाम्बुसुरभीकृता ।
विप्रभूपालविततमखयूपशतावृता ॥ ५
अनाविलजलापूरतोषिताशेषमानवा ।
एकैवालं पराकर्तुं महानद्योस्तु पातकम् ॥ ६
तयोः सङ्गतयोः स्तोतुं महिमानं क ईशते ।
यत्र ब्रह्मशिला नाम सरिन्मध्ये च वर्तते ॥ ७
अगस्त्यतपसा पश्चात् गयासान्निध्यमेति च ।
नदीद्वयजले तत्र स्नाताः पुण्ये कुरूद्वह! ॥ ८
मखानां पौण्डरीकाणां शतस्य फलमाप्नुयुः ।
ब्रह्महत्यादिपापानि समायान्ति परिक्षयम् ॥ ९
तत्राभिषेकपूतानां नदीद्वितयसङ्गमे ।
सङ्गता भवनाशिन्या कृष्णवेणीव पावनी ।
राजते स्वर्णमुखरी कल्यया सङ्गता तदा ॥ १०

## सुवर्णमुखरीतीरस्थितश्रीवेङ्कटाचलवर्णनम्

अथोदीच्यां महानद्याः योजनार्द्धे विराजते ।
योजनोत्सेधसहितो विख्यातो वेङ्कटाचलः ॥ ११
सर्वेषामेव तीर्थानां आश्रयोऽयं नगोत्तमः ।
अञ्जनानन्तवृषभनीलकेसरिपोत्रिणः ॥ १२

एतान्युपवनान्यद्रेः स्युर्नारायणवेङ्कटौ ।
वराहवपुषा पूर्वं स्वीकृतत्वान्मधुद्विषा ॥ १३
वराहक्षेत्रमित्यार्यैः कीर्तितोऽयं महीधरः ।
सुवर्णमुखरीतीरे विख्याते वेङ्कटाचले ॥ १४
निवसत्यच्युतो नित्यं अब्धीन्द्रतनयाऽन्वितः ।
तस्मिन् गिरौ श्रिया सार्धं वसन्तं वेङ्कटाधिपम् ॥ १५
सेवन्ते सिद्धगन्धर्वमुनिमानवदानवाः ।
तस्मिन् विन्यस्तचित्तानां भक्तानां पुरुषोत्तमे ॥ १६
वाञ्छितान्याशु सिद्ध्यन्ति नश्यन्ति विपदोऽर्जुन! ।
ये स्मरन्ति जगन्नाथं वेङ्कटाद्रिनिवासिनम् ॥ १७
निरस्तदोषास्ते यान्ति शाश्वतं पदमव्ययम् ।
अर्जुनः— 'वेङ्कटाद्रौ महापुण्ये सुरासुरनमस्कृतः ॥ १८
कथं प्रादुरभूद्देवो भगवान् कमलापतिः ।
कस्य वा कृतिनस्तत्र प्रसन्नो निजमद्भुतम् ॥ १९
रूपं प्रकाशयाञ्चक्रे भुक्तिमुक्तिफलप्रदम् ।
विष्णोर्देवादिदेवस्य महिमानं महामुने! ।
श्रोतुमिच्छामि तत्त्वेन तन्मे कथय विस्तरात्' ॥ २०

## श्रीवेङ्कटाचलवासिभगवद्वैभववर्णनम्

भरद्वाजः—

'शृणु वेङ्कटनाथस्य महिमानं समाहितः ।
विस्तरेण समाख्यातुं ब्रह्मणाऽपि न शक्यते ॥ २१
धन्योऽसि देवदेवस्य माहात्म्यं मधुविद्विषः ।
यद्भक्तियुक्ताऽभूत्तात! श्रोतुं मतिररिन्दम! ॥ २२

कृतपुण्योऽस्म्यहं पार्थ ! सर्वभूतपतेर्हरेः ।
पवित्राणि चरित्राणि स्तोष्यन्ते यन्मयाऽधुना ॥ २३
पुरा भागीरथीतीरे जनकाय महात्मने ।
क्रतुदीक्षाप्रसक्ताय विशुद्धज्ञानशालिने ॥ २४
वामदेवेन कथितां कथां पापप्रणाशिनीम् ।
कथयिष्यामि ते पार्थ ! विष्णुकीर्तनपावनीम् ॥ २५
सर्वेषामेव भूतानां आद्यो नारायणः प्रभुः ।
जगन्मयो जगत्कर्ता चित्स्वरूपो निरञ्जनः ॥ २६
सहस्रशीर्षा भगवान् सहस्राक्षः सहस्रपात् ।
यस्य भासा जगदिदं विभाति सचराचरम् ॥ २७
तस्मात्परतरं तेजः तस्मात्परतरं तपः ।
तस्मात्परतरं ज्ञानं योगस्तस्मात्परो न च ॥ २८
विद्या तस्मादपि परा नास्ति पार्थ ! नरर्षभ ! ।
सर्वेष्वपि च भूतेषु सदा सन्निहितः प्रभुः ॥ २९
सर्वाण्यपि च भूतानि तस्मिन्नेवासते सुखम् ।
स एव यज्ञो यज्वा च साधनं स्रुक्स्रुवादिकम् ॥ ३०
फलं फलप्रदाता च तत्सम्प्राप्या गतिस्तथा ।
वह्नौ प्रणीते पशुना प्रोक्षितेन प्रजुह्वति ॥ ३१
ये तं प्रयान्ति ते यान्ति गतिं तत्प्रतिपादिताम् ।
कर्मबन्धं पशुं कृत्वा ज्ञानाग्नौ सम्प्रवर्तिते ॥ ३२
ये जुह्वते तमुद्दिश्य ते तत्सायुज्यभागिनः ।
हरिः सदाशिवो ब्रह्मा महेन्द्रः परमः स्वराट् ॥ ३३
सर्वेश्वरस्य तस्यैते पर्यायाः परिकीर्तिताः ।
समाहितोऽनुसन्धत्ते य इदं परमात्मनः ॥ ३४

नारायणस्य माहात्म्यं स न याति पुनर्भवम् ।
चिदानन्दमयः साक्षी निर्गुणो निरुपाधिकः ॥ ३५
नित्योऽपि भजते तां तां अवस्थां स यदृच्छया ।
पवित्राणां पवित्रं यो ह्यगतीनां परा गतिः ॥ ३६
दैवतं देवतानाञ्च श्रेयसां श्रेय उत्तमम् ।
बोध्यानां बोध्य एकोऽसौ ध्येयानां ध्येय उत्तमः ॥ ३७
विनयानां समधिको विनयो नयसंयुतः ।
तेजसां जनकं तेजः प्रकृष्टं तपसां तपः ॥ ३८
आधारः सर्वभूतानां अनाद्यन्तो जनार्दनः ।
तस्येदं भावविज्ञाने मूढा ब्रह्मादयोऽपि च ॥ ३९
अजो गृह्णाति जननं सर्वात्मा हन्ति विद्विषः ।
स्वतन्त्रोऽपि स्वभक्तानां परतन्त्रः प्रवर्तते ॥ ४०
स साक्षी कर्मणां देवः सर्वज्ञो गरुडध्वजः ।
तस्य स्वरूपं मुनयो मृगयन्ते समाहिताः ॥ ४१
सङ्कर्षणो वासुदेवः प्रद्युम्नश्च तथा पुनः ।
अनिरुद्ध इति ख्यातं तन्मूर्तीनां चतुष्टयम् ॥ ४२
कीर्तितः प्रणवः पश्चाद्धृदयं तस्य भास्वरम् ।
भगवान् वासुदेवश्च मन्त्रोऽयं तत्प्रकाशकः ॥ ४३
मन्त्रराजमिमं नित्यं प्रजपेद्यः समाहितः ।

## भगवत्कृतभूतसृष्ट्यादिवर्णनम्

स विष्णोः करुणायोगात् सिद्धीनां भाजनं भवेत् ॥ ४४
आपन्निवारकः सम्पत्प्रापको भुक्तिमुक्तिदः ।
यथा ससर्ज भूतानि कल्पादावेष माधवः ॥ ४५

तत्सर्वं कथयिष्यामि समाहितमनाः शृणु ।
तस्य चिन्तयतः सर्गं तेजोरूपं परं हरेः ॥ ४६

विरिञ्च इति विख्यातं राजसं गुणमाश्रितम् ।
तस्य देवस्य वदनात् शक्रो देवः सपावकः ॥ ४७

जज्ञे यश्च त्रिलोकेशः पाककर्मणि यः प्रभुः ।
मनसश्चाभवच्चन्द्रः करुणानित्यशीतलात् ॥ ४८

अपां सर्वौषधीनाञ्च मित्राणां रक्षकः सदा ।
नेत्राभ्यामुदभूत्सूर्यः तस्य विश्वप्रकाशकः ॥ ४९

शीतोष्णवर्षकृत्कालकारणं तेजसां निधिः ।
प्राणेभ्योऽस्य जगत्प्राणः समीरः समजायत ॥ ५०

धर्ता ग्रहर्क्षस्वर्गङ्गाविमानानां महाबलः ।
नाभिदेशात्समुत्पन्नं अन्तरिक्षं महात्मनः ॥ ५१

तस्यासीच्छिरसो व्योम भूतसम्भवकारणम् ।
पादाम्बुजाभ्यामुदभूत् भूमिर्भूतगणाश्रया ॥ ५२

विनिःसृता दिशः सर्वाः श्रोत्राभ्यां परमात्मनः ।
भूर्भुवाद्यास्तथा लोकाः स्मरणात्तस्य जज्ञिरे ॥ ५३

रसातलादिलोकाश्च यक्षरक्षोगणाश्रयाः ।
मुखबाहूरुपादेभ्यो जनयामास स क्रमात् ॥ ५४

ब्राह्मणान् क्षत्रियान् वैश्यान् शूद्रादींश्च कुरूद्वह ! ।
छन्दांसि यज्ञा स्तुरगा गावो मेषाविकादयः ॥ ५५

अतर्क्यप्रभवां तस्मात् उत्पत्तिं प्रतिपेदिरे ।
सङ्कल्पाद्देवदेवस्य तस्य स्थावरजङ्गमम् ॥ ५६

भूतजातमभूत्कालो भूतो भावी भवंस्तथा ।
पिबत्यम्बु समुद्राणां वडवानलरूपधृक् ॥ ५७

कल्पान्तकाले तत्सर्वं विसृजत्यात्मनि स्थितम् ।
सञ्चारयति भूतानां वृत्तिं सूर्येन्दुरूपधृक् ॥ ५८
तमोनिरसनाच्चापि कालधर्मप्रवर्तनात् ।
जगन्ति कल्पविरमे विन्यस्य स्वोदरान्तरे ॥ ५९
लीलाबालाकृतिः शेते वटपत्रे महाम्बुधौ ।
अथ चोदग्रभोगीन्द्रभोगतल्पे सुखोचिते ॥ ६०
योगनिद्रामवाप्नोति सद्वितीयोऽब्जवासया ।
नाभिकासारसम्भूतात् जनयामास पङ्कजात् ॥ ६१
सर्वेषां जगतां नाथो विधातारं चतुर्मुखम् ।
लीला ह्येषा मुकुन्दस्य स्वेच्छायोगप्रवर्तिनः ॥ ६२
विज्ञायते न केनाऽपि याथार्थ्येन स ईश्वरः ।
यदा धर्मस्य हानिः स्यात् अधर्मो वर्धते यदा ॥ ६३
यदा वा महतीं पीडां भजन्ते देवतागणाः ।
यदाऽवलेपदुर्वाराः यान्ति वृद्धिं सुरद्रुहः ॥ ६४
भूमेर्भूमिजनानाञ्च यदोदेति महद्भयम् ।
यदा वा निजभक्तानां साधूनामनिवारिता ॥ ६५
दुरन्तातङ्कजननी विपत् समुपजायते ।
तदा तदनुरूपाणि रूपाण्यास्थाय कौतुकात् ।
अधर्ममवधूयाऽऽशु कुरुते जगतो हितम् ॥ ६६

सृजति विधिसमाख्यो राजसेनात्मजोऽसौ
वहति हरिसमाख्यः सत्त्वनिष्ठः प्रपञ्चम् ।
हरति हरसमाख्यस्तामसीमेत्य वृत्तिं
मधुमथनमहिम्नामस्ति वेत्ता न कोऽपि ॥ ६७

यज्ञाङ्गैः कृतसकलाङ्गसन्धिबन्धं
वाराहं वपुरधिगम्य लोकनाथः ।
शैलेऽस्मिन्नभजदसौ यथा निवासं
तद्वक्ष्ये शृणु विबुधाधिनाथसूनो ! '॥ ६८

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये
सृष्ट्यादिवर्णनं नाम सप्तमोऽध्यायः ।

---

अथ अष्टमोऽध्यायः ।

## वराहकृतधरण्युद्धरणक्रमः

भरद्वाजः—

'पुरा निशात्यये धातुः प्रबुद्धो मधुसूदनः ।
पुनः प्रवृत्तिं भूतानां अन्विष्येष धिया भृशम् ॥ १
विना वसुमतीमन्ये भूतौघधरणक्षमाः ।
न भवन्तीति हृदये तर्कस्तस्याजनि ध्रुवः ॥ २
अपश्यत्प्रणिधानेन महीं पातालगोचराम् ।
अतिमात्रभयोद्विग्नां परीतां महताऽम्बुना ॥ ३
प्रतिपेदे तदा रूपं भूसमुद्धरणोचितम् ।
उपाकर्मोष्ठमनलजिह्वं प्रणवघोषणम् ॥ ४
चतुराम्नायचरणं प्रायश्चित्तखुराञ्चितम् ।
प्राग्वंशकायं विलसद्दर्भरोमावलीयुतम् ॥ ५
प्रवर्ग्यावर्तसम्पन्नं दक्षिणाग्न्युदरान्वितम् ।
स्रुक्तुण्डमखिलैः सर्वैः संविभक्ताङ्गसन्धिकम् ॥ ६
दिव्यसूक्तसटाजालं परब्रह्मशिरस्तथा ।
हव्यकव्यरयोपेतं विशुद्धपशुजानुकम् ॥ ७

उक्तात्युक्तादिकच्छन्दोमार्ग न्तबलान्वितम् ।
सर्वयज्ञमयं दिव्यं वाराहं रूपमास्थितः ॥ ८
अन्वेष्टुं धरणीमब्धेः विवेश सलिलान्तरम् ।
दंष्ट्राबालशशाङ्कोत्थलसत्कान्तिचयैर्हठात् ॥ ९
कल्पान्तसमयस्फीतं तमिस्रमपसारयन् ।
अभिभूताम्बुभृद्धोषैः मुहुर्ब्रह्माण्डकन्दरान् ॥ १०
निनादमुखरान् कुर्वन् गाढैर्घुरुघुरुस्वनैः ।
खुरप्रखुरविन्यासैः जर्जरीकृतविग्रहम् ॥ ११
इतस्ततो विलुठयन् उरगाणामधीश्वरम् ।
तीव्रैर्निःश्वासपवनैः आपातालं सरित्पतेः ॥ १२
प्रापयन्नतलस्पर्शं अन्तरं दर्शनीयताम् ।
अतिदीर्घेण पोत्रेण मग्नोन्मग्नेन वारिधेः ॥ १३
सङ्क्षोभितानि पाथांसि कुर्वन्नन्तर्ययौ तदा ।
सप्तपातालमूलाधःस्थितां तोये भयाकुलाम् ॥ १४
वेपमानां समालोक्य धरणीं हृष्टमानसः ।
तामारोप्य स्वदंष्ट्राग्रं उन्ममज्ज सरित्पतेः ॥ १५
संस्तूयमानो मुनिभिः जनलोकनिवासिभिः ।
तस्मिन्नुद्वहति प्रेम्णा देवे वसुमतीं क्षणम् ॥ १६
प्रतिसीरा बभूवाम्भो वारिधेर्मङ्गलोचिता ।
तदुत्तारणवेलायां वराहवपुषोऽर्जुन ! ॥ १७
गम्भीरघोषैरम्भोधिः प्राप मङ्गलतूर्यताम् ।
उद्धृत्तवीचिविक्षिप्तशीकरासारसङ्गतः ॥ १८
भेजे मुक्ताफलचयो मङ्गलाक्षतविभ्रमम् ।
उदूढा तेन देवेन सा बभौ सलिलाऽप्लुता ॥ १९

गाढरागसमुत्पन्नस्वेदक्लिन्नतनूरिव ।
इत्थमुद्धृत्य भगवान् महीं पातालमूलतः ॥ २०
सुदृढं स्थापयामास मध्येऽम्बुनिधिपाथसाम् ।
तेनोद्धृतायां मेदिन्यां पूर्णं तद्भूनभोन्तरे ॥ २१
जलं तत्कृतमर्यादाऽव्यवच्छन्नमभूत्तदा ।
संस्थाप्य पृथिवीमित्थं तदुर्व्याधारसिद्धये ॥ २२
दिग्गजानहिराजञ्च कमठञ्च न्यवेशयत् ।
तेषामपि च सर्वेषां आधारत्वेन सादरम् ॥ २३
अव्यक्तरूपां स्वां शक्तिं युयोज च दयानिधिः ।
ततो धरां समुद्धृत्य स्थितं किटितनुं हरिम् ॥ २४
तुष्टुवुः सनकाद्यास्तं जनोलोकनिवासिनः ।
तदा वराहवपुषं आराध्य पुरुषोत्तमम् ।
तदाज्ञया जगद्ब्रह्मा यथापूर्वमकल्पयत्' ॥ २५

अर्जुनः—

'कल्पान्तसलिले मग्ना कथं तिष्ठति भूरियम् ।
सप्तपातालल्लोकाधः किमाधारा महामुने! ॥ २६
कल्पकालः कियानेषः स्यात्तद्वृत्तिश्च कीदृशी? ।
एतद्विस्तार्य सकलं मम ब्रह्मन्! मुने! वद!' ॥ २७

## कल्पवृत्तान्तवर्णनपूर्वकं श्वेतवराहावतारवर्णनम्

भरद्वाजः—

'विनाडिकानां षष्ट्या स्यात् नाडिकैका दिनं भवेत् ।
तत्षष्ट्या दिवसास्त्रिंशत् मासः पक्षद्वयात्मकः ॥ २८
मासौ द्वावृतुरित्युक्तं तैः षड्भिर्वत्सरो भवेत् ।
अयनद्वितयाकारः शीतवर्षोष्णसंश्रयः ॥ २९

देवासुराणामन्योन्यं अहोरात्रं विपर्ययात् ।
उत्तरं दक्षिणं भानोः अयने ते यथाक्रमम् ॥ ३०

मानुषाब्दैः खखव्योमखाक्षिपावकसागरैः ।
महायुगं भवेत् पार्थ ! कृताद्याकारसंयुतम् ॥ ३१

सप्तत्या सैकया कालो युगानामन्तरं मनोः ।
अस्मिन् श्वेतवराहाख्ये कल्पे जातान् मनून् शृणु ॥ ३२

स्वायंभुवः स्यात्प्रथमः ततः स्वारोचिषो मनुः ।
उत्तमस्तामसाख्यश्च रैवतश्चाक्षुषाह्वयः ॥ ३३

एते गताः प्राङ्मनवः षट् सेन्द्रसुरतापसाः ।
वैवस्वतो वर्ततेऽद्य सप्तमो मनुरर्जुन ! ॥ ३४

आदित्यवसुरुद्राद्याः तत्काले देवतागणाः ।
इष्ट्वाऽश्वमेधशतकं तेजस्वी प्राप शक्रताम् ॥ ३५

विश्वामित्रोऽहमत्रिश्च जमदग्निश्च काश्यपः ।
वसिष्ठो गौतमश्चैव ते वै सप्तर्षयोऽर्जुन ! ॥ ३६

इक्ष्वाकुप्रमुखाः शूरा मनुपुत्रा महाबलाः ।
अवनीं पालयामासुः नित्यं धर्मपरायणाः ॥ ३७

सूर्यदक्षब्रह्मधर्मरुद्राणां पञ्च सूनवः ।
सावर्णिरौच्यभौमाद्याः भविष्यन्मनुसप्तकम् ॥ ३८

चतुर्दश विधातुस्ते भवन्ति मनवोऽहनि ।
तत्कल्पसंज्ञं तस्यान्ते निशा स्यात्तत्समा शृणु ॥ ३९

दिनावसानसमये ब्रह्मणः पाण्डुनन्दन ! ।
जायतेऽवग्रहो घोरः पृथिव्यां शतवार्षिकः ॥ ४०

तस्मिन् अवग्रहे पृथ्व्यां नीरसायां धनञ्जय ! ।
चतुर्विधानि भूतानि समायान्ति परिक्षयम् ॥ ४१

तदा नप्तसिराकारैः उपेतो घर्मदीधितिः ।
मयूखैरग्निसदृशैः वमद्भिः पावकच्छटाः ॥ ४२
विनष्टग्रामनगरशैलवृक्षादिकानना ।
कूर्मपृष्ठोपमोर्वी स्यात् तप्तायःपिण्डसन्निभा ॥ ४३
ततो विधातुर्गात्रेभ्यः समुत्पन्ना महाघनाः ।
आच्छादयन्तो गगनं गर्जितध्वानबन्धुराः ॥ ४४
सितपीतारुणश्यामाः चित्रवर्णाश्च भीषणाः ।
शैलेभसौधवृक्षादिनानारूपसमन्विताः ॥ ४५
ते शताब्दमितं कालं महावृष्टिं वितन्वते ।
तेनाम्भसा शमं याति सूर्योद्भूतो महानलः ॥ ४६
भूयश्च नव वर्षाणि वर्षन्त्युग्रं महाघनाः ।
तदम्भसा समुद्वेला विकृतिं यान्ति वार्द्धयः ॥ ४७
कल्पान्ताम्बुदनिर्मुक्तं लोकान् व्याप्नोति तज्जलम् ।
भूर्भुवःस्वर्महर्लोकान् आवृणोति तमो महत् ॥ ४८
तदा निमग्ना सलिले मही पातालमूलगा ।
अनष्टा कथमप्यास्ते ब्रह्मशक्त्यवलम्बिता ॥ ४९
अथ निःश्वाससम्भूतो मारुतो ब्रह्मणोऽर्जुन ! ।
उत्सारयति तान् सर्वान् कल्पान्तोत्थान् महाघनान् ॥ ५०
एवं प्रवृद्धः पवनः शतसंवत्सरात्मकम् ।
कालं निरन्तरं वाति दुर्निवारस्रयोत्थितः ॥ ५१
तमुग्रमनिलं हित्वा हरेर्नाभिसरोरुहे ।
योगनिद्रामवाप्नोति तस्मिन् पाथसि पद्मभूः ॥ ५२
योगनिद्रानुषक्तस्य याति तस्य जगद्विभोः ।
तावती शर्वरी पार्थ ! दिनं यावत्प्रमाणकम् ॥ ५३

निशायां समतीतायां उत्थितो वेगवान् पुनः ।
सृजत्यखिलजन्तून्वै पूर्ववच्छासनाद्धरेः ॥ ५४
कल्पे कल्पे समुचितैः रूपैः पाति जगद्धरिः ।
अस्मिन् कल्पे श्वेतवर्णां प्राप्तवान् यज्ञपोत्रिताम् ॥ ५५
वराहवपुषा देवो विहरन्नवनीतले ।
स्वपूर्वनियतावासं प्रपेदे वेङ्कटाचलम् ॥ ५६
स्वामिपुष्करिणीतीरे चरंश्चिरमधोक्षजः ।
भक्त्या परमया युक्तं अपश्यज्जलजासनम् ॥ ५७
सम्पूज्य प्रार्थयामास ब्रह्मा तं भूतभावनम् ।
'पुरातनीं निजां स्वामिन्! भज दिव्यां तनू'मिति ॥ ५८
गृहीत्वाऽनुनयं तस्य त्यक्त्वा तां सूकराकृतिम् ।
अनन्यभजनीयां स्वां प्राप विश्वात्मिकां तनुम् ॥ ५९
तथा स्थितं गिरौ तत्र कृत्वाऽप्युत्साहमूर्जितम् ।
द्रष्टुं न शेकुः सर्वेऽपि कालेन बहुनाऽपि च' ॥ ६०
अर्जुन.— 'दर्शनस्मरणादीनां हरिरित्थमगोचरः ।
कथं प्रत्यक्षतां प्राप मानुषाणां महामुने! ॥ ६१
भाग्यभूतोऽथ जगतां यः को वाऽराध्य तं विभुम् ।
एवं प्रकाशयामास कथामेतां निवेदय ॥ ६२
हरिकथाश्रवणं दुरितापहं कथयतां सकलागमविद्वान् ।
सुकृतिनां ननु सम्प्रतिधुर्यता मुनिवरेण्य! ममाद्य समागता' ॥ ६३

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये
वराहावतारकीर्तनं नाम अष्टमोऽध्यायः ।

अथ नवमोऽध्यायः

## शङ्खाभिधाननृपवृत्तान्तः

भरद्वाजः—

"शृणु पार्थ ! प्रवक्ष्यामि कथामाश्चर्यकारिणीम् ।
यथाऽसौ भगवानस्मिन् शैले प्राप्तः प्रकाशताम् ॥ १
श्रुताभिधानो नृपतिः अस्ति हैहयवंशजः ।
यः प्रजाः स्वा इव चिरं शशास धरणीप्रजाः ॥ २
तस्य पुत्रो गुणनिधिः शङ्खो नाम महीपतिः ।
पालयामास वसुधां सर्वशास्त्रविशारदः ॥ ३
तस्य विष्णौ जगन्नाथे पुण्डरीकायतेक्षणे ।
बभूव निश्चला भक्तिः परित्यक्तान्यसंश्रया ॥ ४
देवदेवं जगन्नाथं अनन्तं पुरुषोत्तमम् ।
अगाढनिश्चयो नित्यं ध्यायन्नद्भुतवैभवम् ॥ ५
चक्रे व्रतानि दानानि पुण्यानि विविधानि च ।
वेदवेद्यस्य नियतं प्रीत्यर्थं मधुविद्विषः ॥ ६
तमुद्दिश्यैव विदधे वाजिमेधादिकान् क्रतून् ।
यथोक्तदक्षिणायोगात् प्रीणिताशेषभूसुरः ॥ ७
इष्टापूर्तात्मकं चक्रे कर्मजातमतन्द्रितः ।
विन्यस्तहृदयो नित्यं केशवे भक्तवत्सले ॥ ८
स्मरत्यजस्रं गोविन्दं जगत्यच्युतमव्ययम् ।
पूजयत्यब्जनयनं सङ्कीर्तयति शार्ङ्गिणम् ॥ ९
शृणोति सततं राजा संसारार्णवतारिणीः ।
पौराणिकैः समाख्याताः पवित्रा वैष्णवीः कथाः ॥ १०

ब्राह्मणानर्चतिस्मायं हरिप्रीत्यर्थमेव च ।
इत्थं सर्वात्मना युक्तोऽप्यश्रान्तः पृथिवीपतिः ॥ ११

नापश्यत् शाश्वतैश्वर्यं स्वतन्त्रं पुरुषोत्तमम् ।
अप्राप्य दर्शनं विष्णोः सर्वयज्ञमयात्मनः ।
स शोकाक्रान्तहृदयः परां चिन्तामुपागमत् ॥ १२

शङ्खः—

परःसहस्रैर्जननैः अतीतैर्दुष्कृतं बहु ।
कृतं मया यदप्राप्तं हृषीकेशस्य दर्शनम् ॥ १३

उपार्जितानां तपसां अनेकैः पूर्वजन्मभिः ।
अखण्डं हि फलं विष्णोः दर्शनं मधुघातिनः ॥ १४

कथं नु यायाद्भगवान् विषयं मम नेत्रयोः ।
कदा वा लभ्यते श्रेयः तद्वाक्याकर्णनात्मकम् ॥ १५

हा धिङ्मां विहितागस्कं क्रियासाफल्यवर्जितम् ।
नारायणकृपादूरं संसारक्लेशगोचरम् ॥ १६

भरद्वाज—

इति चिन्ताकुले तस्मिन् राज्ञि जीवितनिःस्पृहे ।
अदृश्यमूर्तिः सर्वेषां शृण्वतामाह केशवः ॥ १७

श्रीभगवान्—

'मा शोकस्य वशं यायाः शृणु वक्ष्यामि ते हितम् ।
मदेकशरणं साधुं त्वां त्यक्ष्यामि कथं नृप ? ॥ १८

अयं वेङ्कटनामाद्रिः त्रिषु लोकेषु विश्रुतः ।
वैकुण्ठादपि मे राजन् ! आवासोऽतिप्रियावहः ॥ १९

तं गत्वा भूधरवरं तव भक्त्या तपस्यतः ।
गते सहस्रे वर्षाणां यास्याम्यालोकनीयताम् ॥ २०

भवानितोद्यतोऽगस्त्यो मम दर्शनमञ्जसा ।
'क्व वा सन्दृश्यते विष्णुः ?' एवमाह चतुर्मुखम् ॥ २१
'वृषभाद्रौ हरिर्द्रष्टुं लभ्यते नियतात्मभिः ।
गच्छ तत्रेति' मुनये कथयामास पद्मभूः ॥ २२
अम्भोजसम्भवेनेत्थं आदिष्टः कुम्भसम्भवः ।
अञ्जनाद्रौ महावासे तपस्तप्तुं समेष्यति ॥ २३
तस्मिन् महीधरे पुण्ये कृतवासो भवानपि ।
आराध्य मां तपोनिष्ठो मम दर्शनमाप्स्यसि' ॥ २४

## भगवदुक्त्या शङ्खनृपस्य श्रीवेङ्कटाचलागमनम्

भरद्वाजः— इत्याज्ञप्तो भगवता शङ्खो दानववैरिणा ।
जगाम प्रीतिमतुलां 'धन्योऽस्मी' ति स्वचेतसि ॥ २५
विन्यस्य तनयं वज्रं प्रजापालनकर्मणि ।
गोविन्ददर्शनापेक्षी नारायणगिरिं ययौ ॥ २६
अस्य शृङ्गे समुत्तुङ्गे स्वामिपुष्करिणीं शुभाम् ।
दिव्यैः पयोभिरापूर्णां अपश्यदमृतोपमैः ॥ २७
अनेकसिद्धगन्धर्वदेवर्षिगणसेविताम् ।
भवतापप्रशमनीं सर्वतीर्थसमाश्रयाम् ॥ २८
जलकाकबकक्रौञ्चहंसकारण्डवाकुलाम् ।
कुमुदोत्पलराजीवसौगन्धिकमनोहराम् ॥ २९
तां दृष्ट्वा पद्मिनीं दिव्यां तत्तीरे विहितोटजः ।
तोषितः स्नानपानाद्यैः निर्विकल्पमनोगतिः ॥ ३०
सर्वकर्माणि विन्यस्य जगदीशे जनार्दने ।
जपध्यानपरो नित्यं तपस्तेपे सुदारुणम् ॥ ३१

## भगवद्दर्शनार्थमगस्त्यस्य वेङ्कटाचलागमनम्

तस्मिन्नेव मुनिः काले शासनात्परमेष्ठिनः ।
अगस्त्योऽप्याससादाद्यं शैलं मुनिशतावृतः ॥ ३२
प्रतीचीं दिशमारभ्य कृतयत्नः प्रदक्षिणे ।
पश्यंस्तीर्थानि पुण्यानि बभ्राम सुचिरं गिरौ ॥ ३३
तत्र तत्र ददर्शासौ हरिदर्शनलालसान् ।
विरिञ्चिगुहशक्रेशविष्वक्सेनादिकान् क्रमात् ॥ ३४
सनकाद्यांश्च योगीन्द्रान् नारदप्रमुखान् ऋषीन् ।
सिद्धगन्धर्ववैनतेययक्षराक्षसपन्नगान् ॥ ३५
तैस्तैः सम्मान्यमानोऽसौ प्रश्रयप्रियभाषणैः ।
पश्यन्नाश्चर्यभूतानि सर्वाणि विचचार ह ॥ ३६
स्नात्वा तीर्थेषु सर्वेषु स्कन्दधारादिकेषु च ।
तत्र तत्रार्चयामास गोविन्दं जगतां पतिम् ॥ ३७
एवं भ्रान्त्वा गतेऽब्दानां सहस्रैर्मुनिसत्तमः ।
अपश्यन् पुण्डरीकाक्षं चिन्ताशोकपरोऽभवत् ॥ ३८
तस्मिन् काले समाजग्मुः धिषणोशनसौ पुनः ।
राजोपरिचरो नाम वसुश्च तमृषीश्वरम् ॥ ३९

## अगस्त्यं प्रति गुरुप्रभृत्युक्तिः

"अस्माकं सफलं जातं जीवितं मुनिसत्तम ! ।
दृष्टो भवान् यदस्माभिः नारायण इवापरः ॥ ४०
ब्रह्मणा लोकनाथेन यदादिष्टा वयं मुने ।
अच्युतालोकनपराः तदिदं कथ्यते तव ॥ ४१

'अस्ति दक्षिणदिग्भागे वेङ्कटो नाम भूधरः ।
श्वेतद्वीपादपि हरेः आवासोऽयमभीप्सितः ॥ ४२
तस्मिन् गिरावगस्त्यस्य शङ्खस्य च महीपतेः ।
दर्शयिष्यति गोविन्दो निजरूपं जगद्गुरुः ॥ ४३
तदानीं सर्वदेवानां ऋषीणां यक्षरक्षसाम् ।
अस्माकं देवदेवस्य दर्शनं सम्भविष्यति ॥ ४४
अचिरेणैव तद्भावि ततः सन्त्यक्तकल्मषाः ।
अन्वेष्टुं गच्छतागस्त्यं तस्मिन् नारायणाचले' ॥ ४५
इत्याज्ञप्ता वयं धात्रा समागम्यात्र भाग्यतः ।
दृष्टवन्तो महाभागं भवन्तं भूरितेजसम् ॥ ४६
भवता सहिता गत्वा स्वामिपुष्करिणीतटे ।
तमप्यालोकयिष्यामः शङ्खं भागवतोत्तमम्" ॥ ४७

## अगस्त्यादिकृतश्रीवेङ्कटाचलस्थरम्यवस्तुदर्शनम्

भरद्वाजः— गीष्पतिप्रमुखैरित्थं आदिष्टः कुम्भसम्भवः ।
शोकजालं परित्यज्य ययौ तैः सहितो द्रुतम् ॥ ४८
स ददर्श महावृक्षान् फलपुष्पभरानतान् ।
प्ररूढशाखानिकरच्छायाच्छादितदिक्तटान् ॥ ४९
सिंहदन्तावलव्याघ्रवराहमहिषादिकान् ।
मृगानालोकयामास पन्थानं चान्तरान्तरा ॥ ५०
तैस्तदानीं ददृशिरे सानवोऽप्यम्बुभृद्वृताः ।
सुवर्णरौप्यताम्रादिशोभिताः तत्र तत्र तु ॥ ५१
उच्चलच्छीकरासारनिर्वापितदिवौकसः ।
वेगोद्धृतशिला दृष्टाः शतशो गिरिनिर्झराः ॥ ५२

तेषामापादयामास प्रमोदं मन्दमारुतः ।
कमलामोदसंवाही विचरन् गिरिसानुषु ।
शुकानां कोकिलानाञ्च तदा शुश्रुविरे गिरः ॥ ५३
तत्र तत्र समासीनान् विस्तीर्णासु दृषत्सु ते ।
सिद्धानपश्यन् कृष्णस्य गायतो गुणवैभवम् ॥ ५४
अगस्त्यप्रमुखाः सर्वे परिक्रम्य मुनीश्वराः ।
स्वामिपुष्करिणीं दिव्यां ददृशुः विमलोदकाम् ॥ ५५
तत्तीरे विहितावासं अपश्यच्छङ्खभूपतिम् ।
वाङ्मनःकायजं कर्म सन्निवेश्य स्थितं हरौ ॥ ५६
स तानालोक्य सहसा मुनीन्द्रान् संशितव्रतान् ।
यथोक्तमकरोत्पूजां प्रणामस्तुतिपूर्विकाम् ॥ ५७
आसीनास्तत्र ते सर्वे सम्भाव्यान्योऽन्यमुत्सुकाः ।
गोविन्दकीर्तनपराः कृतार्थत्वं प्रपेदिरे ॥ ५८

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटाचलं प्रति शङ्खागस्त्याद्यागमनवर्णनं नाम नवमोऽध्यायः ।

---

अथ दशमोऽध्यायः

## अगस्त्यशङ्खादितपस्तुष्टस्य भगवतः आविर्भावः

भरद्वाजः— तेषां हरौ जगन्नाथे समावेशितचेतसाम् ।
दिनत्रयं गतं तत्र पूजास्तोत्रपरात्मनाम् ॥ १
तृतीये दिवसे प्राप्ते ते सर्वे निद्रिता निशि ।
अन्ते चतुर्थयामस्य ददृशुः स्वप्नमुत्तमम् ॥ २

शङ्खचक्रगदापाणिं प्रसन्नं पुरुषोत्तमम् ।
वरदानाय सम्प्राप्तं अपश्यन् स्मेरलोचनम् ॥ ३
उत्थाय मुदितात्मानो गृहान्निर्गत्य पावने ।
स्वामिपुष्करिणीतोये सस्नुः विधिवदादरात् ॥ ४
विधाय विधिवत्कर्म सर्वं दिनमुखोचितम् ।
गृहान् प्रत्याययुर्देवं आराधयितुमच्युतम् ॥ ५
सद्यः श्रेयस्करं मार्गे निमित्तं पक्षिसूचितम् ।
दृष्ट्वा प्रसादं देवस्य करस्थं मेनिरे तदा ॥ ६
ततस्त्रिलोककर्तारं पूजयित्वा जनार्दनम् ।
तुष्टुवुर्विविधैः स्तोत्रैः पवित्रैः वेदवर्णितैः ॥ ७
स्तोत्रावसाने कौन्तेय! मुनीन्द्रः कुम्भसम्भवः ।
जजाप शङ्खसहितो मन्त्रमष्टाक्षरं हरेः ॥ ८
इत्थं तेषां जगत्स्वामिन्यच्युतेऽर्पितचेतसाम् ।
अग्रभागे प्रादुरभूत् एकं तेजो महाद्भुतम् ॥ ९
अनेककोटिसङ्ख्यानां आदित्येन्दुहविर्भुजाम् ।
एकीभूयाम्बरतले ज्योतिर्जालमिव स्थितम् ॥ १०
तत्तेजो वीक्ष्य ते सर्वे नितान्ताश्चर्यगोचराः ।
दध्युर्नारायणं दिव्यं परमानन्दविग्रहम् ॥ ११
वाङ्मानसपथातीतं विश्वैश्वर्यभासुरम् ।
सहस्रनेत्रं साहस्रबाहुपादैः समन्वितम् ॥ १२
तप्तकार्तस्वरनिभस्फुरत्कान्तिमनोहरम् ।
दंष्ट्राकरालं दुर्दर्शं वमन्तं दहनच्छटाः ॥ १३
कौस्तुभेन विराजन्तं दधानमुरसि श्रियम् ।
अविचिन्त्यमनाद्यन्तं अत्यन्तभयदायकम् ॥ १४

प्रकाशयन्तं ब्रह्माण्डं सर्वमात्मनि सर्वगम् ।
अगस्त्यशङ्खप्रमुखाः ते सर्वे हृष्टचेतसः ॥ १५
तमालोक्य जगन्नाथं भूयो भूयो ववन्दिरे ।
भ्रमन्ति लोकरक्षार्थं आयुधानि तदा हरेः ॥ १६
निजतेजोबलोपेतान्याजग्मुस्तं निषेवितुम् ।
चक्रमर्कप्रभं दिव्या गदा खड्गश्च नन्दकः ॥ १७
पुण्डरीकं च शरवः पाञ्चजन्यः शशिप्रभः ।
तदा ब्रह्माण्डमखिलं पूरयामास निर्भरः ॥ १८
पाञ्चजन्यस्य निनदः सर्वासुरभयङ्करः ।
पाञ्चजन्यध्वनिं श्रुत्वा नितान्ताश्चर्यभीषणम् ॥ १९
आययुर्देवताः सर्वाः स्वं स्वं वाहनमास्थिताः ।
ब्रह्मा रुद्रः शतमखः सनकाद्याश्च योगिनः ॥ २०
वसिष्ठमुख्या मुनयो गन्धर्वोरगकिन्नराः ।
विष्वक्सेनो गरुत्मांश्च विष्णुभृत्या जयादयः ॥ २१
सरूपाश्चैव ये नित्याः श्वेतद्वीपनिवासिनः ।
सुमनोद्रुमसम्भूता सुमनोवृष्टिरद्भुता ॥ २२
पपात मेदुरामोदमोदिताशेषमानसा ।
ननृतुर्दिव्यसुदृशो जगुः किन्नरपुङ्गवाः ॥ २३
तुष्टुवुर्हर्षतरलाः सुरगन्धर्वचारणाः ।
दृष्ट्वा ते पुण्डरीकाक्षं प्रसन्नं भक्तवत्सलम् ।
प्रणम्य तोषयामासुः साष्टाङ्गं विविधैः स्तवैः ॥ २४

ब्रह्मादयः—

'जय विष्णो कृपासिन्धो ! जय तामरसेक्षण ! ।
जय लोकैकवरद ! जय भक्तार्तिभञ्जन ! ॥ २५

अनन्तमक्षरं शान्तं अवाङ्मनसगोचरम् ।
को वा भवन्तं जानाति चिदानन्दमयात्मकम् ॥ २६

अणोरणुतरं स्थूलात् स्थूलं सर्वान्तरस्थितम् ।
त्वामामनन्ति पुरुषं प्रकृतेः परमच्युतम् ॥ २७

वेदान्तसाररूपं त्वां सर्वान्तर्बाह्यवर्तिनम् ।
को हि वर्णयितुं शक्तो मायायत्तेषु देहिषु ॥ २८

भवदीयमिदं रूपं दृष्ट्वाऽतिभयदायकम् ।
भयोद्विग्ना वयं सर्वे शान्तं रूपं भजस्व ह ॥ २९

भरद्वाजः— इति स्तुतो विरिञ्चाद्यैः प्रसन्नो गरुडध्वजः ।
मेघघोषप्रतिमया वाचा सादरमब्रवीत् ॥ ३०

## ब्रह्मादिप्रार्थनया भगवद्गृहीतसौम्यरूपप्रकारः

श्रीभगवान्– 'भयावहामिमां मूर्तिं उत्सृज्याहं प्रियावहम् ।
शान्तं रूपं भजिष्यामि मां पश्यत निराकुलाः !' ॥ ३१

इत्युक्त्वाऽन्तर्हितो भूत्वा तस्मिन्नेव क्षणान्तरे ।
विमाने रत्नखचिते बभूव सुखदर्शनः ॥ ३२

चन्द्रबिम्बाननः शान्तो नीलोत्पलदलद्युतिः ।
सुवर्णवर्णवसनो रत्नभूषणभूषितः ॥ ३३

शङ्खचक्रगदापद्मलसत्करचतुष्टयः ।
तमालोक्य रमाकान्तं भूयो भूयो ववन्दिरे ॥ ३४

सन्तोषयित्वा ब्रह्मादीन् अभीष्टप्रतिपादनैः ।
अवोचद्विनयानम्रं अगस्त्यं मुनिपुङ्गवम् ॥ ३५

श्रीभगवान्:– 'त्वं मुनीन्द्र! व्रतैः घोरैश्चीर्णैर्मां प्रति सम्प्रति ।
परिक्लिष्टोऽसि दास्यामि वरांस्तेऽभीप्सितान् वद' ॥ ३६

भरद्वाजः—

निशम्य वाक्यं श्रीभर्तुः प्रणम्य च पुनः पुनः ।
स रोमाञ्चितसर्वाङ्गः कुम्भजन्मा वचोऽब्रवीत् ॥ ३७

## अगस्त्यप्रार्थनया स्वर्णनद्याः भगवद्दत्तसर्वाधिकत्वप्राप्तिः

अगस्त्यः—

'यद्दत्तं यत्तपस्तप्तं यदधीतं श्रुतं मया ।
तत्सर्वं सफलं जातं आदृतोऽस्मि यतस्त्वया ॥ ३८
एवोऽहमेव धर्मात्मा त्रिषु लोकेष्वपि प्रभो! ।
त्वां विचिन्वन्तमधुना मामन्विष्याऽगतोऽसि यत् ॥ ३९
त्वत्प्रसादात् पुरैवाहं प्राप्ताखिलमनोरथः ।
न पश्यामि विचिन्त्यापि प्रार्थ्यं सम्प्रति माधव! ॥ ४०
तथाऽपि चापलादेतत् तव विज्ञाप्यते प्रभो! ।
त्वत्पादाम्बुजयोर्भक्तिं एवं कुरु निरन्तराम् ॥ ४१
अवधारय चैतत्त्वं सुरप्रार्थनया मया ।
नदी सुवर्णमुखरी स्नाताघौघविनाशिनी ॥ ४२
सा भवच्छैलकटकसमासन्ना समागता ।
तां कृतार्थय लोकेश त्वदनुग्रहवृत्तिभिः ॥ ४३
सुवर्णमुखरीतोये स्नात्वा ये वेङ्कटे स्थितम् ।
पश्यन्ति भुक्तिमुक्त्योस्तु भूयासुः भाजनानि ते ॥ ४४
अल्पायुषो नरा मूढा ज्ञानयोगपरिच्युताः ।
न शक्नुवन्ति त्वां द्रष्टुं व्रताध्ययनकर्मभिः ॥ ४५
सदाऽस्मिन्नास्थितः शैले सर्वेषाञ्च जगद्गुरो! ।
प्रसादसुमुखो देव! काङ्क्षितार्थप्रदो भव' ॥ ४६

श्रीभगवान्:-'यत्प्रार्थितं त्वया विप्र! तत्तथैव भविष्यति ।
नूनमप्रतिमा लोके मयि भक्तिः कृता त्वया ॥ ४७
जाह्नवीव नदी सेयं सुवर्णमुखरी मुने! ।
स्यादाशास्या सुराणाञ्च वाञ्छितश्रीविधायिनी ॥ ४८
स्वामिपुष्करिणी चेयं नदीमूर्त्या समन्विता ।
सङ्क्रमिष्यति तां दिव्यां नदीं तीर्थौघसंश्रयाम् ॥ ४९
वैकुण्ठनाम्नि शैलेऽस्मिन् अद्य प्रभृति सर्वदा ।
कृतवासो भविष्यामि मुने! प्रार्थनया तव ॥ ५०
सुवर्णमुखरीस्नानक्षालिताघौघकर्दमाः ।
अस्मिन् वैकुण्ठशैले मां ये पश्यन्ति समाहिताः ॥ ५१
भुवि पुत्रादिसम्पन्नाः सर्वैश्वर्यसमन्विताः ।
मृतास्त्रिविष्टपे भोगान् आकल्पमनुभूय च ॥ ५२
पुनरावृत्तिरहितं केवलानन्दभासुरम् ।
मत्पदं समवाप्स्यन्ति नात्र कार्या विचारणा ॥ ५३
मां द्रष्टुमागतान् सर्वान् प्रतीक्ष्याभीप्सितैः शुभैः ।
योजयिष्यामि सततं त्वद्वचोगौरवान्मुने! ॥ ५४
पुत्रार्थिनां बहून् पुत्रान् धनानि च धनार्थिनाम् ।
तद्वैवारोग्यकामानां रोगशान्तिं गरीयसीम् ॥ ५५
तीव्रापत्परिभूतानां तथैवापन्निवारणम् ।
दास्याम्यभीप्सितान् भोगान् दुर्लभानपि सर्वदा ॥ ५६
ये यान् कामानपेक्ष्येह प्रेक्षन्ते मां समागताः ।
अवाप्नुवन्ति ते सर्वे तांस्तान् कामान् न संशयः ॥ ५७
स्थिता वा यत्र कुत्रापि मां स्मरन्ति नरोत्तमाः ।
ते सर्वे वाञ्छितां सिद्धिं लभन्ते मत्प्रसादतः ॥ ५८

## शङ्खनृपवरप्रदानपूर्वकं भगवदन्तर्धानम्

भरद्वाजः—

इत्युक्त्वा तं मुनिं देवः शङ्खमालोक्य भूपतिम् ।
शृण्वतां ब्रह्ममुख्यानां इदं वचनमब्रवीत् ॥ ५९

श्रीभगवान्– 'प्रीतोऽस्मि शङ्ख! भक्त्या ते वृणीष्वाभीप्सितं वरम् ।
ददामि वरदोऽहं ते क्लिष्टस्य तपस्यतः' ॥ ६०

शङ्खः— 'न याचेऽन्यन्महाबाहो त्वत्पादाम्बुजसेवनात् ।
यां प्राप्नुवन्ति त्वद्भक्ताः तां याचे गतिमुत्तमाम्' ॥ ६१

श्रीभगवान्– 'यत्प्रार्थितं त्वया शङ्ख! तत्तथैव भविष्यति ।
मत्सेवायोगभव्यानां अलभ्यं किमु विद्यते! ॥ ६२

आकल्पमिन्द्रलोकस्थो ह्यप्सरोगणसेवितः ।
भुक्त्वा बहुविधान् भोगान् ततो मल्लोकमेष्यसि' ॥ ६३

भरद्वाजः– एवं ददौ वरानिष्टान् शङ्खाय पृथिवीभृते ।
नारायणो जगद्योनिः भजतां कल्पभूरुहः ॥ ६४

ततो ब्रह्मादिकान् सर्वान् विसृज्य कमलेक्षणः ।
संस्तूय मानसैर्भक्त्या तत्रैवान्तर्दधे प्रभुः ॥ ६५

## भरद्वाजवर्णितश्रीवेङ्कटाचलमाहात्म्यनिगमनम्

भरद्वाजः—

'वेङ्कटाद्रेः प्रभावोऽयं आख्यातो भवतेऽर्जुन! ।
नराः पापैः प्रमुच्यन्ते श्रुत्वेमां पावनीं कथाम् ॥ ६६

वाराहं रूपमुत्सृज्य ब्रह्मणाभ्यर्थितो हरिः ।
मुमोदात्माद्भुताकारो मायया मोहयन् जगत् ॥ ६७

पश्चादगस्त्यशङ्खाभ्यां प्रार्थितः सुखदर्शनम् ।
ददौ नितान्तसुभगं शान्तं भोगात्मकं वपुः ॥ ६८

नारायणं वेङ्कटाद्रिं स्वामिपुष्करिणीं तथा ।
इमामाख्यांश्च संस्मृत्य मुच्यन्ते पातकैर्जनाः ॥ ६९

वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो न भूतो न भविष्यति ॥ ७०

वेङ्कटाद्रिसमं स्थानं न भूतं न भविष्यति ।
स्वामितीर्थसरस्तुल्यं न कुत्रापि च विद्यते ॥ ७१

प्रातरुत्थाय ये नित्यं वेङ्कटेशं स्मरन्ति वै ।
तेषां करस्था मोक्षश्रीः नात्र कार्या विचारणा ॥ ७२

स्वामिपुष्करिणीतीर्थे स्नात्वा सर्वात्मकं हरिम् ।
ये वा पश्यन्ति नियता वराहाचलवासिनम् ॥ ७३

तेऽश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्राप्नुवन्ति फलं पूर्णं नात्र कार्या विचारणा ॥ ७४

वेङ्कटाचलमाहात्म्यं ये शृण्वन्ति नरोत्तमाः ।
तेषां मुक्तिश्च भुक्तिश्च इह लोके परत्र च ॥ ७५

वेङ्कटाचलमाहात्म्यं सङ्क्षिप्य कथितं तव ।
अतः परं महानद्याः प्रभावः कथ्यतेऽर्जुन ! ॥ ७६

इति श्रीस्कान्दपुराणे तीर्थखण्डे सुवर्णमुखरीमाहात्म्ये श्रीवेङ्कटाचल-
प्रशंसायामगस्त्यशङ्खादितपस्तुष्ट श्रीवेङ्कटेशाविर्भावादि-
माहात्म्यवर्णनं नाम दशमोऽध्यायः ।

---

श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते विष्वक्सेनाय नमः

# श्रीवेङ्कटाचलमाहात्म्यम्

## ( श्रीस्कान्दपुराणान्तर्गतम् )

(चतुर्थो भागः)

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥

श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्रीनिवासमहं भजे ॥

हरिः ॐ

अथ प्रथमोऽध्यायः

### पुत्रार्थमञ्जनाकृततपःप्रकारः

श्रीसूतः— पुत्रहीनाऽञ्जना पूर्वं दुःखिता तपसि स्थिता ।
तां दृष्ट्वा मुनिशार्दूलो मतङ्गो विष्णुतत्परः ।
अञ्जनाख्यामुवाचेदं अत्युग्रे तपसि स्थिताम् ॥ १

मतङ्गः— 'समुत्तिष्ठाञ्जने ! देवि ! किमर्थं तपसि स्थिता ।
वद देवि ! महाभागे ! कार्यं तव वरानने !' ॥ २

अञ्जनाः— 'मतङ्ग ! मुनिशार्दूल ! वचनं मे शृणुष्व ह ।
पिता मे केसरी नाम राक्षसः शिवतत्परः ॥ ३

अञ्जना—

शैवं घोरं तपश्चक्रे पुत्रार्थन्तु सुदुष्करम् ।
पार्वतीसहितः शम्भुः वृषभोपरि संस्थितः ।
प्रादुरासीत्तदा देवो ददौ तस्मै वरं शुभम्' ॥ ४
"शृणु राजन् प्रवक्ष्यामि विधिना निर्मितं तव ।
अस्मिन् जन्मन्यपुत्रत्वं तथाऽप्यन्यद्ददामि ते ॥ ५
विश्रुता सर्वलोकेषु पुत्री तव भविष्यति ।
तस्याः पुत्रो महाबुद्धिः तव प्रीतिं करिष्यति" ॥ ६
इति तस्मै वरं दत्त्वा तत्रैवान्तर्दधे हरः ।
मां लब्ध्वा मत्पिता विप्र! कृतकृत्यो बभूव ह ॥ ७
ततः कालान्तरे विप्रः केसर्याख्यो महाकपिः ।
ययाचे मां ददस्वेति पितरं मे ततः पिता ॥ ८
तस्मै मां दत्तवांश्चैव पारिबर्हं ददौ च सः ।
गवां लक्षसहस्राणि गजलक्षं महात्मनः ॥ ९
वाजिनामर्बुदञ्चैव रथानामर्बुदं तथा ।
वस्त्ररत्नान्यनेकानि दासदासीसहस्रकम् ॥ १०
अन्तःपुरचरीर्नारीः नृत्यगीतविशारदाः ।
ददौ वासःसहस्रञ्च मयासार्कं महामते! ॥ ११
एवं मे रममाणाया भूयान् कालो गतो मुने! ।
अपुत्रा दुःखिता विप्र! व्रतानि विविधानि च ॥ १२
कृतानि च मया तत्र किष्किन्धायां महापुरि ।
माघे मासि च विप्रेन्द्र! वैशाखे कार्तिके तथा ॥ १३
स्नानदानव्रतादीनि चातुर्मास्यव्रतं तथा ।
नमस्कारं तथा विप्र! प्रदक्षिणमनुत्तमम् ॥ १४

सालग्रामान्नदानानि दीपदानं तथैव च ।
गोदानं तिलदानञ्च वस्त्रदानं महामुने! ॥ १५
भूदानं वारिदानञ्च दत्त्वा पुष्पादिकं मुने! ।
यानि यानि च मुख्यानि वैष्णवानि व्रतानि च ॥ १६
मया कृतानि सर्वाणि सत्पुत्रफलकाङ्क्षया ।
श्रवणादिषु यत्प्रोक्तं व्रतं विप्रैर्महात्मभिः ॥ १७
मया कृतञ्च विप्रेन्द्र तुष्ट्यर्थं मधुविद्विषः ।
यानि यानि च मुख्यानि फलानि विविधानि च ॥ १८
मया दत्तानि सर्वाणि सत्पुत्रफलकाङ्क्षया ।
मया कृतान्यसङ्ख्यानि व्रतानि विविधानि च ॥ १९
पुत्रं तथाऽप्यलब्ध्वाऽहं दुःखिता तपसि स्थिता ।
भविष्यति कथं विप्र! पुत्रस्त्रैलोक्यविश्रुतः ॥ २०
यथाचेऽहं मुनिश्रेष्ठ! प्रणता च तवाग्रतः ।
वद त्वं मुनिशार्दूल! दीनाऽहं तपसि स्थिता' ॥ २१

श्रीसूत.— एवं वदन्तीं तां प्राह मतङ्गो मुनिसत्तमः ।
'शृणु मद्वचनं देवि! पुत्रपौत्रप्रदायकम् ॥ २२
इतो दक्षिणदिग्भागे दशयोजनदूरतः ।
घनाचल इति ख्यातो नृसिंहस्य निवासभूः ॥ २३
तस्योपरि महाभागे! ब्रह्मतीर्थं मनोहरम् ।
तस्यापि पूर्वदिग्भागे दशयोजनमात्रतः ॥ २४
सुवर्णमुखरी नाम नदीनां प्रवरा नदी ।
तस्या एवोत्तरे भागे वृषभाचलनामतः ॥ २५
तस्याग्रे सरसी नाम्ना स्वामिपुष्करिणी शुभा ।
गत्वा दृष्ट्वा शुभं तोयं मनःशुद्धिं गमिष्यसि ॥ २६

तत्र स्नात्वा विधानेन वराहं तं प्रणम्य च ।
वेङ्कटेशं नमस्कृत्य ततो गच्छ वरानने! ॥ २७
उत्तरे स्वामितीर्थस्य सिंहशार्दूलसंयुते ।
चूतपुन्नागपनसैः बकुलामलकैः शुभैः ॥ २८
चन्दनागुरुनिम्बैश्च तालहिन्तालकिंशुकैः ।
कपित्थाश्वत्थबिल्वैश्च इङ्गुदैश्च वरानने! ॥ २९
एतादृशैर्महापुण्यैः वृक्षैश्च विविधैः शुभैः ।
वियद्गङ्गेति विख्यातं तीर्थमेकं विराजते ॥ ३०
तस्मिंस्तीर्थेऽञ्जने देवि! संकल्पविधिपूर्वकम् ।
स्नात्वा पीत्वा शुभं तीर्थं तीर्थस्याभिमुखी स्थिता ॥ ३१
वायुमुद्दिश्य हे देवि! तपः कुरु वरानने! ।
देवैश्च राक्षसैर्विप्रैः मनुजैर्मुनिसत्तमैः ॥ ३२
भृङ्गैः पक्षिभिरस्त्रैश्च शस्त्रैश्च विविधैः शुभैः ।
अवध्यो भविता पुत्रः तपसा ते न संशयः' ॥ ३३
इति प्रोक्ताऽञ्जना देवी तं प्रणम्य पुनः पुनः! ।
भर्त्रा साकं ययावाशु वेङ्कटाचलसंज्ञकम् ॥ ३४
कापिलं तीर्थमासाद्य स्नात्वा निर्मलमानसा ।
वेङ्कटाद्रिं समारुह्य स्वामिपुष्करिणीं ययौ ॥ ३५
स्नात्वा वराहमानम्य वेङ्कटेशकृताऽनतिः ।
मतङ्गस्य ऋषेर्वाक्यं स्मरन्ती च मुहुर्मुहुः ॥ ३६
वियद्गङ्गां ययावाशु चाञ्जना मञ्जुभाषिणी ।
स्नात्वा पीत्वा शुभं तोयं तीरे तस्य तदुन्मुखी ॥ ३७
प्राणवायुं समुद्दिश्य तपश्चक्रे यतव्रता ।
फलाहारा जलाहारा निराहारा ततः परम् ॥ ३८

सहस्राब्दं तपश्चक्रे न्यस्तनासाग्रदृष्टिका ।
वयस्या विपुला नाम शुश्रूषामकरोच्छुभा ॥ ३९
वर्षाणाञ्च सहस्रान्ते वायुर्देवो महामतिः ।
प्रादुरासीत्तदा तां वै भाषमाणो महामतिः ॥ ४०
'मेषसङ्क्रमणे भानौ संप्राप्ते मुनिसत्तमाः! ।
पूर्णिमाख्ये तिथौ पुण्ये चित्रानक्षत्रसंयुते ॥ ४१
तत्रेप्सितमहं दास्ये वरं वरय सुव्रते!' ।
इति तद्वचनं श्रुत्वा ततः प्राहाऽञ्जना सती ॥ ४२
'पुत्रं देहि महाभाग वायो! देव! महामते!' ।
तस्यास्तद्वचनं श्रुत्वा मातरिश्वाऽब्रवीत्ततः ॥ ४३
'पुत्रस्तेऽहं भविष्यामि ख्यातिं दास्ये शुभानने' ।
इति तस्यै वरं दत्त्वा तत्रैवास्त महाबलः ॥ ४४
तदा ब्रह्मादयो देवा इन्द्राद्या लोकपालकाः ।
वसिष्ठाद्या महात्मानः सनकाद्याश्च योगिनः ॥ ४५
व्यासादयश्च विप्रेन्द्रा लक्ष्म्या साकं जगत्पतिः ।
मुनिपत्न्यो देवपत्न्यः ऋषिपत्न्यस्तथैव च ॥ ४६
स्वं स्वं वाहनमारुह्य दारभृत्यसुतादिभिः ।
आगतास्ते महात्मानो द्रष्टुं तां तपसि स्थिताम् ॥ ४७
आश्चर्यमाश्चर्यमिति ब्रुवाणा ब्रह्मादयो देवगणाश्च सर्वे ।
आलोकयन्तो दिवि दूरतस्ते स्थिताः सदा ब्रह्ममहेशमुख्याः ॥ ४८

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये
चतुर्थभागे अञ्जनातपःकरणप्रकारादिवर्णनं नाम
प्रथमोऽध्यायः ।



अथ द्वितीयोऽध्यायः

## व्यासप्रोक्ताऽऽकाशगङ्गास्नानकालनिर्णयः

श्रीसूतः—

अञ्जनाऽपि वरं लब्ध्वा भर्त्रा साकं मुमोद ह ।
ब्रह्मादीनागतान् दृष्ट्वा विस्मयाऽविष्टमानसा ॥ १
पत्या साकं ततः स्वस्था चाञ्जना मञ्जुभाषिणी ।
ब्रह्मादिभिरनुज्ञातो व्यासो वेदविदां वरः ।
अञ्जनां तामुवाचेदं वेवगम्भीरया गिरा ॥ २

व्यासः—

'अञ्जने! शृणु मद्वाक्यं सर्वलोकोपकारकम् ।
मतङ्गस्य ऋषेर्वाक्यं श्रुत्वा निर्मलचेतसा ॥ ३
यस्मात्तु वेङ्कटं गत्वा तपः कृत्वा सुदुष्करम् ।
प्रसूयते त्वया पुत्रः शूरस्त्रैलोक्यविक्रमः ॥ ४
इदं तीर्थोत्तरं तस्मात् प्रत्यक्षदिवसे तव ।
स्नानार्थं ये समायान्ति चित्राऋक्षसमन्विते ॥ ५
मेषे पूषणि सम्प्राप्ते पूर्णिमायां शुभे दिने ।
शृणु तेषां फलं देवि! वक्ष्यामि तव सुव्रते! ॥ ६
गङ्गादिसर्वतीर्थेषु द्वादशाब्दं वरानने! ।
यत्फलं विद्यते देवि! तत्फलं भवति ध्रुवम् ॥ ७
दानानि कुर्वतां पुंसां तेषां शृणु फलोन्नतिम् ।
स्थाने तूक्तं फलं देवि! विद्धि तेषां वरानने!' ॥ ८

अञ्जना—

'कार्याणि यानि दानानि वेङ्कटाद्रौ नगोत्तमे ।
तानि सर्वाणि विप्रेन्द्र! वद वेदविदां वर!' ॥ ९

## व्यासप्रोक्तश्रीवेङ्कटाचलकरणीयदानप्रशंसा

व्यासः—

'अन्नदानं वस्त्रदानं द्वयमेतत्प्रशस्यते ।
पितुः श्राद्धं विशेषेण वेङ्कटाद्रौ नगोत्तमे ॥ १०
सुवर्णं ये प्रयच्छन्ति प्रीतये मधुघातिनः ।
सर्वलोकं समासाद्य मोदन्ते मुनिसत्तमाः ॥ ११
सालग्रामशिलादानं यः करोति नगोत्तमे ।
अङ्गभङ्गमवाप्नोति स्वानुभूतिञ्च विन्दति ॥ १२
यो ददाति द्विजेन्द्राय गोदानञ्च कुटुम्बिने ।
रोमसङ्ख्याप्रमाणेन विष्णुलोके विराजते ॥ १३
भूमिं ददाति यो देवि! ब्राह्मणाय कुटुम्बिने ।
तस्य पुण्यफलं वक्तुं कः शक्तो दिवि वा भुवि ॥ १४
कन्यां ददाति यो देवि! श्रोत्रियाय द्विजातये ।
विष्णुलोकं समासाद्य मोदते पितृभिः सह ॥ १५
प्रपां कुर्वन्ति ये देवि! शीतलोदकसंयुताम् ।
तेषां पुण्यफलं वक्तुं शेषेणापि न शक्यते ॥ १६
तिलं ददाति विप्राय श्रोत्रियाय कुटुम्बिने ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १७
धान्यदानं प्रशंसन्ति विप्रा वेदविदां वराः ।
बहुपुत्रा भविष्यन्ति धान्यदानं प्रकुर्वताम् ॥ १८
गन्धचम्पकपुष्पादीन् छत्रव्यजनचामरान् ।
ताम्बूलघनसारादीन् यो ददाति द्विजातये ॥ १९
भुक्त्वा भोगं चिरं कालं स्वर्गलोकं ततो व्रजेत् ।
दिव्यवर्षसहस्रञ्च भुक्त्वा भोगाननेकशः ॥ २०

सार्वभौमस्ततो भूत्वा तत्र भुक्त्वा चिरं महीम् ।
ततो विप्रत्वमासाद्य वेदवेदान्तपारगः ॥ २१
ततो मुक्तिं समायाति प्रसादाच्चक्रपाणिनः ।
इत्येतत्कथितं देवि ! वेङ्कटाचलवैभवम् ॥ २२
य एतच्छृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ २३
इत्येतत्कथितं पूर्वं व्यासेनैव महात्मना ।
शृणुयाद्वा पठेद्वाऽपि कृतकृत्यो भविष्यति ।
तस्यैव वंशजाः सर्वे मुक्तिं यान्ति न संशयः ॥ २४

इति श्रीस्कान्दपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये चतुर्थभागे आकाशगङ्गास्नानकालनिर्णयादिवर्णनं नाम द्वितीयोऽध्यायः ।

॥ हरिः ॐ । ॐ तत्सत् ।



श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रियै पद्मावत्यै नमः

श्रीमते विष्वक्सेनाय नमः

# श्रीवेङ्कटाचलमाहात्म्यम्

## ( अथादित्यपुराणान्तर्गतम् )

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेंकटनिवासाय श्रीनिवासाय मङ्गलम् ॥

श्री वे ङ्क टा च ला धी शं श्रीयाऽध्यासितवक्षसम् ।
श्रितचेतनमन्दारं श्री नि वा स म हं भजे ॥

हरिः ॐ

अथ प्रथमोऽध्यायः

## शौनकादीन् प्रति सूतप्रोक्तश्रीश्रीनिवासवैभवम्

श्रीशौनकादयः—

‘ श्रीवेङ्कटेशमाहात्म्यं श्रीनिवासप्रसादतः ।
श्रीप्रदं सर्वदा सूत ! दयया प्रोक्तवानसि ॥ १

इतः परं श्रीनिवासः श्रीपतिः सर्वशो हि नः ।
कथं प्रीतो भवेत्सद्यो ह्यभीष्टानि प्रवर्षयन् ॥ २

तद्वदस्व कृपापूर्ण ! वेङ्कटेशकथामृतम् ।
भगवन् ! सर्वतत्त्वज्ञ ! दयापात्रं वयं तव ’ ॥ ३

शृणुध्वं मुनयो! दिव्यं सावधानतया त्विदम् ।
यथा पृष्टं तथैवाहं वक्ष्यामि वचनं शुभम् ॥ ४
वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो न भूतो न भविष्यति ॥ ५
अद्भुतञ्चास्य चरितं वर्णितुं केन शक्यते? ।
तथाऽपि तारकं सर्वपापघ्नं पुण्यवर्धनम् ॥ ६
सुविचित्रमपूर्वार्थं देवर्ष्यादिभिरादृतम् ।
लोकोत्तरं महाश्चर्यं वक्ष्येऽहं सर्वसिद्धिदम् ॥ ७
शेषाचले यन्माहात्म्यं अन्यक्षेत्रे न तत् क्वचित् ।
तद्गतश्रीनिवासस्य महिमा नान्यगः शुभः ॥ ८
वेदेषु च पुराणेषु वेङ्कटेशकथाऽमृतम् ।
वर्णितञ्चेतिहासेषु भारताद्यागमेषु च ॥ ९
मनोहरन्तु संश्राव्यं इहामुत्रेष्टदायकम् ।
ज्ञानप्रदं विशेषेण महैश्वर्यस्य कारणम् ॥ १०
वैराग्यभक्तिसत्त्वादिप्रदेन्द्रियवशप्रदे ।
वेङ्कटाद्रौ शुचिक्षेत्रेऽशुचिदोषो न विद्यते ॥ ११
तस्माद्वेङ्कटनाथस्य नैवेद्यं ग्राह्यमुत्तमम् ।
तेन क्षेमं प्रजानां हि विपरीते विपर्ययः ॥ १२
कर्ता हि सृष्टिस्थितिसंयमादेः भर्ता रजःसत्त्वतमांस्यनर्हः ।
अनाद्यनन्तो वचसाऽनिरुक्तः सदाश्रयो देववरो वरेण्यः ॥ १३
नित्यं ब्रह्मा शिवः शेषगरुडेन्द्रादयो वराः ।
पूजयन्ति महाभक्त्या वेङ्कटेशं श्रिया सह ॥ १४
चराचरगुरुर्देवः सर्वसाक्षी महेश्वरः ।
जप्यस्तप्योऽर्चनीयश्च स्मर्यो ध्येयोऽखिलैरपि ॥ १५

तन्मनास्तद्गतप्राणो भक्त्या तन्नाम संस्मरेत् ।
गोदानान्यश्वमेधाद्याः कन्यादानान्यसंङ्ख्यया ॥ १६

असङ्ख्यमेरुसौवर्णदानान्यन्यान्यनेकशः ।
तन्नामस्मृत्यतुल्यानि माहात्म्यं किमुताद्भुतम् ॥ १७

इति शेषेण कथितं कपिलाय महात्मने ।
कपिलाख्यमहायोगिसकाशात्तु मया श्रुतम् ॥ १८

तदुक्तं भवतामद्य सद्यः प्रीतिकरं हरेः ।
अतो वो मङ्गलार्थञ्च शृणुध्वं यन्मयोच्यते ॥ १९

श्रीवेङ्कटेशयात्रार्थं गच्छध्वं सुदृढव्रताः ।
विष्णुसंदर्शनं कृत्वा भक्तिमन्तो जितेन्द्रियाः ॥ २०

स्तोत्रं कुरुध्वं बहुधा भगवद्गुणवर्णनैः ।
स्वगुणोत्कर्षविज्ञानात् यथा प्रीतिर्निजा हरेः ॥ २१

न तादृशी प्रीतिरस्ति ह्यज्ञानादन्यथामतौ ।
भक्त्या स्तोत्रेण सन्तुष्टः सर्वेष्टानि प्रवर्षति ॥ २२

भक्तिस्तोत्रविहीनेषु दयावान् न भवेत् तथा ।
अत्र वः कथयामीष्टं इतिहासं पुरातनम् ॥ २३

यस्य स्मरणमात्रेण भक्तिर्विष्णुपदाम्बुजे ।
वायुशिष्यो देवशर्मा विष्णुभक्तो जितेन्द्रियः ॥ २४

तपस्वी बहुनिष्ठावान् सर्वदा विष्णुचिन्तने ।
ममताहङ्कारशून्यो विषयेषु विरागवान् ॥ २५

षट्च्छत्रुविजयी शान्तः षट्तरङ्गसुभङ्गकृत् ।
कुटुम्बे न मनःकारी दारिद्र्यात् पीडितोऽपि च ॥ २६

भार्यया प्रार्थितो नित्यं दारिद्र्यापगमेच्छया ।
'भो नाथ हे पते स्वामिन्! प्रसीद करुणाकर! ॥ २७

क्षुधया दुःखिता बालाः तव पुत्राश्च केवलम् ।
न शक्ताऽहमरण्येषु कन्दमूलार्जनादिषु ॥ २८
रक्षको मम नान्योऽस्ति शिशूनां पालनेऽपि च ।
कृपां कुरुष्व शिशुषु विज्ञापनमिदं शृणु ॥ २९
कुलस्वामीष्टदेवो नो जगद्रक्षणदीक्षितः ।
शरणागतसन्त्राणः श्रीनिवासः सतां गतिः ॥ ३०
पालको हि बहूनाञ्च भक्तानां भक्तवत्सलः ।
तल्लक्ष्मीपतिपादाब्जं गत्वा तत्प्रार्थनां कुरु ॥ ३१
तेन प्रीतो भवेत् सद्यः ततोऽस्मज्जीवनं भवेत् ।
प्रसीद त्वं दयासिन्धो! दयां कुरु दयां कुरु' ॥ ३२
इति दैन्येन महता प्रार्थितोऽहर्निशं तया ।
न स्वीचकार तद्वाक्यं तपोविघ्नभयात्तदा ॥ ३३
दिष्ट्या चादृष्टपाकेन तद्गुरुर्वायुरागमत् ।
पतिव्रतायां शिशुषु प्रसन्नः करुणानिधिः ॥ ३४
तपोऽवसाने सम्प्राप्तं स्वगुरुं जगतां गुरुम् ।
दृष्ट्वा मुदा देवशर्मा सहसोत्थाय चादरात् ॥ ३५
साष्टाङ्गं तं प्रणम्याथ बद्धाञ्जलिपुटोऽभवत् ।
ततो वायुः प्राह शिष्यं मधुरं वचनं हितम् ॥ ३६
'श्रीमद्वेङ्कटनाथस्य यात्रार्थं गच्छ मा चिरम् ।
तेनेहामुत्र तेऽभीष्टसिद्धिर्भवति नान्यथा ॥ ३७
लक्ष्मीपतेर्दयासिन्धोः ब्रह्मादिवरदायिनः ।
यात्रायां माऽस्तु सन्देहः शीघ्रं गच्छ सुभक्तिमान्' ॥ ३८
इति देवेनानिलेन गुरुणा स्वस्य चोदितः ।
मुहुर्मुहुर्बोधितोऽथ विष्णुयात्रामहादरः ॥ ३९

गुरूक्तमर्थं जग्राह गुरुवाक्ये सदा रतः ।
गुरूपदेशो बलवान् गुरोराज्ञां न लङ्घयेत् ॥ ४०
इत्यर्थमनुसन्धाय प्रतस्थे शेषपर्वतम् ।
तत्र श्रीवेङ्कटेशस्य सुदर्शनमहादरः ॥ ४१
आनन्दज्ञानदं विष्णुं आनन्दमयनामकम् ।
आनन्देन ददर्शायं आनन्दनिलयाऽऽलये ॥ ४२
विहरन्तं श्रीधराख्यं नानालीलाविलासिनम् ।
भक्तदर्शनमात्रेण प्रसादात् मन्दहासिनम् ।
श्रीवेङ्कटेशं तं नत्वा भक्त्या चक्रेऽथ संस्तुतिम् ॥ ४३

## श्रीश्रीनिवासमुद्दिश्य देवशर्माख्यविप्रकृतस्तुतिः

देवशर्मा—

'दयानिधे ! दयानिधे ! दयानिधे ! दयानिधे !
नमो नमो नमो नमो नमो नमो नमो नमः ॥ ४४
श्रीपद्मनाभ ! पद्मेश ! पद्मजेशेन्द्रवन्दित ! ।
पद्ममालिन् पद्मनेत्र ! पद्माभयदरारिभृत् ! ॥ ४५
पद्मपाणे ! पद्मपाद ! सर्वहृत्पद्मसंस्थित ! ।
त्वत्पादपद्मयुगलं प्रणमाम्यतिसुन्दरम् ॥ ४६
त्वत्पादपद्ममाहात्म्यं अघ्यनन्त ! त्रिविक्रमम् ! ।
यत्कनिष्ठाङ्गुलिनखमण्यग्रगुणसंयुतान् ॥ ४७
अनन्तान् सुविशेषांश्च पश्यन्ती श्रीर्निरन्तरम् ।
स्तोतुकामा क्षणादीक्षा हर्षादाश्चर्यसागरे ॥ ४८
गहने गाहमानाऽभूत् अनन्तश्रुत्यगोचरे ।
त्वयोपदिष्टो यः पुत्रवात्सल्याच्चतुराननः ॥ ४९

त्वद्गुणानाञ्च गणनादानन्दमतुलं भजन् ।
नाद्यापि विररामासौ गणनाद्देवराडपि ॥ ५०
सहस्रवदनः शेषोऽशेषवेदार्थकोविदः ।
नाहं जाने इति ब्रूते यन्नखाग्र्याग्रवैभवम् ॥ ५१
अनन्तवेदा भाषन्ते ह्यन्योऽन्यं प्रविचार्य च ।
एकैकस्मिन्नधिकारे नियुक्ता एकैकशो ब्रह्मपूर्वाश्च विष्णोः॥ ५२
सर्वे देवाः स्वाधिकारे नियुक्ताः सत्यादिलोकेषु यथाक्रमेण ।
भुञ्जन्त इष्टानि महादरेण भजन्ति शेषाचलगं रमेशम् ॥ ५३
वयं त्वनन्ता हरिणा नियुक्ता वेदाः स्तोतुं स्वस्य गुणानुभावम् ।
गुणास्त्वनन्ताः परमात्मनो यत् पदो नखाग्रस्थगुणैकदेशम् ॥ ५४
स्तुतौ मिलित्वा वयमत्र शक्ता वेदास्त्वनन्ता जनितास्तदर्थम् ।
एवं सुनिश्चित्य गुणैकदेशमाहात्म्यमेते त्वविजानन्त एव ॥ ५५
उपक्रान्ताः स्तोतुमथो गुणैकदेशोऽप्यनन्तात्मतयाऽभिवृद्धः ।
तं वीक्ष्य तेऽन्योन्यमथोचुरेकं गुणं वदामो विसृजाम शेषान् ॥ ५६
आरेभिरे पूर्ववदेव तेऽपि गुणा अनन्ता अभवन्च सोऽपि ।
गुणैः सुपूर्णाः शुभदैरनन्तैः प्रत्येकशः किरणानीव पूष्णः ॥ ५७
विदिक्षु दिक्षूर्ध्वमधश्च वेदा दृष्ट्वा
गुणान् व्यापृतानित्यवोचन् ।
द्रष्टुं श्रोतुं कीर्तितुं वाऽपि बोद्धुं
अशक्यं नः किमुत स्तोतुमेनान् ॥ ५८
अस्मानतीतान् वयमल्पसाराः किं वर्णयामोऽलमलं प्रशंसया ! ।
इत्युक्तवन्तः स्वमनोऽनुसारात् गुणानेतान् वर्णयामासुरञ्जसा ॥ ५९
तथाऽपि ते पादनखाग्रगेषु गुणेष्वनन्तेषु विभाजितस्य ।
गुणैकदेशस्य गुणैकदेशकः प्रवर्णितोऽशा बहवो न वर्णिताः ॥ ६०

एवं रमाजाहिपवेदमुख्याः शक्ता नासन् दर्शने त्वद्गुणानाम् ।
यत्समस्तगुणान् विष्णोर्वर्णने शक्तिवर्जिताः ।
अनन्तवेदास्तद्भूमन्! गुणास्ते त्वमिताद्भुताः ' ॥ ६१

इति श्रीमदादित्यपुराणे श्रीवेङ्कटाचलमाहात्म्ये देवशर्मकृत-
श्रीनिवासपादनखाग्रादिमहिमवर्णनं
नाम प्रथमोऽध्यायः ।

---

अथ द्वितीयोऽध्यायः



## श्री श्रीनिवासमङ्गलविग्रहसौन्दर्यादिवर्णनम्

देवशर्मा–

'इतोऽप्यथ त्वत्पदाब्जगतसौन्दर्यमद्भुतम् ।
स्वामिंस्त्वया प्रेरितश्चेत् यथामत्यनुवादये ॥ १
वक्षःस्थाऽपि रमा देवी तव पादाम्बुजे स्थितम् ।
सौन्दर्यमद्भुतं दृष्ट्वा सुन्दरी मोहिताऽभवत् ॥ २
विस्मिता द्रष्टुकामाऽथ स्वस्य नेत्रद्वयेन वै ।
अशक्यं दर्शनं मत्वा त्रिरूपा चाभवत्तदा ॥ ३
दक्षिणे श्रीरूपिणी च वामे भूरूपिणी स्थिता ।
नीलरूपा च तत्रैव त्रिरूपा नेत्रषट्कतः ॥ ४
पश्यन्त्यनन्यमनसा सौन्दर्याख्यरसायनम् ।
पिबन्त्यप्यन्वहं नापि निवृत्ता तृष्णयाऽधुना ॥ ५
श्रीसुन्दर! श्रीनिवास! नाभिस्थश्चतुराननः ।
तव पदाम्बुजे रम्यसौन्दर्ये लग्नमानसः ॥ ६

अष्टनेत्र्या दिवारात्रं पश्यन् सौन्दर्यमद्भुतम् ।
नालं नेत्राष्टकमिति बहुरूपी तदाऽभवत् ॥ ७
कण्ठे च कौस्तुभे नाभौ वैकुण्ठादित्रिधामसु ।
सत्यलोके च मेर्वादौ सर्वत्र चतुराननः ॥ ८
ततः पादाब्जसौन्दर्यरसं चामृतनैच्यदम् ।
प्रीत्या पातुमहोरात्रं आसाद्य सुखभोगिनः ॥ ९
तृष्णा शान्ताऽधुना नापि पादसौन्दर्यमीदृशम् ।
शय्यासनातपत्रादिरूपी त्वत्पादसेवकः ॥ १०
शेषो बहुसहस्राक्षः सदान्तस्थो व्यचिन्तयत् ।
'असत्त्वाम्भङ्घ्रिसौन्दर्यं विचित्रं सुमनोहरम् ॥ ११
अदृष्टश्रुतपूर्वञ्च महागाढं विलक्षणम् ।
सुलक्षणञ्च सन्दृश्यं जगन्मोहनमोहकम् ॥ १२
बहूनि मम नेत्राणि समीपे सर्वदा हरेः ।
वासश्चेशप्रसादेन त्वेवं भाग्यमभून्मम' ॥ १३
इति सम्भ्रमसंयुक्तः सर्वदाऽतिप्रियो हरेः ।
नेत्रैर्बहुसहस्रैश्च लक्ष्मीपतिपदाम्बुजे ॥ १४
असमं चित्रसौन्दर्यं दृष्ट्वादृष्ट्वा पुनःपुनः ।
महानन्दाम्बुधौ मग्नः एवं मेने फणी तदा ॥ १५
'वसाम्यहं सदैवात्र पादमूले च मत्पतेः ।
वैकुण्ठं वा न गच्छामि त्यक्त्वा विष्णुपदाम्बुजम् ॥ १६
यस्त्वानन्दो भवेन्नित्यं पादसौन्दर्यदर्शनात् ।
वैकुण्ठे ईदृशानन्दः कैवल्येऽपि न विद्यते ॥ १७
पातालमात्रं गन्तव्यं पादमूलं यतो हरेः ।
न स्थास्यामि क्षणमपि यत्सौन्दर्यामृतं विना' ॥ १८

इति निश्चित्य नागेन्द्रः पादसौन्दर्यमोहितः ।
यत्र यत्रेन्दिरेशस्य पादमूलं प्रवर्तते ॥ १९
तत्र तत्र सदा पादसौन्दर्यामृतपाय्यभूत् ।
अथाचिन्तयदेवं हि शङ्करो लोकशङ्करः ॥ २०
'शेषस्य किमहो भाग्यं शेषाशेशप्रसादजम् ।
बहुनेत्राणि तत्पादसौन्दर्यामृतसेवनम् ॥ २१
एतद्द्वयं दुर्लभं मे त्रिनेत्रत्वादहो बत ।
भाविजन्मनि शेषत्वप्राप्त्यर्थं वा महत्तपः ॥ २२
करोमीत्यतिवैराग्यात् शम्भुः कैलासगोऽभवत् ।
श्रीवेङ्कटेशेन्दिरेश! जिष्णुस्तव मुखाम्बुजात् ॥ २३
जातः सहस्रनयनोऽप्येवं तव पदाम्बुजे ।
अदृश्याश्चर्यसौन्दर्यं सम्पश्यन्नप्यहर्निशम् ॥ २४
इत्यचिन्तयदत्यन्तं पादसौन्दर्यमोहितः ।
अमृतस्य पुरा पाने मे नाभूदीदृशं सुखम् ॥ २५
सौन्दर्यमतिसामीप्यदोषात् सम्यङ् न दृश्यते ।
इतोऽप्यतिशयानन्दः किञ्चिद्व्यवहिते भवेत् ॥ २६
अतः स्वर्गस्थोऽनिमेषो यावन्नेत्रैरहर्निशम् ।
वीक्ष्ये यावदलंबुद्धिस्ततो मत्स्थानमाव्रजे ' ॥ २७
इति स्वर्गगतस्यापि यावन्नेत्रैः श्रियः पते! ।
स्वतेजःपुञ्जपादाब्जसौन्दर्यामृतपायिनः ॥ २८
तृष्णा शान्ताऽधुना नापि तस्मात् स्वर्गे स्थिरा स्थितिः ।
श्रीश! ते पादसौन्दर्यं लेखानां महतामपि ॥ २९
यद्येवं दुर्लभमभूत् इतरेषान्तु का कथा? ।
विष्णो! ते पादरेखाणां माहात्म्यं लोकपावनम् ॥ ३०

विज्ञापनं करिष्यामि स्वपराधं क्षमस्व मे ।
पादमाहात्म्यश्रोतॄणां भक्तानां भक्तवत्सल! ॥ ३१
महाज्ञानतमो भित्त्वा कृत्वा ज्ञानप्रकाशनम् ।
त्वन्मार्गदर्शनार्थाय चक्ररेखां पदेऽधरः ॥ ३२
पादमाहात्म्यमन्तॄणां साङ्गवेदचतुष्टयम् ।
इतिहासपुराणानि मन्त्रोपनिषदात्मिकाः ॥ ३३
सर्वविद्या ददानीति दररेखां पदेऽधरः ॥
पादमाहात्म्यध्यातॄणां उपद्रवकरान् खलान् ॥ ३४
दैत्यरक्षःपिशाचादीन् कूष्माण्डब्रह्मराक्षसान् ।
सञ्चूर्णयामीति हरे! गदारेखां पदेऽधरः ॥ ३५
पादमाहात्म्यवक्तॄणां उत्तमे मन्दिरे सदा ।
पद्मया भार्यया साकं पद्मजेन सुतेन च ॥ ३६
कुटुम्बी पद्मनाभोऽहं वसामीत्येव सूचयन् ।
पद्मरेखां पादपद्मे पद्मेश! त्वं धरन्नसि ॥ ३७
विरजा मानससरो धनुष्कोटिर्महागहा ।
गङ्गादिसर्वतीर्थानि त्वत्पादाब्जे वसन्ति हि ॥ ३८
सहस्रपत्रपूर्वाणि जायन्ते तेषु नित्यशः ।
इति सूचयितुं पादे पद्मरेखां धरन्नसि ॥ ३९
पद्मा हृत्पद्मसंस्थाऽपि पादपद्मस्य मूलगा ।
पश्यन्ती नेत्रपद्माभ्यां तत्सौन्दर्यमलौकिकम् ॥ ४०
ध्यायन्ती च स्वहृत्पद्मे तन्माहात्म्यं श्रुतीरितम् ।
भजन्ती करपद्माभ्यां अङ्केऽर्चनकरी सदा ॥ ४१
इति सूचयितुं पादे पद्मरेखां धरन्निसि ।
पादपङ्कजमाहात्म्यं लिखित्वैव स्वहस्ततः ॥ ४२

दातॄणां वैष्णवाग्र्येभ्यो महाघौघविभेदनम् ।
करोमीति ज्ञापनाय वज्ररेखां पदेऽधरः ॥ ४३

माहात्म्यस्यार्चकानान्तु गजान् कामादिसंज्ञितान् ।
अदम्यान् दमयानीति ह्यङ्कुशाख्यां पदेऽधरः ॥ ४४

श्रुत्वाऽऽदरेण सन्तुष्टान् भक्तान् ध्वजवदुच्छ्रितान् ।
करोमीति ज्ञापनाय ध्वजरेखां पदेऽधरः ॥ ४५

अबग्न्यनिलखाहङ्कृन्महत्तत्त्वगुणत्रयैः ।
क्रमाद्दशगुणैरण्डं आवृतं परमाद्भुतम् ॥ ४६

यन्नखाग्राद्रिनिर्भिन्नं तत्पादं को नु वर्णयेत् ! ।
शेषो महत्तपस्तप्त्वा त्वामाराध्य जगत्पतिम् ॥ ४७

त्वत्प्रसादान्महद्भाग्यं यत अपि सुदुर्लभम् ।
शय्यासनं पादुके तत् आतपत्रमभूत्तव ॥ ४८

तत्सुखं तु रमा दृष्ट्वा मेने शेषैकभाजनम् ।
अहमेवानुभोक्ष्यामि मत्पतेरङ्गसङ्गजम् ॥ ४९

आतपत्रेण यत्प्राप्तं पादुकाभ्याञ्च यत्सुखम् ।
सर्वभाग्यं ममैव स्यात् इति वक्षःस्थिताऽपि सा ॥ ५०

वैकुण्ठादिषु लोकेषु चतुर्दशसु वै तदा ।
ब्रह्माण्डान्तर्बहिश्चापि सर्वहृत्कमलेष्वपि ॥ ५१

मद्भर्तृपत्नि यदा यत्र वर्तते तत्र तत्र हि ।
क्रीडावनमभून्मन्दवायुगन्धादिरञ्जितम् ॥ ५२

मल्लिकाकेतकीजातिचम्पकैः कुसुमान्वितैः ।
खर्जूरपनसद्राक्षाकदलीनारिकेलकैः ॥ ५३

बदरीमातुलुङ्गैश्च कपित्थैश्चूतदाडिमैः ।
जम्बूजम्बीरक्रमुकप्रमुखैः फलनायकैः ॥ ५४

पारिजातैः कल्पवृक्षैः नित्यन्तु फलसान्द्रकैः ।
श्रीचन्दनेक्षुमन्दारैः सङ्कुलं मधुकादिभिः ॥ ५५
तस्मिन् सरः स्वच्छनीरं स्वर्णसोपानमण्डितम् ।
नवरत्नाभकमलैः सुवर्णाभकुशेशयैः ॥ ५६
पीतवर्णैरुत्पलैश्च रक्तनीलोत्पलान्वितम् ।
मत्स्यकच्छपहंसाढ्यं मत्तषट्पदनादितम् ॥ ५७
तत्र रत्नमयं क्रीडामण्डपं चाभवद्रमा ।
दिव्यं रत्नमयं तेजःपुञ्जपीठमभून्मुदा ॥ ५८
तत्र त्वामर्चयन्त्यम्बा षोडशाद्युपचारकैः ।
पायसान्नव्यञ्जनादिपञ्चभक्ष्यामृतानि च ॥ ५९
नूतनानि पवित्राणि नानारुचिफलानि च ।
आर्द्रकादीनि मूलानि स्वादूनि स्वर्णपात्रके ॥ ६०
नित्यतृप्तायार्पयन्ती पूर्णकामाय चादरात् ।
निरङ्कसर्वसाराय सर्वसारात्मिका स्वयम् ॥ ६१
अथात्मानं कल्पयन्ती दोलामञ्चं मनोहरम् ।
सुवर्णशृङ्खलालम्बं सुविशालं सुलक्षणम् ॥ ६२
प्रवालपादसंयुक्तं सुवज्रफलकैर्युतम् ।
ओतं प्रोतं स्वर्णपट्टैः माणिक्यस्तबकैर्वृतम् ॥ ६३
जाम्बूनदवितानाढ्यं मुक्तास्तबकरञ्जितम् ।
भूरूपाऽभूत् स्वयं शय्या श्रीरूपा सोपबर्हणम् ॥ ६४
नीलाऽभूत्पादसेवार्थं ताम्बूलं भोगसाधनम् ।
सुवर्णदण्डव्यजनं विद्युदाभसुचामरे ॥ ६५
वैडूर्यस्तबकच्छत्रं पादुके रत्नपीठके ।
सर्वराजोपचारौघा राजचिह्नानि यानि च ॥ ६६

सर्वाण्यभूद्रमा देवी देवायानन्ततेजसे ।
भोग्यवस्तुस्वरूपेण तव सेवाभिलाषिणी ॥ ६७

महानन्दाम्बुधौ मग्ना रमते सा रमा त्वया ।
रमसे रमयैव त्वं वैकुण्ठादिषु धामसु ॥ ६८

प्रत्येकावरणैः स्वस्वमूर्तिभिः ब्रह्मपूर्वकैः ।
त्रिदशैर्दशदिक्पालैः सेवितः परमासने ॥ ६९

श्रीनिवास ! रमानाथ ! त्वन्नाभ्यब्जे चतुर्मुखम् ।
गिरीशमन्तःकरणे ह्यङ्गेष्विन्द्रादिदेवताः ॥ ७०

ऋष्यादींश्च यथावत्त्वं सर्वजीवांश्चतुर्विधान् ।
सृष्ट्वा तेष्वन्तराविश्य बहिः स्थित्वाऽसि पालकः ॥ ७१

अत्यन्तभिन्नास्ते सर्वे पृथग्जीवा जडात्मकाः ।
पारतन्त्र्यादिदोषोज्झः स्वातन्त्र्यादिगुणोर्जितः ॥ ७२

निरपेक्षो नित्यतृप्तः पूर्णकामस्त्वमार्द्रहृत् ।
सत्यकृत् सत्यसङ्कल्पो माब्रह्मेशेन्द्रवन्दितः ॥ ७३

सर्वेषां परकस्त्वं हि मुक्तामुक्तनियामकः ।
अघट्यघटने शक्तो ह्यगण्यगुणमण्डितः ॥ ७४

अचिन्त्याश्चर्यचर्यस्त्वं ब्रह्माण्डान्तर्बहिःस्थितः ।
अणोरणीयान् महतो महीयान् सर्वगः समः ॥ ७५

सर्वाधारः सर्वसाक्षी सर्वापेक्ष्योऽतिसुन्दरः ।
सर्वोत्तमश्च सर्वज्ञः सर्वस्वामी च सर्वदः ॥ ७६

सर्वशक्तोऽज्ञेयचर्यो व्यक्तोऽव्यक्तः सनातनः ।
शेषोऽशेषश्च निर्लिप्तो ब्रह्मण्यः शाश्वतः शुभः ॥ ७७

चतुर्वर्णैः सदा हीनः चतुर्धर्मप्रदर्शकः ।
चतुःपुमर्थदाता च चतुर्मोक्षप्रदः श्रुतः ॥ ७८

अधोक्षजोऽप्राकृतस्त्वं अनन्तमहिमा तव ।
मूलरूपी ह्यनन्तस्त्वं अवतारास्तथा श्रुताः ॥ ७९
नामधेयान्यनन्तानि ज्ञानानन्दादयो गुणाः ।
अनन्तवेदवेद्यस्तैः अवेद्योऽनन्तसौख्यदः ॥ ८०
अहो भाग्यमहो भाग्यं रमेश ! त्वत्पदाम्बुजे ।
निविष्टमनसां सौख्यं इहामुत्राभिवर्धते ॥ ८१
तव प्रसादलेशस्य लेशलेशातिलेशतः ।
लवमात्रं यैः सुलब्धं तैरलब्धं न किञ्चन ॥ ८२
चरित्राण्यतिचित्राणि महान्ति च बहून्यपि ।
तव नानावतारेषु दर्शयस्यनुवर्तिनाम् ॥ ८३
कीटोऽपि त्वत्कृपालेशात् साम्राज्यमनुभुक्तवान् ।
त्वत्पादपद्मसम्पर्कलेशलेशातिलेशतः ॥ ८४
दृष्टदिव्याङ्गनेऽभूद्धि मनुष्याणां तु किं ब्रुवे ! ।
अत एवार्जुने सूतो बलेश्च द्वारपो ह्यभूः ॥ ८५
इन्द्रे त्वं दययाऽत्यन्तं बलिं याचितवानसि ।
गजेन्द्ररक्षणे दूतान् द्वारपान् वाप्यनादिशन् ॥ ८६
अन्वधावः स्वयं शीघ्रं क्षुद्रनक्रोन्मुमुक्षया ।
‘वैकुण्ठं वा परित्यक्ष्ये न भक्तांस्त्यक्तुमुत्सहे ॥ ८७
अतिप्रिया हि मे भक्ता’ इति सङ्कल्पवानसि ।
कामधेनुः कल्पवृक्षः चिन्तामणिरिति त्रयम् ॥ ८८
वेङ्कटेश त्वमेवासि शेषगे सर्वदानतः ।
ददाति कामानन्नादीन् मणिर्धेनुश्च पादपः ॥ ८९
न चापवर्गं स्वर्गं वा तेषां शक्तिश्च तादृशी ।
यदि त्वं सुप्रसन्नोऽसि सर्वार्थान् सम्प्रदास्यसि ॥ ९०

जात्यन्धानाञ्च चक्षूंषि दासि त्वन्मूर्तिदर्शनात् ।
श्रोत्राणि बधिराणाञ्च त्वत्कथाश्रवणात्तथा ॥ ९१

अनेडमूकं वाचालं करोष्यध्ययनान्वितम् ।
मन्दबुद्धिं प्राज्ञतमं साङ्ख्ययोगसमाधिगम् ॥ ९२

अकरञ्च करौ दत्त्वा करोषि तव पूजकम् ।
अपदञ्च पदौ दत्त्वा त्वत्तीर्थक्षेत्रगामिनम् ॥ ९३

यद्यद्दुःखं भवेद्भक्ते तत्तत्सद्यो हरिष्यसि ।
कुब्जत्वकुष्ठिनानारोगानप्याभिचारिकान् ॥ ९४

हृत्वा ददास्यङ्गदार्ढ्यं सौन्दर्यञ्च दयोदधे ! ।
श्रीनिवास! बहूक्त्या किं? भक्तसर्वार्तिनाशने ॥ ९५

सर्वार्थपूरणे चापि त्वत्समोऽण्डे न कुत्रचित ।
प्रसन्नो नीलमेघस्त्वं श्रीभूविद्युत्समन्वितः ॥ ९६

हृद्व्योमगस्त्रितापघ्नो भक्तसर्वेष्टवार्षुकः ।
अभीष्टाष्टमवाराशौ निमज्ज्योन्मज्जनं निजम ॥ ९७

आनन्दाष्टमसुद्वीपे संस्थापयसि चादरात् ।
सर्वसौख्यं ददास्यत्र स्वमुक्तानन्दवृद्धिदः ॥ ९८

इति श्रीमदादित्यपुराणे श्रीवेङ्कटाचलमाहात्म्ये भगवद्गुण-
कथानुवर्णनं नाम द्वितीयोऽध्यायः ।

---

अथ तृतीयोऽध्यायः



## देवशर्मकृतश्रीश्रीनिवासस्तुतिः

देवशर्मा— 'अनन्तवेदसंवेद्य! लक्ष्मीनाथान्तकारण! ।
ज्ञानानन्दैश्वर्यपूर्ण! नमस्ते करुणाकर ॥ १

नक्षत्राणि च गण्यन्ते पांसवश्च क्षणादयः ।
त्वद्वीर्याणि न गण्यन्ते ब्रह्मणा रमयाऽपि वा ॥ २
तथाऽप्यहं भक्तदासदासदासो यथामति ।
स्तौमि त्वां वेङ्कटाधीश ! त्वद्भक्तः प्रेरितस्त्वया ॥ ३
श्रीवेङ्कटेश ! मत्स्वामिन् ज्ञानानन्ददयानिधे ! ।
भक्तवत्सल ! भो विश्वकुटुम्बिन् अधुनाऽव माम् ॥ ४
सत्येशं सत्यसङ्कल्पं सत्यं सत्यव्रतं हरिम् ।
सत्यचर्यं सत्ययोनिं सत्यशीर्षमहं भजे ॥ ५
श्रवणात् सर्वपापघ्नं मननात् पुण्यवर्धनम् ।
स्वध्यानात् सिद्धिदं विष्णुं प्रेक्षणान्मोक्षदं भजे ॥ ६
श्रीवेङ्कटेशं लक्ष्मीशं अनिष्टघ्नमभीष्टदम् ।
चतुर्मुखात्मतनयं श्रीनिवासं भजेऽनिशम् ॥ ७
यदपाङ्गलवेनैव ब्रह्माद्याः स्वपदं ययुः ।
महाराजाधिराजं त्वां श्रीनिवासं भजेऽनिशम् ॥ ८
अनन्तवेदसंवेद्यं निर्दोषं गुणसागरम् ।
अतीन्द्रियं नित्यमुक्तं श्रीनिवासं भजेऽनिशम् ॥ ९
स्मरणात् सर्वदोषघ्नं श्रवणादिष्टवर्षिणम् ।
दर्शनान्मुक्तिदं वीरं श्रीनिवासं भजेऽनिशम् ॥ १०
अशेषशयनं शेषशयनं शेषशायिनम् ।
शेषाद्रीशमशेषं च श्रीनिवासं भजेऽनिशम् ॥ ११
भक्तानुग्राहकं विष्णुं सुशान्तं गरुडध्वजम् ।
प्रसन्नवक्त्रनयनं श्रीनिवासं भजेऽनिशम् ॥ १२
भक्तभक्तिसुपाशेन बद्धसत्पादपङ्कजम् ।
सनकादिध्यानगम्यं श्रीनिवासं भजेऽनिशम् ॥ १३

गङ्गादितीर्थजनकपादपद्मं सुतारकम् ।
शङ्खचक्राभयकरं श्रीनिवासं भजेऽनिशम् ॥ १४
सुवर्णमुखितीरस्थं सुवर्णोडच्यं सुवर्णदम् ।
सुवर्णाभं सुवर्णाङ्कं श्रीनिवासं भजेऽनिशम् ॥ १५
श्रीवत्सवक्षसं श्रीशं श्रीलोलं श्रीकरग्रहम् ।
श्रीमन्तं श्रीनिधिं श्रीड्यं श्रीनिवासं भजेऽनिशम् ॥ १६
वैकुण्ठवासं वैकुण्ठत्यागं वैकुण्ठसोदरम् ।
वैकुण्ठदं विकुण्ठाजं श्रीनिवासं भजेऽनिशम् ॥ १७
वेदोद्धारं मत्स्यरूपं स्वच्छाकारं यदृच्छया ।
सत्यव्रतोद्धरं सत्यं श्रीनिवासं भजेऽनिशम् ॥ १८
महागाधजलाधारं कच्छपं मन्दरोद्धरम् ।
सुन्दराङ्गञ्च गोविन्दं श्रीनिवासं भजेऽनिशम् ॥ १९
वरं श्वेतवराहाख्यं संहृत्य धरणीहरम् ।
दंष्ट्राकृतधरोद्धारं श्रीनिवासं भजेऽनिशम् ॥ २०
प्रह्लादाह्लादकं लक्ष्मीनृसिंहं भक्तवत्सलम् ।
दैत्यमत्तेभदमनं श्रीनिवासं भजेऽनिशम् ॥ २१
वामनं वामनं पूर्णकामं वामनमाणवम् ।
मायिनं बलिसम्मोहं श्रीनिवासं भजेऽनिशम् ॥ २२
इन्द्राननं कुन्ददन्तं कुराजघ्नं कुठारिणम् ।
सुकुमारं भृगुऋषेः श्रीनिवासं भजेऽनिशम् ॥ २३
श्रीरामं दशदिग्व्यासं दशेन्द्रियनियामकम् ।
दशास्यघ्नं दाशरथिं श्रीनिवासं भजेऽनिशम् ॥ २४
गोवर्धनोद्धरं बालं वासुदेवं यदूत्तमम् ।
देवकीतनयं कृष्णं श्रीनिवासं भजेऽनिशम् ॥ २५

नन्दनन्दनमानन्दमिन्द्रनीलं निरञ्जनम् ।
श्रीयशोदायशोदञ्च श्रीनिवासं भजेऽनिशम् ॥ २६

गोवृन्दावनगं वृन्दावनगं गोकुलाधिपम् ।
उरुगायं जगन्मोहं श्रीनिवासं भजेऽनिशम् ॥ २७

पारिजातहरं पापहरं गोपीमनोहरम् ।
गोपीवस्त्रहरं गोपं श्रीनिवासं भजेऽनिशम् ॥ २८

कंसान्तकं शंसनीयं संशान्तिं संसृतिच्छिदम् ।
संशयच्छेदिसंवित्कं श्रीनिवासं भजेऽनिशम् ॥ २९

कृष्णापतिं कृष्णगुरुं कृष्णामित्रमभीष्टदम् ।
कृष्णात्मकं कृष्णसखं श्रीनिवासं भजेऽनिशम् ॥ ३०

कृष्णाहिमर्दनं कृष्णं कृष्णोपवनलोलुपम् ।
कृष्णातातं महोत्कृष्टं श्रीनिवासं भजेऽनिशम् ॥ ३१

बुद्धं सुबोधं दुर्बोधं बोधाऽत्मानं बुधप्रियम् ।
विबुधेशं बुधैर्बोध्यं श्रीनिवासं भजेऽनिशम् ॥ ३२

कल्किनं तुरगारूढं कलिकल्मषनाशनम् ।
कल्याणदं कलिघ्नञ्च श्रीनिवासं भजेऽनिशम् ॥ ३३

हरिं हंसं कृष्णं नरहरिमनन्तं मधुरिपुं
हृषीकेशं यज्ञं कपिलमृषभं वाजिवदनम् ।
नरं व्यासं नारायणमनघमात्मानममृतं
भजे दत्ताऽत्रेयं पुरुषमथ धन्वन्तरिमपि ॥ ३४

अनन्तरूपस्वमनन्तचर्यमनन्तवेदैरनुवर्णनीयम् ।
अनन्तनामानमनन्तदेवमनन्तकल्याणगुणाभिरामम् ॥ ३५

अनन्तशक्त्यंशमनन्तविक्रमं ह्यनन्तदेहे च शयानमीश्वरम् ।
अनन्तसौभाग्यमनन्तनेत्रमनन्तपादादिमनन्तसौख्यम् ॥ ३६

असुराचलौघहरचक्रधरं दुरिताचलौघहरवज्रधरम् ।
करुणाचलौघभरचित्तवरं कनकाचलौघदरपद्मकरम् ॥ ३७

भुवनेषु वेङ्कटेश्वर ! बहुपुरुषार्थप्रदाननिपुणस्त्वम् ।
नो चेद्व्यक्ततया त्वं बहून्नाद्रेस्थले कुतो वससि ? ॥ ३८

गुणौघैरपारं स्फुरद्रत्नहारं
स्मरद्दोषहारं स्वभक्तेष्टपूरम् ।
भजे वेङ्कटेशं फणीशाद्रिवासं
सदा मन्दहासं श्रिया सद्विलासम् ॥ ३९

वेङ्कटेश ! चरणौ तव वन्दे सर्वतीर्थशरणौ शरणौ मे ।
माविधातृशिववीशफणीशेन्द्रार्कसोमहुतभुङ्मुखवन्द्यौ ॥ ४०

श्रीनिवास ! चरणौ तव वन्दे लोकपावन ! सुकुङ्कुमवर्णौ ।
श्रीप्रदौ किल सुपितृगणानां श्रीऋगादिनिगमागमवेद्यौ ॥ ४१

भजे भजकसौख्यकृद्विजकटाक्षसम्प्रेक्षणं
परात्परतरं दरं दधतमब्जचक्रे गदाम् ।
चतुर्भुजमधोक्षजं कमलजेशपूर्वार्चितं
वरोद्धखलान् बहून् झटिति संहरन्तं रिपून् ॥ ४२

अज्ञानसागरसमुत्तरणे प्रशस्तं
सुज्ञानसेतुरचने निपुणं बुधेड्यम् ।
लक्ष्मीपतिं सुरवरार्चितवेङ्कटेशं
दारिद्र्यदुःखदुरितौघनिशाचरघ्नम् ॥ ४३

लक्ष्मीनाथं कमलनयनं हारकेयूरभूषं
सर्वव्याप्तं बहुगुणभरं दोषदूरं दयाऽब्धिम् ।
स्वानां तापत्रयहरमजं निर्विशेषं विशेषं
लोकातीतं पुरुषमतुलं भावयामीष्टदेवम् ॥ ४४

श्रीमद्वेङ्कटनाथपादजनिता गङ्गा जगत्पावनी
यस्यापाङ्गनिरीक्षणं विधिभवेन्द्रार्कादिसर्वेष्टदम् ।
यन्नामस्मरणं महाघहरणं स्वर्ग्यञ्च मोक्षप्रदं
यत्पादाम्बुजयुग्मसेवनरतो ब्रह्मादिभिः पूज्यते ॥ ४५
दृष्ट्याद्यत्यन्तदूरं निगमनिचयवेद्यात्ममाहात्म्यपूर्णं
सर्वेषामादिमित्रं रविशशिनयनं पूर्णकारुण्यदेहम् ।
निर्वाणं निष्प्रपञ्चं निरवधिकसमाम्नायसङ्घैरसङ्गैः
गीर्वाणाद्यैरजस्रं स्तुतिनतिनियमैकान्तभक्तैश्च पूज्यम् ॥ ४६
किङ्करशङ्कर! बहुकरुणा तव बहुचरितं समस्तभुवनेषु ।
ज्ञापयसि भक्तिमद्भ्यः फणिपतिशुकपैलनारदप्रमुखैः ॥ ४७
वेङ्कटेशमनुसृत्य य आस्ते तस्य भूरि सुभगं दशदिक्षु ।
ऐहिकं त्रिदिवसौख्यमतुल्यं मोक्षमाशु लभते गुणसाम्यम् ॥ ४८
श्रीनिधिं त्विह जहाति मदान्धो योऽस्य दुःखमसमं दशदिक्षु ।
ऐहिकं भवति रौरवकुम्भीपाकपावकतमिस्रममुत्र ॥ ४९
विपद्घ्नं शुभदोग्धारं भक्तानां वशवर्तिनम् ।
लोकपूज्यं रमानाथं भजेऽहं प्रतिजन्मसु ॥ ५०
भक्तौघानुग्रहार्थाय त्यक्त्वा वैकुण्ठमुत्तमम् ।
धरण्यामवतीर्णोऽसि वरेण्यो वरदोऽर्चितः ॥ ५१
अप्यल्पमात्रं परवस्तु लोके नैवापहार्यं किल सत्यसन्ध! ।
जनैरनेकैर्बहुजन्मयत्नैः आयाससाध्यं बहुपापसञ्चयम् ॥ ५२
हरस्यशेषं स्मृतिमात्रतस्त्वं वाणीमनोदृष्टिपथाद्यगोचरः ।
विलक्षणस्थावरजङ्गमात्मकं वीक्षे बहूपायविशारदं त्वाम् ॥ ५३
तव रूपाण्यनन्तानि चरित्राणि तथैव च ।
स्मरतां भक्तिपूर्वन्तु महाविभवदानि च ॥ ५४

इहामुत्रातुल्यसौख्यप्रदानि महतामपि ।
अल्पानां किमु वक्तव्यं स्वरूपोद्धारकाणि च ॥ ५५
प्रपद्ये पुण्डरीकाक्षं ईशं भक्तानुकम्पिनम् ।
लोकोत्तरं लोकनाथं परात्परतरं विभुम् ॥ ५६
पुण्यात् त्वद्दयया लब्धं विशेषादकुतोभयम् ।
भगवन्तं विश्ववन्द्यं भूतभव्यभवत्प्रभुम् ॥ ५७
यतो भूतानि जायन्ते येन सर्वमिदं ततम् ।
येन जातानि जीवन्ति यं प्राप्स्यन्ति महालये ॥ ५८
दीपविद्युत्तारकाग्निचन्द्रसूर्यादिदीप्तिमान् ।
यो योगैर्योगयोग्यैश्च दृश्योऽदृश्योऽश्रुतः श्रुतः ॥ ५९

इति श्रीमदादित्यपुराणे श्रीवेङ्कटाचलमाहात्म्ये भगवद्गुणनाम-
महिमानुवर्णनं नाम तृतीयोऽध्यायः ॥

---

अथ चतुर्थोऽध्यायः

## भगवतः विश्वरूपादिवर्णनम्

देवशर्माः— श्रीवेङ्कटेश ! मत्स्वामिन् ! प्रणतार्तिप्रणाशन ! ।
ज्ञानानन्ददयापूर्ण ! विज्ञापनमिदं शृणु ॥ १
यन्मुखं ब्रह्मजनकं यद्बाहू क्षत्रकारणे ।
यदूरुभ्यां वैश्यकुलं यत्पद्भ्यां सेवकोऽभवत् ॥ २
शिरसा द्यौरभूत्तस्य सहस्रांशुश्च नेत्रजः ।
मुखात्पुरन्दरोग्निश्च दिग्देवाः श्रोत्रतोऽभवन् ॥ ३
शीतांशुर्मनसो जातः प्राणाद्वायुरजायत ।
अन्तरिक्षं नाभितोऽभूत् पद्भ्यां भूमिरजायत ॥ ४

यत्कोमलाङ्गैरभवन् भुवनानि चतुर्दश ।
कोमले नाभिकमले ब्रह्माण्डं ब्रह्मणाऽश्रितम् ॥ ५

श्रियःपते! कोऽपि जयेत न मायां यया जनो मुह्यति वेदनार्थम्।
विनिर्जितात्मानमनन्तमायिनं मायापहं त्वां शरणं प्रपद्ये ॥ ६

नमोऽतर्क्याय तर्क्याय सगुणायागुणाय च ।
नमोऽनन्तायान्तकाय वेद्यावेद्यस्वरूपिणे ॥ ७

सिद्धिप्रदस्त्वं किल देववर्य! त्वत्प्रेरितोऽहं तव पादमाप्तः ।
त्वत्पादभक्तो बहिरन्तरात्मनः किमस्ति विज्ञाप्यमशेषसाक्षिणः॥ ८

सुखं नृपालाः सुरदेवमुख्याः ब्रह्मादयस्ते पदपद्मसंस्थिताः ।
त्वत्किंकरास्तेऽपि पृथग्विभाविताः कुरुष्व शम्भो मुनिदेवमित्र! ॥ ९

उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गान्तकोग्र-
व्यालोत्कृष्टे विषयमृगतृष्णात्मगेहोरुभारः ।
द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थे
प्राप्तः पादौ शरणद! कदा यामि ते कामवश्यः ॥ १०

भवाब्धितारं कटिवर्तिहस्तं स्वर्णाम्बरं रत्नकिरीटकुण्डलम् ।
प्रलम्बिसूत्रोत्तममाल्यभूषितं नमाम्यहं वेङ्कटशैलनायकम् ॥ ११

जाम्बूनदैराभरणैः प्रदीप्तं वक्षःस्थले दक्षकुचोर्ध्वभागे ।
श्रीवत्सलक्ष्म्यञ्चितदिव्यरूपं श्रीवेङ्कटाधीशमहं प्रपद्ये ॥ १२

संस्थितं सुविमानान्तः विरिञ्च्याद्यैश्च सेवितम् ।
चामरव्यजनच्छत्रैः शरदिन्दुमुखं भजे ॥ १३

भक्तानुकम्पी गरुडध्वजस्तत् स्कन्धं त्वमारुह्य किरीटकुण्डली ।
पीताम्बरश्चारुसुमन्दहासः श्रीकौस्तुभश्चक्रवराभयाङ्कितः ॥ १४

सजयो विजयश्चैव दृश्योऽदृश्यः श्रुतोऽश्रुतः ।
सभाषणोऽभाषणश्च वाच्योऽवाच्यो वृषोऽवृषः ॥ १५

त्वत्पादपद्मयुगलं श्रेयआसक्तमानसाः ।
विसृज्योभयतः सङ्गं ब्रह्माद्याः समुपासते ॥ १६
माहात्म्यं केन सन्दृश्यं रमाया रमणस्य ते ।
यत्किञ्चिद्द्रष्टुमिच्छामि मायिनोऽमायिनः शुभम् ॥ १७
सर्वप्राणिहृदावासं वासुदेवं जगद्धितम् ।
शरण्याग्र्यं देवदेवं प्रधानपुरुषं भजे ॥ १८
नमोऽव्यक्ताय सूक्ष्माय परात्परतराय च ।
जगत्कारणकर्त्रे च साक्षिणेऽव्यक्तमूर्तये ॥ १९
नमस्ते वासुदेवाय नमः सङ्कर्षणाय च ।
प्रद्युम्नायानिरुद्धाय योगिहृत्पद्मवासिने ॥ २०
पञ्चभूतविसृष्टाय पञ्चमात्रात्मकाय च ।
ज्ञानकर्मेन्द्रियेशाय हृषीकेशाय ते नमः ॥ २१
विष्णवे वैष्णवेशाय जिष्णवे जयदायिने ।
इष्टप्रदाय चेष्टाय कृष्णायोत्कृष्टकर्मणे ॥ २२
क्षराक्षरोत्तमायाथ स्वक्षरेशाक्षराय च ।
कुक्षिस्थपक्षिसङ्घाय क्षयाऽक्षयकराय ते ॥ २३
नमो भवाय भावाय धीराय परमेष्ठिने ।
वीराय वीरवपुषे ऋषये परमात्मने ॥ २४
नमो नारायणाभिख्याधारणोद्धारणाय च ।
नमः समर्हणार्हाय धरणीधररूपिणे ॥ २५
अर्च्यार्चायाच्युतायापि वन्द्यवन्द्यपदाय च ।
हिरण्यगर्भगर्भाय नमः शिवशिवाय च ॥ २६
स्कन्दाय शिपिविष्टाय सच्चिदानन्दरूपिणे ।
कर्मज्ञानद्विरूपाय श्रुतिस्मृत्यालयाय ते ॥ २७

यमाय नियमायाथ दानव्रतकराय च ।
तपस्विने च तप्याय तापत्रयहराय च ॥ २८
यज्ञाय विश्वाय सुमङ्गलाय सुतीर्थपादाय सुतारकाय ।
प्रसन्नलोकानुगुणाय शम्भवे शुद्धाय शश्वद् गुणवर्मणे नमः ॥२९
कर्मिणे कर्मलिप्ताय ज्ञानाय ज्ञानदायिने ।
नित्यमुक्ताय हरये नित्यमुक्तिप्रदायिने ॥ ३०
शुद्धं वपुःपरमयोगमतुल्यसौख्यं
भूमिं द्युलोकमुत तत्त्वमतिं सुभक्तिम् ।
वैराग्यमन्यसुगुणान् भजतां ददानं
श्रीशं दयोदधिमहं शरणं प्रपद्ये ॥ ३१
सुलभं दुर्लभं वन्दे भगवन्तं सनातनम् ।
सदसत्क्षेत्रगं विष्णुं मूर्तामूर्तं शुभाशुभम् ॥ ३२
गोविन्दं गोगणातीतं कल्मषघ्नमकल्मषम् ।
प्रतिकल्पेनल्पकल्पतरुं सर्वार्थकल्पकम् ॥ ३३
दुष्टभावप्रमत्तो वा नामाद्युच्चारकोऽपि यः ।
ब्रह्महत्यादिपापानि दहत्येव च नान्यथा ॥ ३४
अज्ञानादथ वा दम्भात् पुण्यश्लोकस्य नाम ते ।
यो वदेत्तानि नश्यन्ति तूलराशिर्यथानलात् ॥ ३५
क्षुधितो दुःखितः श्रान्तः तन्नाम यदि संस्मरेत् ।
तस्य दुःखानि सर्वाणि नश्यन्ति क्षणमात्रतः ॥ ३६
सर्वाण्यशुभजातानि दुरितान्यपि यानि च ।
तानि सर्वाणि लभते मत्तस्त्वां व्यस्मरेद्यदि ॥ ३७
न तीर्थयात्रा न च दानयज्ञाः व्रतं तपो नार्चनमन्यदैवतम् ।
यच्छ्रीनिवासस्य च नामकीर्तनं तदेव सर्वार्थसुवृष्टिकारणम् ॥ ३८

यात्रा यज्ञा व्रता धर्मदानान्यन्यान्यसङ्कुचया ।
तव नामस्मृतेर्भक्त्या कलां नार्हन्ति षोडशीम् ॥ ३९
अहो भाग्यमहो! भाग्यं! विष्णुनामानुवर्तिनाम् ।
तेषां दूरो याम्यलोक. स्वर्गो मोक्षश्च यत्पदम् ॥ ४०
माहात्म्यं विष्णुनाम्नो हि वर्णितुं केन शक्यते ।
अजामिलो मृत्युपाशात् मुक्तो वैकुण्ठगो यतः ॥ ४१
अयमेव महाधर्मो नराणां तारकः स्मृतः ।
विष्णौ सदा भक्तियोगः तन्नामग्रहणादिभिः ॥ ४२
नैकोजामिल एव पापजलधिं सन्तीर्णवान् नामतः
प्रह्लादोऽपि गजेन्द्रभूपप्रभृतयो दु खाम्बुधेस्तारिताः ।
यन्नामस्मरणामृताम्बुधिनिमग्नोऽद्यापि गौरीपतिः
यद्ध्याने निरताः प्रजापतिमुखाः प्राप्ता महावैभवम् ॥ ४३
यन्नाम वै सर्वजगद्गुरुस्तत् दुष्कर्मभारांश्च बहून् छिनत्ति ।
स सर्वशक्तिः स हि विश्वरूपः प्रसीद मेऽनन्तनिरुक्तशक्ते!॥ ४४
अनुग्रहार्थं भवतां पदाब्जं अनामरूपस्त्वगुणो ह्यजन्मा ।
नामानि रूपाणि गुणान् क्रियाश्च जन्मानि गृह्णासि नमः प्रसीद ॥ ४५
जन्मादिभिर्जने मोहानुग्रहावधिकारत· ।
करोषि साम्प्रतं भूयोऽनुग्रहस्तु भवेन्मयि ॥ ४६
त्वदपाङ्गलवो भूयात् इहामुत्रेष्टवार्षुकः ।
अन्यथा नास्ति सन्देह इति चित्ते सुनिश्चितम् ॥ ४७
ॐ नमो वेङ्कटेशाय पुरुषाय महात्मने ।
महानुभावाय महामायिनेऽमेयकर्मणे ॥ ४८
स्थलेषु दुर्गेषु जलेषु खेषु गर्भेष्वरण्येषु च कैतवेषु ।
नाम्नैव भाव्यं खलु सर्वलक्षणं मायाविनो विश्वकुटुम्बिनस्ते ॥ ४९

महाविपत्सु त्वन्नामस्मरणं तद्विनाशनम् ।
बहुसम्पत्सु ते नामविस्मृतिः तद्विनाशिका ॥ ५०
तस्मात्त्वन्नामसक्तोऽहं सर्वदा त्वदनुग्रहात् ।
त्वत्प्रेरितस्त्वदीयत्वात् मत्पुण्यं त्वद्दयाबलम् ॥ ५१
न कदाचिद्भयं मेऽस्ति दिव्यनामरतो यतः ।
तथाऽपि ते कृपालेशलेशलेशोऽस्ति मय्यहो ॥ ५२
श्रीश ! चित्रं चरित्रं ते न जाने बहुदुष्कृतिः ।
सर्वज्ञं सर्वदा किं त्वां वदामि कृपयाऽव माम् ॥ ५३
नाम्ना महाघौघहानिः मनः कायौ ततः शुची ।
तं दृष्ट्वा प्रीयसे विष्णो ! ततः सत्कर्मसङ्ग्रहः ॥ ५४
कर्मणा ज्ञानसिद्धिश्च तेन प्रीतिस्तवाद्भुता ।
अपरोक्षमदूरे च मुक्तिरानन्दवर्धिनी ॥ ५५
गोदानकन्यादानानि पृथिवीरेणुसङ्ख्यया ।
दुर्भिक्षे जाह्नवीतीरे प्रत्यहं कोटिभोजनम् ॥ ५६
त्वन्नामस्मरणात्तुल्यं नाममाहात्म्यमीदृशम् ।
तस्मान्नामस्मृतिः सिद्धा सुलभा पुरुषार्थदा ॥ ५७
लोकोत्तरस्त्वयं मार्गः प्रजानामकुतोभयः ।
यत्र भक्तिवशाः सर्वे नामस्मृतिपरायणाः ॥ ५८
येनैकदा विष्णुपदाब्जयुग्मे समर्पितं चित्तमनन्यबुद्ध्या ।
यमोऽपि तद् दूतगणाः सपाशाः पश्यन्त्यघौघाश्रयमप्यहो न तम् ॥ ५९

इति श्रीमदादित्यपुराणे श्रीवेङ्कटाचलमाहात्म्ये भगवद्गुणनाम-
महिमानुवर्णनं नाम
चतुर्थोऽध्यायः ।

---

अथ पञ्चमोऽध्यायः

## देवशर्माणं प्रति स्तुतिप्रसन्नश्रीनिवासकृतवरप्रदानादिवर्णनम्

देवशर्मा—

'सर्वलोकजननी कमलालया देशकालवितता रमणी ते ।
साऽतिमृद्वतसिकाकुसुमाभोत्सङ्गगा च तव हृत्कमलस्था ॥ १
ब्रह्मशङ्करपदार्पणदक्षा सर्वलोकशुभदा द्रवचित्ता ।
यत्कटाक्षलवमात्मपदस्था प्रार्थयन्त्यजशिवेन्द्रमुखा हि ॥ २
भारतीप्रमुखसुन्दरयोषिज्जालजैत्रबहुसुन्दररूपाम् ।
आलिलिङ्गिषसि यां करपद्मैः मन्दहासवदनां सरसस्त्वम् ॥ ३
नित्यमुक्ता दोषदूरा त्वदूनाधिकसद्गुणा ।
त्वत्पादपूजने नित्यं बद्धकङ्कणभूषिता ॥ ४
अभीष्टदाने भक्तानां कल्पवृक्षायिता रमा ।
चिन्तामणिः कामधेनुः करुणासागरायिता ॥ ५
लक्ष्मीः पुरस्तात् पश्चाच्च दक्षिणोत्तरतश्च या ।
ऊर्ध्वाधरादिभागस्था जगत्सृजति पाति हि ॥ ६
गुणैस्तता प्रसवितृवरणीयगुणोर्जिता ।
प्रकाशमतिमूर्तिश्च ध्येया बुद्धिप्रचोदिका ॥ ७
दुरन्नात् दुर्ग्रहत्वाच्च पातकादुपपातकात् ।
स्वगायकत्राणदक्षा गायत्रीत्युदिता रमा ॥ ८
सवितुर्द्योतकत्वाच्च भक्तेष्टप्रभवे रता ।
चराचरप्रसविता सावित्री कमला स्मृता ॥ ९
वागीशत्वात् वचोदानात् कीर्तिता च सरस्वती ।
कान्तिरत्यादिदानाच्च भारतीत्यादिनामिका ॥ १०

गुणपूर्णत्वयोगेन ब्रह्मा ब्रह्मवशे स्थिता ।
ब्रह्माण्डान्तर्बहिर्व्याप्ता स्थूला सूक्ष्मा च मध्यमा ॥ ११
कर्मणां गुरुरूपाणां सर्वेषाञ्च नियामिका ।
यद्दयापाङ्गलेशेन त्वैहिकीः सर्वसम्पदः ॥ १२
स्वर्विरक्तीशसद्भक्तिज्ञप्तिमुक्तीः व्रजन्ति हि ।
लोकातीता लोकपूज्या तवात्यन्तप्रिया मता ॥ १३
सर्वशक्ता सर्वसुखा सर्वलक्षणसंयुता ।
अनेकगुणसम्पूर्णा पूर्णकामा च सर्वदा ॥ १४
अप्रमेया प्रमेयाऽपि समस्तपुरुषार्थदा ।
सुमहैश्वर्यसौभाग्या तथाऽपि त्वाऽनुवर्तिनी ॥ १५
स्मरति ध्यायति स्तौति नमत्यर्चति पश्यति ।
तपति त्वां जपति च सेवते त्वां प्रतीक्षते ॥ १६
नित्यानपायिनी नम्रा सम्प्रार्थयति सर्वदा ।
किमुतान्येऽल्पजीवाश्च मादृशा वृत्तिवर्जिताः ॥ १७
दरिद्रा बन्धुरहिता अनाथा जीवनार्थिनः ।
तेषां त्वत्प्रार्थनाकाङ्क्षा नाश्चर्यं भुवनत्रये ॥ १८
श्रीवेङ्कटेश ! मत्स्वामिन् ज्ञानानन्ददयानिधे ! ।
शरणागतसन्त्राणकारणाभीष्टवार्षुक ॥ १९
श्रीश ! ते रूपकर्माणि ब्रह्मरुद्राहिपादिभिः ।
अगण्यानि ह्यवेद्यानि ह्यचिन्त्यान्यद्भुतानि च ॥ २०
एवं पूर्वं त्वन्महिम्नि नाहं शक्तोऽस्मि वर्णने ।
कश्चाहं का च मे शक्तिः किमिति स्तौमि मन्दधीः ? ॥ २१
अलसोऽहमहङ्कारी चाज्ञो मूर्खः शठः खलः ।
ज्ञानभक्त्यादिहीनश्च कामक्रोधादिपूरितः ॥ २२

मनोजयविहीनश्च सदा विषयलम्पटः ।
पांसूनां वृष्टिविन्दूनां मद्दोषाणां मितिर्न हि ॥ २३
गुणास्त्वयि यथा पूर्णा दोषाः पूर्णास्तथा मयि ।
अलसत्वादहंकारात् अज्ञानाल्लोभतो मया ॥ २४
दम्भात् प्रमादाद्दाक्षिण्यात् स्वभावात् सङ्गतः कृतान् ।
असङ्ख्यानपराधान्मेऽगणयित्वा क्षमस्व माम् ॥ २५
पिता माता गुरुर्भ्राता सखा बन्धुस्त्वमेव मे ।
विद्या सत्कर्म वित्तञ्च पुरः पृष्ठे च पार्श्वयोः ॥ २६
मूर्ध्नि हृत्कमले येऽन्तः बहिर्जन्मनि जन्मनि ।
कुलस्वामीष्टदेवो नो वृतः पितृपितामहैः ॥ २७
सर्वं त्वमेव लक्ष्मीश ! न जाने त्वां विना परम् ।
दुःस्मृतिं हर दूरान्मे विस्मृतिं ते विलोपय ॥ २८
त्वत्स्मृतिं सम्प्रदेह्यद्धा त्वत्समो नास्ति मे प्रियः ।
त्वन्मनास्त्वद्गतप्राणः त्वत्पदाम्बुजसंश्रितः ॥ २९
तव भक्तोऽस्मि दासोऽस्मि शिष्यः पुत्रोऽस्मि केवलम् ।
भृत्यस्त्वमेव विश्वस्य स्मरामि त्वामहर्निशम् ॥ ३०
श्रीहरिर्मम हृत्पद्मकर्णिकास्थोऽतिसुन्दरः ।
पद्मासनसमासीनः इन्द्रनीलसमद्युतिः ॥ ३१
कञ्जकोमलपादाधः कुङ्कुमाधिकवर्णवान् ।
वज्राङ्कुशध्वजाब्जाङ्कपादाब्जनखरत्नवान् ॥ ३२
क्वणन्नूपुरसन्नादवलयाढ्यपदाम्बुजः ।
अतसीपुष्पसङ्काशतेजःपुञ्जोरुरञ्जितः ॥ ३३
नितम्बपीतवसनः स्वर्णकाञ्च्यञ्चितोऽच्युतः ।
विरिञ्च्याधारसौवर्णगम्भीराब्जाभनाभिकः ॥ ३४

ब्रह्माण्डगूहकमृदुश्लक्ष्णरेखात्रये ऽधरः ।
धर्मस्तनोऽधर्मपृष्ठः श्लक्ष्णसूक्ष्मतनूरुहः ॥ ३५
श्रीवत्साङ्कः कौस्तुभाख्यो वैजयन्तीहृदम्बुजः ।
उन्नतांसाऽजानुलम्बिबाहुर्भीतिवरप्रदः ॥ ३६
कुङ्कुमाभकरन्यस्तशङ्खचक्रसुलक्षणः ।
किङ्किणीकङ्कणलसद्वलयाङ्गदभूषितः ॥ ३७
कम्बुग्रीवः सुबिम्बोष्ठः कुन्दकुड्मलदंष्ट्रवान् ।
आदर्शवद्दृश्यसूक्ष्मगण्डयुग्मसुमण्डितः ॥ ३८
सुनासोऽनिमिषः सुभ्रूः करुणापूर्णलोचनः ।
शरत्पूर्णेन्दुवदननतनीलसुकुन्तलः ॥ ३९
अतुल्यतिलकोपेतो रत्नकुण्डलमण्डितः ।
स्फुरद्रत्नकिरीटश्च सर्वलक्षणसंयुतः ॥ ४०
जगद्विलक्षणः श्रीमान् मद्दिव्यो नित्यचित्सुखः ।
सूर्यकोटिप्रतीकाशः चन्द्रकोटिसुशीतलः ॥ ४१
अनन्तवेदैर्ब्रह्माद्यैः अवेद्योऽप्राकृतो हरिः ।
श्रीधराभ्यां समाश्लिष्टो ब्रह्मरुद्रेन्द्रसेवितः ॥ ४२
पूर्णानन्दज्ञानदयामूर्तिः परममङ्गलः ।
मङ्गलाङ्गो मङ्गलाङ्को भक्तमङ्गलदायकः ॥ ४३
करुणामृतपूर्णाभ्यां मां नेत्राभ्यां समीक्षते ।
का चिन्ता मे ! इहामुत्र सर्वारिष्टं हरत्यसौ ॥ ४४
तत्पदाम्बुजविश्वासे सर्वाभीष्टं ददाति हि ।
इति स्मरन्नहोरात्रं तं त्वाहं शरणं गतः ॥ ४५
भोः स्वामिन् ! पूर्णकामस्त्वं सम्पूर्णैश्वर्यवानपि ।
स्वप्रयोजनहीनोऽपि मायया बहुरूपवान् ॥ ४६

लोकोपकरणायैव त्वितरासाध्यकृत्यवान् ।
बह्वद्रीनुद्धरन् सेतु अनायासादकल्पयः ॥ ४७
क्षणेनोत्पादितञ्चापि स्थूलब्रह्माण्डमद्भुतम् ।
वहसि त्वमुपायेन बहुसूक्ष्ममृदूदरे ॥ ४८
एवं महाभारवहस्य विश्वकुटुम्बिनः करुणापूर्णसिन्धोः ।
मम त्वदीयस्य सुसूक्ष्मलेशलवाल्पकस्योद्धरणं हि यत्ते ! ॥ ४९
श्रीवेङ्कटेश ! मत्स्वामिन् ज्ञानानन्ददयानिधे ! ।
दुःखसागरमग्नं मां स्वीयं नोद्धरसे कुतः ? ॥ ५०
श्रीनिवास ! कृपापूर्ण ! भक्तपोषणदीक्षित ! ।
संसारारण्यपतितं दयया नेक्षसे कुतः ? ॥ ५१
भक्तबन्धो ! दयासिन्धो ! त्वत्पादाब्जे नमाम्यहम् ।
सूक्तासूक्तमिदं सर्वं अपराधं क्षमस्व मे ॥ ५२
वरं वरञ्च वरये भक्तिं त्वत्पादयोः स्मृतिम् ।
सदा नानार्थविज्ञानं देहीहामुत्र सौख्यदम् ॥ ५३
श्रीस्वामितीर्थदुग्धाब्धौ श्वेतद्वीपे सुमण्डपे ।
श्रीभूम्यां विहरन् विष्णो ! मुक्तिं भक्ताय देहि मे ' ॥ ५४
भरद्वाजः— इति स्तुत्वा वेङ्कटेशं रमेशं तूष्णीम्भूतो देवशर्मा सुभक्तः ।
भक्तेभ्योऽभीष्टार्थवर्षप्रवृद्धं साष्टाङ्गन्तं प्राणमत् स्वेष्टदेवम् ॥ ५५
अथ स्तोत्रेण सन्तुष्टः श्रीनिवासः सतां गतिः ।
मेघगम्भीरया वाचा वरदानमथाब्रवीत् ॥ ५६
श्रीभगवान्—'प्रीतोऽहं ते द्विजश्रेष्ठ ! मदुपासनकर्मणा ।
यन्महैश्वर्यसंसिद्धिकारणं स्तोत्रमुत्तमम् ॥ ५७
कृतवानसि तस्मात् त्वं भैषीर्माऽत्र परत्र च ।
मद्भक्तवायुशिष्यस्य गुरुपादावलम्बिनः ॥ ५८

विपन्नाशः सम्पदाप्तिः भूयात् ते मदनुग्रहात् ।
मम भक्तस्य ते गेहे स्वर्णवृष्टिर्दिने दिने ॥ ५९
अयुतायुश्च ते दत्तं पुत्रपौत्रास्तथायुषः ।
शतपूरुषपर्यन्तं भुक्त्वा भोगाननेकशः ।
ततो मत्पदमाप्नोषी ' त्युक्त्वाऽदृश्यो बभूव ह ॥ ६०

श्रीसूतः—

भोः शौनकाद्या मुनयः ! निःसङ्गाश्च तपस्विनः !
भक्तवश्यो वेङ्कटेशः प्रसन्नो भवति ध्रुवम् ॥ ६१
यूयं गत्वा वेङ्कटेशं रमेशं नत्वा स्तुत्वा वेदवेद्यं सुभक्त्या ।
भक्तेभ्योऽभीष्टार्थवर्षप्रवृद्धं सम्प्रीणीध्वं तेन वोऽभीष्टसिद्धिः ॥ ६२
श्रीवेङ्कटेशस्य कथाऽमृतं त्विदं माहात्म्यसारं सुनपस्विमृग्यम् ।
श्रीवेङ्कटेशस्य महाप्रियप्रियं लोके त्वरं देवऋषिप्रियञ्च ॥ ६३
समस्तपापौघविनाशकारणं समस्तपुण्यौघसमृद्धिकारणम् ।
श्रीवेङ्कटेशस्य पदारविन्दे सद्भक्तवृद्धेरसमानकारणम् ॥ ६४
वक्तुः श्रोतुः पाठकस्य पारायणपरस्य च ।
परात्परो वेङ्कटेशः प्रसन्नो भवति क्षणात ॥ ६५
स्तोत्रणानेन सन्तुष्टो वेङ्कटेशो रमापतिः ।
यान् यान् कामान् कामयन्ते तांस्तान् मुक्तिं ददाति च ॥ ६६

इति श्रीमदादित्यपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीवेङ्कटेशस्य
सकलाभीष्टप्रदानमहिमानुवर्णनं
नाम पञ्चमोऽध्यायः ।

श्रीरस्तु

श्री श्रीनिवासपरब्रह्मणे नमः

श्रीमते विष्वक्सेनाय नमः

# श्रीवेङ्कटाचलमाहात्म्यम्

(श्रीभविष्योत्तरपुराणान्तर्गतम्)

श्रियःकान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥

श्रीवेङ्कटाचलाधीशं श्रियाऽध्यासितवक्षसम् ।
श्रीतचेतनमन्दारं श्रीनिवासमहं भजे ॥

हरिः ॐ

अथ प्रथमोऽध्यायः

## जनकनृपानुभूतशोकातिरेकप्रकारः

शौनकः—

'सूत! सूत! महाभाग! सर्वशास्त्रविशारद! ।
त्वत्तोऽहं श्रोतुमिच्छामि माहात्म्यं पुण्यवर्धनम् ॥ १

कथितं रङ्गमाहात्म्यं त्वया हस्तिगिरीशितुः ।
जगन्नाथस्य वै विष्णोः माहात्म्यमतुलं मुने! ।
इदानीं श्रोतुमिच्छामि माहात्म्यं वेङ्कटेशितुः' ॥ २

श्रीसूतः— 'साधु पृष्टं त्वया ब्रह्मन्! चरितं वेङ्कटेशितुः ।
यथाश्रुतं मया पूर्वं व्यासादमिततेजसः ॥ ३

तत्तथाऽहं समाचक्षे सावधानमनाः शृणु ।
पुरा तु जनको नाम राजा परमधार्मिकः ॥ ४
सत्यवाक् सर्वशास्त्रेषु कोविदः कोपवर्जितः ।
वासुदेवप्रसादस्य मुख्यपात्रमभून्नृपः ॥ ५
निर्ममो नित्यतृप्तश्च निरहङ्कृतिरात्मधृक् ।
तस्य भ्राताऽभवत्पूर्वं कुशकेतुरिति स्मृतः ॥ ६
कुशध्वजस्य तनयाः त्रयस्त्रैलोक्यसुन्दराः ।
दुहितॄणां त्रयं तस्य कुशकेतोर्महात्मनः ॥ ७
जनकस्याभवत्पुत्री जानकी नाम सा रमा ।
भ्रात्रा च कारयामास राज्यं जनकभूपतिः ॥ ८
स भ्रातुराज्ञया राज्यं चकारार्येषु भक्तिमान् ।
कदाचित् जनको राजा मनसीत्थमचिन्तयत् ॥ ९
'सुखमेव सदा मे स्यात् दुःखं मा भूत् कदाचन ।
दुःखं न वीक्षे नेत्राभ्यां सुखं वीक्षे सदाऽऽत्मनः' ॥ १०
असाधुसम्मतं वाक्यं श्रुत्वेत्थमुदितं हरिः ।
दुःखं प्रदर्शयामास राज्यमत्तस्य भूपतेः ॥ ११
कदाचित् दैवयोगेन कुशकेतुरगान्मृतिम् ।
हतेऽनुजे च तद्भार्या तेन साकं ममार च ॥ १२
राज्यं पुत्रांस्ततस्त्यक्त्वा त्वगात्पतिसलोकताम् ।
तौ दम्पती नृपो दृष्ट्वा त्यक्तपुत्रौ सुखोचितौ ॥ १३
विललाप महाराजो भ्रातरं भ्रातृवत्सलः ।
'हा भद्रे ! बालकांस्त्यक्त्वा वृद्धं मां जानकीं तथा ॥ १४
क्व गच्छसि वरारोहे ? पतिमालिङ्ग्य मङ्गले ! ।
अशीतिवर्षसाहस्रं सम्प्राप्तं मम भामिनि ! ॥ १५

एतावत्कालपर्यन्तं न दृष्टो दुःखसञ्चयः ।
अद्य दृष्टो वरारोहे ! त्वद्वियोगेन केवलम् ' ॥ १६
इति सञ्चिन्त्य मनसि वारंवारं महीपतिः ।
चकार प्रेतकार्याणि पुत्राणाञ्चैव शैशवात् ॥ १७
मातृहीनांस्ततो बालान् आलिङ्गयाङ्के निधाय च ।
' भोः पुत्रा ! बालभावे तु मातृहीनाश्च कर्शिताः ॥ १८
कथं पश्यामि नेत्राभ्यां मातृहीनांश्च बालकान् ' ।
इति चिन्तापरः सोऽभूत् त्यक्तराज्योऽतिदुःखितः ॥ १९
त्यक्तान्नः त्यक्तभोगश्च त्यक्तनिद्रोऽतिकर्शितः ।
तस्य दुःखोपशान्त्यर्थं शतानन्दः पुरोहितः ॥ २०
सम्प्राप्तो दैवयोगेन वामदेवानुजो मुनिः ।
प्राप्तं पुरोहितं दृष्ट्वा राजा पूजामकल्पयत् ॥ २१
स पूजितो मुनिवरो निविष्टो मृगचर्मणि ।
ततः कालोचितां वार्तां कथयामास गौतमिम् ॥ २२

## शतानन्दं प्रति जनककृतस्वशोकनिवृत्त्युपायप्रार्थना

जनकः— शतानन्द ! महाप्राज्ञ ! का गतिः स्यादितो मम ! ।
वृद्धत्वादात्मनश्चैव पुत्राणाञ्चैव शैशवात् ॥ २३
कन्यकारत्नबाहुल्यात् हतबन्धोर्महामुने ! ।
बहवः शत्रवः सन्ति रावणेन्द्रजिदादयः ॥ २४
तेभ्यो युद्धं कथं दास्ये ह्यसहायेऽतिजीर्णवान् ।
दिवानक्तं समायाति रावणः केन हेतुना ॥ २५
न जाने मुनिवर्याहं प्रज्ञाचक्षुर्न विद्यते ।
निमित्तमेकं कथितं द्वितीयं प्रवदामि ते ॥ २६

सीतायाश्च सुरूपायाः सुरूपः पुरुषः कथम् ।
लभ्यते ? वद विप्रेन्द्र ! तृतीयं प्रवदामि ते ॥ २७
दीर्घायुषश्च मे पुत्राः पुत्र्यश्चापि सभर्तृकाः ।
एकदेशाधिपस्यैव स्नुषास्ताश्च भवन्तु मे ॥ २८
जामातरश्च चत्वार एकराजसुतास्तथा ।
वर्धितश्चैव मे राज्यं स्वयमेव पुरोहित ! ।
केनोपायेन वै भूयात् तदेतत्कारणं वद ' ॥ २९

## जनकाय शतानन्दोक्तः श्रीवेङ्कटाचलप्रभावः

शतानन्दः—
' अस्ति कश्चिद्विशेषोऽस्मिन् भूलोके भूमिपालक ! ।
दुहितुस्तव कल्याणसुखदं शत्रुनाशनम् ॥ ३०
वैकुण्ठगिरिमाहात्म्यं सभविष्यं सहोत्तरम् ।
कलौ तत्कीर्तनं पुण्यं सर्वदुःखहरं शिवम् ॥ ३१
धनकामस्य धनदं पुत्रकामस्य पुत्रदम् ।
रोगार्तस्य च रोगघ्नं ज्ञानिनां ज्ञानसाधनम् ॥ ३२
यच्छ्रुत्वा सर्वलोकेशो ब्रह्मा ब्रह्मपदं गतः ।
नीलकण्ठस्तु यच्छ्रुत्वा निर्विषः सुखमाप्तवान् ॥ ३३
वज्री नाकपदं प्राप्तो यत्कथाश्रवणादरात् ।
पदान्यापुर्लोकपाला यत्कथाश्रवणेन वै ॥ ३४
किमुक्तेन विशेषेण तदनन्तफलं शृणु ' ।
इत्युक्तो मुनिना तेन जनको वाक्यमब्रवीत् ॥ ३५
जनकः— ' वद वैकुण्ठमाहात्म्यं कलौ तच्चरितं कथम् ' ? ।
शतानन्दः—' कृते वृषाद्रिं वक्ष्यन्ति त्रेतायामञ्जनाचलम् ॥ ३६

द्वापरे शेषशैलेति कलौ श्रीवेङ्कटाचलम् ।
नामानि युगभेदेन शैलस्यास्य भवन्ति हि ' ॥ ३७

जनकः— 'चतुर्युगे त्वया प्रोक्तं नाम यद्यद्गिरेर्मुने ! ।
तस्य तस्य च वै हेतुं विस्तराद्वद मे गुरो ! ।
कृते वृषाचल इति कथं नाम भविष्यति !' ॥ ३८

## वृषभाचलनामनिष्पत्तिः

शतानन्दः—

'पुरा तु वृषभो नाम राक्षसो रूक्षकर्मकृत् ।
आक्रम्य शेषशैलञ्च तापसानप्यबाधत ॥ ३९

तेन सङ्क्लिष्टतपसः तदर्थं शरणं गताः ।
श्रीनिवासं हृषीकेशं भक्तानामभयङ्करम् ॥ ४०

तुष्टुवुर्हृष्टमनसः स्रष्टारं सर्वचेतसाम् ।
प्रादुर्बभूव भगवान् मुनीनां पुरतो हरिः ।
व्यज्ञापयन्मुनिश्रेष्ठाः असकृत्कृतसंस्तवाः ' ॥ ४१

मुनयः— 'भगवन्नरविन्दाक्ष ! वृषभो नाम राक्षसः ।
सम्बाधते सदा क्रूरः तपोभङ्गकरः खलः ॥ ४२

तस्माद्रक्ष क्षराभीत भयाद्राक्षसकल्पतात् ।
बाढमित्युक्तवान् कृष्णो दुष्टमभ्यद्रवद्रुषा ॥ ४३

स राक्षसो महावीर्यः तीर्थे तुम्बुरुसंज्ञके ।
स्नात्वा त्रिषवणं पुण्यां सालग्रामशिलां नृप ! ॥ ४४

नारसिंहात्मिकां दिव्यां सकरालामधोमुखाम् ।
'नित्यमाराधयेयाह'मिति निश्चित्य पूजयन् ॥ ४५

पूजान्ते स्वशिरः पुण्यं खड्गेनाहृत्य भूपते ! ।
समर्पयामास ततः तच्छिरः पुनरागतम् ॥ ४६

एवं पञ्चसहस्राणि वर्षाणि विगतानि च ।
तस्मिन् कालेऽरविन्दाक्षः प्रत्यक्षः समजायत ॥ ४७
शिलान्तर्यामी भगवान् श्रीनिवासः सतां गतिः ।
तमालोक्य हृषीकेशं वृषभो दण्डवद्भुवि ॥ ४८
पपात राजशार्दूल! स विसंज्ञामुपेयिवान् ।
मुहूर्तान्ते समुत्थाय प्रत्यभाषत केशवम् ॥ ४९
वृषभः— 'केशवानन्त! गोविन्द! श्रीनिवास! सुरोत्तम! ।
न च मोक्षं न च स्वर्गं पारमेष्ठ्यपदं हरे! ॥ ५०
न याचे जगतां नाथ! युद्धभिक्षां च देहि मे ।
दशावतारविभवे श्रुतस्ते विक्रमो हरे! ॥ ५१
अद्य तं सत्यमाधत्स्व विक्रमं पुरुषोत्तम!' ।
देवस्तद्भारतीं श्रुत्वा किञ्चिद्धास्यमुखो हरिः ॥ ५२
उवाच वचनं तं हि राक्षसं युद्धदुर्मदम् ।
श्रुत्वा तदुक्तवान् कृष्णः 'तथाऽस्त्वि'त्यरिमर्दनः ॥ ५३
तयोर्युद्धमभूत्तत्र वृषभश्रीनिवासयोः ।
यत्कृतं श्रीनिवासेन तत्कृतं वृषभेण च ॥ ५४
तदद्भुतमभूत्तत्र देवानां पश्यतामपि ।
तद्युद्धकौशलं दृष्ट्वा भगवान् पर्यपूजयत् ॥ ५५
'भो राक्षसकुलोत्पन्न! पश्य मे पौरुषं बलम्!' ।
इत्युक्त्वा दर्शयामास गरुडं विकृताकृतिम् ॥ ५६
तत्रस्थं वासुदेवञ्च विश्वरूपिणमव्ययम् ।
सहस्रभुजसंयुक्तं सहस्रायुधभूषितम् ॥ ५७
तन्मायां राक्षसो दृष्ट्वा स्वयञ्च गरुडं हरिम् ।
दर्शयन् व्यञ्जयामास स्वमायां सुरमोहिनीम् ॥ ५८

नक्तञ्चरस्य चरितमतिक्रान्तुं क्षमोऽप्ययम् ।
प्रशंसन् राक्षसं वीरं 'साधुसाध्वि'त्यभाषत ॥ ५९

'रे रे ! राक्षसत्र्याद्य चक्रेण शतनेमिना ।
हरिष्ये ते शिरः कायात् यथा पक्वफलं द्रुमात्' ॥ ६०

इत्युक्तो देवराजेन वृषभो दण्डवद्भुवि ।
प्रणिपत्याह विश्वेशं अस्तुवद्राक्षसेश्वरः ॥ ६१

वृषभः— 'चक्रपाणे ! नमस्तुभ्यं चक्रस्य चरितं श्रुतम् ।
यच्चक्रेण प्रतप्तस्तु मुक्तिमेति न संशयः ॥ ६२

यच्चक्रेण पुरा राजा कीर्तिमान् कीर्तिमाप्तवान् ।
त्वच्चक्रेण हतो राजन् गच्छामि तव मन्दिरम्' ॥ ६३

एवमुक्त्वा हरेः पादौ पस्पर्श वृषभासुरः ।
वरं ययाचे वृषभः 'शैलो मदभिधोऽस्त्वि'ति ॥ ६४

समालिङ्ग्य 'भवेदेव'मित्युक्त्वा हरिणाऽथ सः ।
विसृष्टचक्रसञ्छिन्नः त्यक्तवान् स्वकलेबरम् ॥ ६५

तस्माद्वृषभशैलोऽयं कृते ख्यातिमुपेयिवान्' ।
जनकः— 'कथमञ्जनशैलेति त्रेतायां नाम मे वद' ॥ ६६

## त्रेतायुगेऽञ्जनाचलनामनिष्पत्तिः

शतानन्दः— 'पुरा केसरिणः पत्नी ह्यञ्जना कञ्जलोचना ।
अनपत्यत्वदुःखेन मतङ्गमुनिमागमत् ॥ ६७

आनम्य मुनिशार्दूलं अनपत्यातिकर्शिता ।
उवाच वचनं नेत्रनीरसिक्तकलेवरा' ॥ ६८

अञ्जना— 'अहो तापसशार्दूलाऽपुत्राया मम का गतिः ?' ।
एवमुक्तोऽञ्जनादेव्या मतङ्गो वाक्यमब्रवीत् ॥ ६९

मतङ्गः— 'पम्पायाः पूर्वदिग्भागे पञ्चाशद्योजनान्तरे ।
नरसिंहाश्रमं देवि ! वर्तते वसुधातले ॥ ७०
तस्य दक्षिणदिग्भागे नारायणगिरेस्तटे ।
उत्तरे स्वामितीर्थस्य वर्तते क्रोशमात्रके ॥ ७१
वियद्गङ्गेति विख्याता तत्र गच्छ यथासुखम् ।
तत्र स्नात्वाऽथ कल्याणि ! द्वादशाब्दं तपश्चर ॥ ७२
तेन पुण्येन ते पुत्रो भविष्यति गुणाधिकः' ।
मतङ्गेनैव मुक्ता सा नारायणगिरिं ययौ ॥ ७३
कृत्वा स्वामिसरःस्नानं अश्वत्थस्य प्रदक्षिणम् ।
वराहरूपिणं नत्वा पीत्वा तत्सलिलं शुभम् ॥ ७४
आकाशगङ्गामासाद्य तपः कर्तुं प्रचक्रमे ।
मुनींश्चामन्त्र्य भर्तारं व्रतार्थं भक्ष्यवर्जिता ॥ ७५
उपवासरता बाला बाह्यभोगविवर्जिता ।
काष्ठवत् पर्यवस्थाप्य शरीरं स्वाऽत्मनः शुचि ॥ ७६
पूर्णे संवत्सरे जाते वायुदेवो महाबलः ।
फलमाहृत्य भक्ष्यार्थं प्रत्यहं ह्यददान्मरुत् ॥ ७७
अथैकस्मिन् दिने वायुः फले वीर्यमपूरयत् ।
वीर्यगर्भं फलं तस्याः प्राक्षिपत्करसम्पुटे ॥ ७८
फलं सा मन्यमाना हि क्षुधार्ता तदभक्षयत् ।
ततो गर्भः समुदभूत् अञ्जानायाश्च भूमिप ! ॥ ७९
मुनीनामभवद्धर्षो वायुगर्भसमुद्भवम् ।
अथ सा दशमासान्ते सुषुवे पुत्रमुत्तमम् ॥ ८०
हनूमन्तमिमं प्राहुः मुनयो वीतकल्मषाः ।
अञ्जना व्रतमास्थाय पुत्रं प्राप गिरीश्वरे ।
तस्मादञ्जनशैलोऽयं लोके विख्यातकीर्तिमान् ॥ ८१

## द्वापरयुगे शेषाचलनामनिष्पत्तिः

जनकः—

सन्तोषो ह्यभवन्मह्यं श्रुत्वा तन्नामकारणम् ।
द्वापरे शेषशैलेति कथं ख्यातिर्भविष्यति ॥ ८२

शतानन्दः— पुरा वैकुण्ठनगरे द्वारि शेषं समादिशत् ।
जानन् भगवतो भावं सोऽतिष्ठत् भाविकर्मणि ॥ ८३

चिकीर्षिते मारुतेन द्वारि जाग्रत्कुतूहली ।
देवाधिदेवो भगवान् रेमे च रमया सह ॥ ८४

तस्मिन् काले महाराज! मारुतस्तु कदाचन ।
अकस्मात्कारणात् प्राप्तो भगवन्तं जनार्दनम् ॥ ८५

द्वारे तं रोधयामास स्वकमदण्डेन सर्पराट् ।
'किमर्थं रुद्ध्यते मूर्ख! कार्यस्य महती त्वरा' ।
इत्युक्ते वायुना शेष उवाच वचनं पुनः ॥ ८६

शेषः— 'अहमाज्ञाधरो विष्णोर्मा त्वमन्तःपुरं गमः' ।
इति तस्य वचः श्रुत्वा जगत्प्राणोऽब्रवीदिदम् ॥ ८७

वायुः— 'जयस्तु विजयश्चैव संशप्तौ मुनिभिः पुरा ।
अहङ्कारेण तौ जातौ कुम्भकर्णदशाननौ ॥ ८८

विस्मृतौ किं त्वया मूर्ख! द्वारपत्ये नियोजितौ ।
तद्वाक्यान्ते च राजेन्द्र! प्रजज्वाल विषोल्बणः ।
गर्हयन् वचनैस्तीक्ष्णैः जगत्प्राणमहीश्वरः ॥ ८९

शेषः— 'किं गरिष्ठं वचः प्रोक्तं जीवनेच्छा न विद्यते ? ।
कालेनानुगतो लोको नैव जानाति मोहितः ? ॥ ९०

त्वं तादृङ्नरवद्दण्ड्यो वृथा मोहात् प्रभाषसे ।
बले ज्ञाने विरागे च विष्णुभक्तो न मत्समः ॥ ९१

सदा मेऽन्तःपुरे वासः पुत्रादप्यधिको हरेः ।
लोकानाञ्च हितार्थाय हितार्थं जगदीशितुः ।
स्थापितोऽस्मि द्वारपत्ये लक्ष्म्या नारायणेन च ' ॥ ९२

वायुः—

' बिडालोऽन्तःस्थितो वापि बहिष्ठेमसमो न हि ।
शयानं रत्नपर्यङ्के राजानमपि सेवते ॥ ९३
कश्चिद्दूतो नियुक्तस्तु पर्यङ्काधिष्ठितः स्वयम् ।
किमाधिक्यं तस्य शेष ! पुत्रे का न्यूनता वद ॥ ९४
तयोर्विवादो ह्यभवत् शेषवाय्वोर्महात्मनोः ।
लक्ष्म्याऽवबोधितः श्रीमान् उत्तस्थौ गरुडध्वज ॥ ९५
' किमर्थं क्रोशसे शेष ! कः पुमानागतः परः ' ।
इत्युक्तो देवदेवेन फणिराजोऽभ्यभाषत ' ॥ ९६

शेषः—

' मलयाचलवासस्तु वायुरत्यन्तगर्वितः ।
अकालेऽन्तःपुरं शीघ्रं प्रवेष्टुञ्च समुद्यतः ॥ ९७
अवाच्यवचनं प्रोक्तं अनेनात्यन्तमानिना ' ।
इत्याहूतः फणीन्द्रेण भावज्ञेन तदा हरिः ॥ ९८
संज्ञापयन्निजं भावं इङ्गितैः द्वारमाययौ ।
एतस्मिन्नेव काले तु साष्टाङ्गं प्रणिपत्य तम् ॥ ९९
वायुस्तुष्टाव पुरुषं पुराणं वेदगोचरम् ।
वायुमालोक्य वचनं वारिजाक्षोऽब्रवीत्स तम् ॥ १००

भगवान्—

' किमर्थं कलहः पुत्र ! शेषेणात्यन्तमानिना ' ।
इत्थं हरेर्वागमृतं पीत्वा कर्णपुटद्वयात् ।
तूष्णीं बभूव नृपते ! वायुरत्यन्तभक्तिमान् ॥ १०१

शेषः— अहं समर्थो भगवन्! बले ज्ञाने तव प्रिये।
मत्समो नास्ति भूलोके नाके वा ब्रह्मसद्मनि'॥ १०२

सरीसृपवचः श्रुत्वा प्रहसन् फणिनं हरिः।
'साधुसाध्वि'ति सम्भाव्य चोवाच फणिनां पतिम्॥ १०३

श्रीभगवान्— 'न वाङ्मात्रेण पौरुष्यं क्रिया केवलमुत्तरम्।
बलाबले परीक्ष्यन्तां देवाश्चेन्द्रपुरोगमाः॥ १०४

अत्रैवोत्तरदिग्भागे पर्वतं मेरुनन्दनम्।
स्वकायरज्जुना बद्ध्वा बलं ते यावदस्ति हि॥ १०५

तावतैव बलेन त्वं संयुक्तः सुस्थिराऽऽत्मना।
तिष्ठ भद्र! महाभाग! विषफूत्कारजृम्भितः'॥ १०६

हृषीकेशवचः श्रुत्वा हृष्टपुष्टाङ्गविग्रहः।
स्वकायरज्जुना बध्नन् आनन्दाद्रिमहीध्ररः॥ १०७

स्थिरो बभूव चामन्त्र्य वायुं वेगवतां वरम्।
तमालोक्याग्निदयितः पर्वतं तमुपागतः॥ १०८

आज्ञया वासुदेवस्य देवानां पश्यतां सताम्।
स्वस्मिन् भगवतः प्रीतिं मत्वाऽतिशयितां मरुत्॥ १०९

मदोद्धतो महावेगं चक्रे पर्वतचालने।
न चकम्पे गिरिः किञ्चित् अपि शेषेण वेष्टितः॥ ११०

ततोऽपि सुमहावेगं चक्रे वायुः प्रकोपनः।
संस्पर्धमानयोरित्थं शेषवाय्वोर्महात्मनोः॥ १११

हाहाकारो जगत्यासीत् अधरोत्तरिते तदा।
ततो ब्रह्मादिभिर्देवैः याचितोऽपि यदा मरुत्॥ ११२

प्रपेदे न शमं किञ्चित् तदाऽसौ फणिनां पतिः।
जानन् भगवतश्चापि भावं देवांश्च तोषयन्॥ ११३

कच्चित्फणान्तरं किंचित् श्लथयामास वै विभुः ।
ततः प्रकुर्वतो वेगं मारुतस्य महात्मनः ॥ ११४
कनिष्ठाङ्गुलिमात्रे तु प्रदेशे श्लथबन्धने ।
महावेगस्य सम्पर्कात् पर्वतो भोगिसंयुतः ॥ ११५
योजनान्यतिलक्षाणि दक्षिणाभिमुखो ययौ ।
मेरुस्तुष्टाव नृपते ! बलदेवं महाबलम् ॥ ११६
'त्रायतां त्रायतां स्वामिन्' पुत्रं बालं भवान् मम' ।
एवमुक्तो मेरुणाऽयं तत्पुत्रं पर्यपालयत् ॥ ११७
स्वर्णमुख्या महानद्याः प्रतीरे च तथोत्तरे ।
स्थपयामास राजेन्द्र ! गिरिराजं सपन्नगम् ॥ ११८
ततो वायुं सुरगणा बोधयामासुरादरात् ।
'अयं शेषांशजो वायो ! शैलः शैलात्मजेश्वरः ॥ ११९
हरेः सञ्चोदनेनैव जातः स्वाऽवासहेतवे ।
व्याजेनैव त्वया नीतः तेन स्वर्णमुखीतटम् ॥ १२०
त्वत्संवादच्छलेनैष स्वस्थानोत्खानितोऽहिना ।
मायावी भगवानित्थं केवलं त्वां व्यपोहयत् ॥ १२१
तदद्य फणिराजं त्वं अन्तरङ्गं हरेरिमम् ।
प्रसादयापराद्धोऽसि वृथा तस्मिन् महात्मनि' ॥ १२२
इति सम्बोधितो देवैः हितकाङ्क्षिभिरादरात् ।
शेषं गतमदः पश्चात् तुष्टाव मरुतां पतिः ॥ १२३
'क्षमस्व मम दौरात्म्यं अज्ञानेनाऽगतं विभो ! ।
त्वयीह भगवान् साक्षात् आगमिष्यति वै हरिः ॥ १२४
मयाऽपचरितं मौर्ख्यात् महाभागे वृथा त्वया' ।
इत्थं प्रसादयामास फणिराजं तदा मरुत् ॥ १२५

निर्वैरत्वात् प्रसादं स चकार मरुति स्वयम् ।
इत्थं शेषांशजं शैलं शेषेण परिवेष्टितम् ॥ १२६
स्वावासहेतोर्हरिणा वाहितं वायुना छलात् ।
राजन् शेषनिमित्तेन शेषाचलमिमं विदुः' ॥ १२७

## कलियुगे श्रीवेङ्कटाचलनामनिष्पत्तिप्रकारः

जनकः—
कलौ वेङ्कटशैलेति कथं नाम' महामुने ! ॥ १२८

शतानन्दः— 'पुरा पुरन्दरो नाम सोमयाजी दृढव्रतः ।
कालहस्त्याख्यनगरे सत्यवाक् ब्राह्मणोऽभवत् ॥ १२९
अपुत्रस्यापि विप्रस्य नाभूद्दुःखं सुतात्तये ।
दैवेन पूर्वपुण्येन वृद्धस्यास्य सुतोऽभवत् ॥ १३०
चकार नाम्ना स सुतं माधवं विप्रसंसदि ।
पित्रोपनीतो बालस्तु ववृधे चन्द्रवन्नृप ! ॥ १३१
वेदवेदाङ्गतत्त्वज्ञः सर्वविद्याविशारदः ।
ततः कालान्तरे पुत्रं सदारं तं चकार ह ॥ १३२
स चन्द्रलेखया रेमे बहुकालं च माधवः ।
पञ्चयज्ञपरो नित्यं पञ्चाननसमद्युतिः ॥ १३३
त्रिःसप्तवर्षो रेजे स द्वितीय इव भास्करः ।
सा कन्या पाण्ड्यदेशीया पाण्ड्यानाञ्च तथा प्रिया ॥ १३४
पत्यौ सुप्ते स्वयं शिष्ये पत्यौ भुक्ते त्वभुङ्क्त च ।
कदाचिद्विप्रपुत्रस्तु दिवासङ्गमतत्परः ॥ १३५
राजपुत्रीं समासाद्य राजन् ! कामातुरोऽब्रवीत् ।
ममेच्छा वर्तते भद्रे सङ्गमे तव भामिनि ।
पतिवाक्यमुपाकर्ण्य पतिं प्राह प्रजापते ॥ १३६

चन्द्रलेखा–

'शरीरमस्थिमांसाद्यैः पूरितं पुरुषर्षभ ! ।
शरीरेण शरीरस्य सङ्गमः साध्वसम्मतः ॥ १३७
तत्रापि दिवसक्रीडामयुक्तां मुनयो विदुः ।
निकेतने पिता माता चाग्निहोत्रश्च देवराट् ॥ १३८
प्रभाकरप्रभां पश्य त्यज कामं द्विजात्मज !' ।
वधूवचनमाकर्ण्य माधवो वाक्यमब्रवीत् ॥ १३९

माधवः–

'भव भामिनि ! सौख्ये मे पूरयाद्य मनोरथम् ।
तव स्यात् पुत्रसौभाग्यं परं पतिसलोकता' ॥ १४०
भर्तुर्वचनमाकर्ण्य भर्तारं वाक्यमब्रवीत् ॥ १४१

चन्द्रलेखा–

'गच्छामि जलहेतोस्तु गच्छ त्वं पुरतो मम' ।
तदा जगाम राजेन्द्र ! कुशार्थं स स्वभावतः ॥ १४२
सा जगामाथ पानीयपात्रमादाय भामिनी ।
तामन्वगान्माधवोऽपि वटकूटमभिद्रुतः ॥ १४३
तत्रान्तरे विप्रपुत्रो ददर्शान्यां स्त्रियं पुनः ।
वनान्तरे वसन्ते च वसन्तीं द्रुममूलगाम् ॥ १४४
धवलाम्बरसम्बद्धां कटिमेखलयाऽन्विताम् ।
सुनासां सुभगां सुभ्रूं नीलालकविराजिताम् ॥ १४५
मुमोह विप्रस्तां दृष्ट्वा सुवर्णां सुपयोधराम् ।
स्निग्धकञ्चुकसम्बद्धां कोकिलस्वररञ्जिताम् ॥ १४६
अञ्जनालिप्तनयनां अन्त्यजां नाम कुन्तलाम् ।
पादेन विलिखन्तीं गां जानुस्थितशिरोरुहाम् ॥ १४७

दृष्ट्वा खिन्नमना भूत्वा चिन्तयन् ब्रह्मनिर्मितिम् ।
स भार्यां प्रत्युवाचेदं 'गच्छ प्राणप्रिये! गृहम् ।
इच्छा मे पूर्णतां प्राप्ता त्वद्भक्त्या परितुष्यतः' ॥ १४८

चन्दलेखा–

'युक्तमुक्तं त्वया भद्र! गच्छामि भवनं स्वकम्' ।
भर्तुराज्ञामुपानीय चन्द्रलेखा गृहं गता ॥ १४९
यावद्गच्छति सा भार्या तावत्तत्र स्थितोऽभवत् ।
गतायां स्वप्रियायान्तु तां बालां परिचिन्तयन् ॥ १५०
शनैर्जगाम राजेन्द्र! स्मरेण हृतचेतनः ।
समीपस्थं मुनिं प्रेक्ष्य सा राजन्! पृथुलोचना ।
स्वरभेदं प्रकुर्वन्ती वाक्यमूचेऽथ माधवम् ॥ १५१

कुन्तला–

मा याहि मुनिशार्दूल! मत्समीपं महामते!' ।
स च तद्वचनं श्रुत्वा सहसा वाक्यमब्रवीत् ॥ १५२

माधवः– 'का त्वं कल्याणि! भद्रं ते जननी जनिता च कः? ।
आवासस्तव भद्रं ते कस्मिन् राष्ट्रे वरानने!' ।
सा चेत्थमुक्ता मुनिना जातिमाह मनस्विनी ॥ १५३

कुन्तला–

'किं मां पृच्छसि पापिष्ठां व्यभिचारकुलोद्भवाम् ।
अन्त्यजान्त्यजयोर्जातां सुरामांसाशिनीं खलाम् ॥ १५४
मध्यदेशे निवासो मे किं त्वं पृच्छसि भूसुर! ।
वेदवेदान्तवेदिंस्त्वं न मां द्रष्टुमिहार्हसि ॥ १५५
मां स्प्रष्टुं क्रीडितुं वापि कथमिच्छसि मूढधीः' ।
एवमादिप्रजल्पन्तीं माधवस्तामथाब्रवीत् ॥ १५६

माधवः—'वृथा नारायणाज्जातो ब्रह्मा लोकपितामहः ।
अन्धमेनं महाराज मन्यते मे मतिः सदा ॥ १५७
वृथा यज्जनयामास वनितां वनहेतवे ।
तथाऽपि मम बुद्धिस्तु त्वय्येव रमते सदा ॥ १५८
यतस्त्वय्येव निरतं मनो मे कृतवानजः ।
अतो मनो मे सम्पूर्य जीवयाद्य शुचिस्मिते!' ॥ १५९
कुन्तला—'कुलाटनं प्रकुर्वाणाः कुलमाशतमाकुलम् ।
दहन्तीति वदन्तिस्म कुलजा वरमानिनः' ॥ १६०
माधवः—'लवणोदकजातानि रत्नानि विविधानि च ।
अङ्गीकुर्वन्ति देवाश्च तेजःप्राधान्यकारणात् ॥ १६१
तस्मादहं सुरूपत्वात् त्वयि भोगं करोमि च ।
नरकं वा मृतो यास्ये पितृभिः सह सुस्मिते' ॥ १६२
इत्येवमुक्ता द्विजबालकेन रुरोद कन्या तरुणाऽरुणाभा ।
कुन्तला—'दिवौकसो विप्रवरो विमोच्यो दोषादमुष्मादसतीप्रसङ्गात् ॥ १६३
दिग्देवता याश्च गणाधिपा ये भान्विन्दुपूर्वाश्च नवग्रहा ये ।
शृण्वन्तु वाक्यं मम ते वृथाऽयं विप्रो मृतिं यास्यति पापसङ्गात् ॥ १६४
विललाप महाराज ब्राह्मणार्थं सुमध्यमा ।
'मा स्पृशाद्य महीदेव पापिनीं व्यभिचारिणीम् ॥ १६५
कः स्पृशेदग्निमार्तः सन् सर्पं व्याघ्रं गजं द्विज! ।
परपत्न्यो हि तत्तुल्याः किमुचण्डालकन्यका ॥ १६६
उत्तमं पदमास्थाय नीचा इच्छन्त्यधोगतिम् ।
ज्ञानिनो न तथा विप्राः तव बुद्धिस्तु तादृशी ॥ १६७
जाती द्वे निर्मिते पूर्वं विष्णुना द्विजसत्तम! ।
स्त्रीत्वं पुंस्त्वं यथा तद्वत् चातुर्वर्ण्यंश्च भूसुर! ॥ १६८

ब्राह्मणस्य ब्रह्मयोन्यां रन्तुमिच्छा प्रशस्यते ।
तथान्येषाञ्च वर्णानां स्वस्वजातौ प्रशस्यते ॥ १६९
विपरीतमिमं मन्ये धर्मत्यागं द्विजन्मनाम् ।
शरीरं तव विप्रेन्द्र! वेदपूतं विशेषतः ॥ १७०
ऋतुकाले च यन्मातुः तव पित्रा समागमे ।
रेतः सृष्टं वेदपूतं गर्भाधानमिदं विदुः! ॥ १७१
सीमन्तं कल्पयामासुः मन्त्रैर्वेदमयैर्द्विज ।
दशमे मासि सम्प्राप्ते प्रासूत जननी तव ॥ १७२
तदा पिता जातकर्म कृतं नाम च मन्त्रवत् ।
अन्नप्राशनचौलादि ब्रह्मवाचनपूर्वकम् ॥ १७३
अग्निसाक्षिविधानेन प्राप्तदारः कृतो भवान् ।
अधीतवेदशास्त्रः सन् आहिताग्निव्रते स्थितः ॥ १७४
एतादृशस्य देहस्य मया सङ्गः कथं भवेत्? ।
कर्णौ हरिकथाः श्रुत्वा पावितौ नासिका तव ॥ १७५
हर्यर्पितसुगन्धेन पाविता जठरं तव ।
वासुदेवार्पितान्नेन पवित्रं पुरुषर्षभ! ॥ १७६
कृष्णार्चनप्रसङ्गेन करौ पावनतां गतौ ।
हरिनामकलापेन जिह्वा ते पावनात्मिका ॥ १७७
पुण्यक्षेत्रानुचारेण पादौ ते पावनीकृतौ ।
एतादृशेन देहेन कथं सङ्गं प्रशंससि? ॥ १७८
ममापि शृणु माहात्म्यं देहस्यामितदोषिणः ।
अवाच्यवचनैः क्रूरैः जिह्वा मे दह्यते सदा ॥ १७९
सुरामांसाशनेनैव जठरे गुल्ममागतम् ।
व्यभिचारकथालापात् कर्णौ मे शिथिलीकृतौ ॥ १८०

पादौ जारगृहं गत्वा पाषाणसदृशौ मम ।
गोवधान्मे करौ क्रूरौ यमदण्डसमप्रभौ ॥ १८१
एतादृशस्य देहस्य त्वया सङ्गः कथं भवेत्? ।
उत्तमो नीचतां प्राप्य कथं स्वर्गं गमिष्यति? ॥ १८२
परस्त्रीसङ्गदोषेण बहवो नरकान् गताः ।
तस्मादुत्तिष्ठ भद्रं ते तव दासी भवामि भोः' ।
वनितावचनं श्रुत्वा वाक्यमूचे द्विजात्मजः ॥ १८३

माधवः—

'त्वदीयसङ्गो बहुकालपुण्यप्रभावजो मुक्तिकरः शुभावहः ।
दैवेन योगेन हरेः प्रसादात् पुण्येन लब्धः पुरुषार्थहेतुः ॥ १८४
तस्माद्भजस्वानुगतोऽस्मि भामिनि ।
त्यजाद्य लज्जां कुरु मे मनोगतम् ॥ १८५
गच्छन्त्यद्य मम प्राणाः त्वद्वियोगेन केवलम् ।
तस्माज्जीवय भद्रं ते मरणाभिमुखञ्च माम्'॥ १८६
एवमुक्ता द्विजेन्द्रेण पृथुश्रोणी समुत्थिता ।
पलायनायाशु मतिं चक्रे चण्डालकन्यका ॥ १८७
धावमानामनुद्रुत्य माधवस्तामुपास्पृशत् ।
रौरवं जनकस्यापि जनन्याः कुलयोः ध्रुवम् ॥ १८८
स्यादिति क्रोशमानां तां माधवो मन्मथाऽहतः ।
बलात्कारेण सङ्गृह्य बुभुजे भोगमुत्तमम् ॥
भोगात्यये द्विजं बाला वाक्यमूचे मनस्विनी ॥ १८९

कुन्तला—

'अद्यप्रभृति भो विप्र! पतिस्त्वं मम भूसुर! ।
त्यज यज्ञोपवीतं त्वं मुण्डयित्वा शिरस्तथा ॥ १९०

अब्राह्मण्यमुपागम्य भुङ्क्ष्व गोमांसमुत्तमम् ।
पिब मद्योदकं शीघ्रं चण्डालत्वमुपाश्रितः ' ॥ १९१

तद्वाक्यमाकर्ण्य तदा तयोक्तं सर्वमाचरन् ।
चण्डालाचरिताचारं जगाम विधिचोदितः ॥ १९२

विप्रस्तया समेतस्तु कृष्णवेणीनदीतटम् ।
द्वादशाब्दं वसन् विप्रः तत्सङ्गपरिमोहितः ॥ १९३

अनित्यत्वाच्छरीराणां कालपाशेन यन्त्रिता ।
जगाम मरणं राजन्! कुन्तला नीलकुन्तला ॥ १९४

तया विरहितः श्रीमान् माधवो दुःखकातरः ।
अचरद्भुवनं सर्वं उन्मादेनोद्भ्रमन्निव ॥ १९५

अकस्माद्दैवयोगेन राजानश्चोत्तरास्तदा ।
यात्रार्थं समुपाजग्मुः वराहस्य च पर्वतम् ॥ १९६

मार्गमध्ये ददर्शासौ माधवस्तान् महीपतीन् ।
गच्छन्नेव च तैः सार्धं तदुच्छिष्टान्नभोजनः ॥ १९७

प्राप सर्पगिरिं राजन्! दैवयोगेन कर्मणा ।
ते राजानस्तत्र गत्वा तीर्थे कपिलसंज्ञिके ॥ १९८

स्नात्वा भक्तिभरोपेताः वपनं चक्रुरादरात् ।
माधवः स्वयमप्येत्य वापयामास वै शिरः ॥ १९९

पार्वणानि प्रकुर्वन्तः तत्र राजन्! क्षितीश्वराः ।
पिण्डानि च सुसंहृष्टाः श्राद्धीयानि ददुस्तदा ॥ २००

माधवोऽपि शुभे तीर्थे स्नात्वा तद्वच्च पार्वणम् ।
कुर्वन् पिण्डान् मृदा कृत्वा पितृभ्यः श्रद्धया ददौ ॥ २०१

दैवात्तत्कर्मणैवासौ तदाऽभूद्धतकल्मषः ।
तस्माद्यो मानवो भक्त्या कुर्यात्तीर्थावगाहनम् ॥ २०२

पितृश्राद्धं पिण्डदानं मुक्तिस्तस्य न संशयः ।
मृत्पिण्डं कृतवान् विप्रः पुण्यक्षेत्रे पुरातने ॥ २०३
किं वर्णयामः पुरुषोत्तमस्य क्षेत्रस्य तीर्थस्य च पुण्यशक्तिम् ।
मृत्पिण्डदानात्पितरश्च तस्य मुक्तिं प्रपन्नाः मुरवैरिशासनात् ॥ २०४
प्रभाते विमले जाते राजानो राजसत्तम! ।
समारोहन् गिरिश्रेष्ठं सपुत्राश्च सबान्धवाः ॥ २०५
तेषामनुपदं राजन्! प्राप शेषगिरिञ्च सः ।
विश्राम्यन्तः सर्व एव ते तस्थुस्तत्र तत्र च ॥ २०६
सोऽपि तस्थौ महाराज! माधवो गिरिमस्तके ।
भूधरस्पर्शमात्रेण तदघं पर्यकम्पत ॥ २०७
माधवस्याभवत्कष्टं यथा वै मक्षिकाशिनः ।
वमन्तमेनं स्वं पापं समावृण्वन् समन्ततः ॥ २०८
तदङ्गजातः कोऽप्यग्निः अद्रिमाहात्म्यतस्तदा ।
प्रजज्वाल दहन् पापं सुरामांसाशनोद्भवम् ॥ २०९
तस्य दुर्गन्धधूमेन वासिताः सर्वदेवता ।
तद्भावं वेदितुं देवाः ब्रह्मरुद्रपुरोगमाः ॥ २१०
विमानानि विचित्राणि भासयन्तः समागताः ।
खमार्गे संस्थिताः सर्वे दृष्ट्वा तच्चरितं नृप! ॥ २११
ववृषुः पुष्पवर्षाणि माधवस्योत्तमाङ्गके ।
दृष्ट्वा पितामहः श्रीमान् विमानादवरुह्य सः ॥ २१२
माधवं गतपाप्मानं यथा हरिरजामिलम् ।
कृपयोद्धृतवानेनं कृपालुर्द्विजपुङ्गवम ॥ २१३
इति सञ्चिन्तयंस्तस्य निकटं प्राप सादरम् ।
जिघ्रंश्च तच्छिरः श्रीमान् ब्रह्मा वाणीमथाब्रवीत् ॥ २१४

'भो भो माधव विप्रेन्द्र! गतपापोऽसि केवलम् ।
स्वामितीर्थस्य निकटं गत्वा स्नात्वा च तज्जले ॥ २१५
वराहवदनं नत्वा त्यज देहं महीसुर! ।
महीपालोऽथ भूत्वाऽत्र कुरु राज्यमकण्टकम् ॥ २१६
पाण्डवानाञ्च दौहित्रकुले जातोऽसि कीर्तिमान् ।
सुधर्मस्य सुतो भूत्वाऽऽकाशनामाथ दक्षिणे ॥ २१७
नारायणपुरे वीर! तोण्डदेशाधिपो भव ।
तव पुत्री जगन्माता जामाता च जगत्पतिः ॥ २१८
भविष्यति महाराज! पश्चाद्वैकुण्ठमाप्नुहि' ।
इति तस्य वरं दत्त्वा चतुरश्चतुराननः ॥ २१९
तदा नाम चकाराद्रेः 'वेङ्कटाचल' इत्यपि ।
सर्वपापानि 'वें' प्राहुः 'कटः' तद्दाह उच्यते ॥ २२०
तस्माद्वेङ्कटशैलोऽयं लोके विख्यातकीर्तिमान् ।
प्रभातकाले राजेन्द्र! यः कीर्तयति भूधरम् ॥ २२१
तस्य पुण्यफलं वक्ष्ये शृणु राजन्! यथास्थितम् ।
फलं भवेद् ध्रुवं गङ्गासेतुयात्रासहस्रजम् ॥ २२२
इतिहासमिदं प्रोक्तं गौतमेनोदितं हि मे ।
पुण्यं परमकल्याणं श्रवणाद्भद्रदायकम् ॥ २२३

इति श्रीभविष्योत्तरपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये भगवत्क्रीडाद्रेर्युगभेदेन वृषभादिनामभेदवर्णनं नाम प्रथमोऽध्यायः ।

---

अथ द्वितीयोऽध्यायः



## भगवतः श्रीवैकुण्ठाद्वेङ्कटाचलागमनम्

जनकः—

'मरुत्प्राहाहिराजं तं भगवानागमिष्यति'।
इति त्वयोदितं पूर्वं तन्ममाचक्ष्व विस्तरात् ॥ १
कथं नारायणः प्राप्तः केन वा कारणेन भोः! ।
तत्रागत्य कृतं किं तु तन्ममाचक्ष्व विस्तरात् ॥ २
कथं वैकुण्ठलोकन्तु त्यक्तवान् पुरुषोत्तमः ।
चरितं तस्य माहात्म्यं तीर्थानां पर्वतस्य च ॥ ३
वराहरूपिणो विष्णोः माहात्म्यं वद विस्तरात् ।
आकाशनाम्नश्चरितं राज्ञस्तस्य महात्मनः ॥ ४
यस्य पुत्री रमा देवी जामाता च जगत्पतिः ।
देवानाञ्च ऋषीणाञ्च देवस्त्रीणां समागमम्' ॥ ५

## सात्त्विकदेवतात्वपरीक्षार्थं भृगोः सत्यलोकादिगमनम्

शतानन्दः—'पुरा तु ऋषयः सर्वे कश्यपाद्या मुनीश्वराः ।
सन्मखं जाह्नवीतीरे सन्तोषात् चक्रिरे द्विजाः ॥ ६
तस्मिन् काले मुनिश्रेष्ठो नारदो मुनिसत्तमः ।
उवाच वचनं विप्रान् किमर्थोऽयं क्रतूत्तमः ॥ ७
को वा भुङ्क्ते यज्ञफलं को वा ध्येयः सुरोत्तमः ।
कृतयज्ञफलं कस्य चार्प्यते मुनिसत्तमाः' ॥ ८
इति नारदवाक्यन्तु श्रुत्वा ते मुनिपुङ्गवाः ।
संशयार्थं समापन्नाः कथमत्र विचार्यताम् ॥ ९

सम्मिलित्वा तदा सर्वे भृगुं ब्रह्मविदां वरम् ।
तमूचुर्भक्तिनम्राङ्गाः कृताञ्जलिपुटाः स्थिताः ॥ १०
'गच्छ शीघ्रं महाबुद्धे! परीक्षार्थं सुरोत्तमान्' ।
इति तेषां वचः श्रुत्वा ययौ कञ्जजमन्दिरम् ॥ ११
तत्र दृष्ट्वाऽष्टबाहुं तं साक्षाद्ब्रह्माणमग्रजम् ।
चतुर्मुखमुदाराङ्गं सरस्वत्या सुसेवितम् ॥ १२
चतुरास्यसमुद्भूतवेदघोषविराजितम् ।
दिक्पालकगणैः सार्धं किरीटमकुटोज्ज्वलम् ॥ १३
स्तुवन्तं जगदीशानं नारायणमनामयम् ।
प्रणमद्भक्तिभावेन मददीप्तिविराजितम् ॥ १४
पातयामास कायं स्वं पुरतः कञ्जजन्मनः ।
पतितं स भृगुं दृष्ट्वा नोवाच वचनं विधिः ॥ १५
तं मत्वा किञ्चिदज्ञानात् अपूज्यं मुनिपुङ्गवः ।
अलब्ध्वा स्वात्मनः कार्यं कैलासं स ऋषिर्ययौ ॥ १६
कैलासगिरिमासाद्य तत्राद्राक्षीत त्रिलोचनम् ।
कामुकं पार्वतीदेव्या क्रीडन्तं निजमन्दिरे ॥ १७
तस्मिन् काले तमायातं नाजानात्कामुको हरः ।
आगतं सा मुनिं दृष्ट्वा पार्वती लज्जयाऽवदत् ॥ १८
'त्यज शीघ्रं महाबाहो ह्यागतो मुनिपुङ्गवः' ।
इति तस्या वचः श्रुत्वा क्रोधात्ताम्रविलोचनः ॥ १९
तं हन्तुमद्रवच्छीघ्रं ऋषिः शापान्निराकरोत् ।
शशाप स ऋषिः शम्भुं 'लोके त्वं नैव पूज्यसे ॥ २०
त्वं शेफःपूजनेनैव लोके ख्यातिं गमिष्यसि' ।
इत्युक्त्वा स ऋषिश्चागात् वैकुण्ठं हरिमन्दिरम् ॥ २१

प्राकारगोपुरद्वारनवतोरणभूषितम् ।
चतुर्दिक्षु चतुर्द्वारपालकैरुपशोभितम् ॥ २२

तत्र शय्यागृहे रम्ये शेषमञ्चकशायिनम् ।
लक्ष्म्या समेतं देवेशं ददर्श स भृगुस्तदा ॥ २३

तताडोरसि गोविन्दं भृगुः पादतलेन तम् ।
ताड्यमानो हरिः साक्षात् उत्थाय विनयान्वितः ॥ २४

पपात भगवान् भक्त्या ऋषिपादसरोरुहे ।
आलिलिङ्गेऽथ भक्त्यैव चोवाच ऋषिपुङ्गवम् ॥ २५

## भृगुं प्रति श्रीवैकुण्ठनाथोक्तविनीतवचनम्

श्रीभगवान्—'किमर्थं त्वमृषिश्रेष्ठ! मच्छरीरं कठोरकम् ।
अताडयोऽजरायुक्तमभेद्यं देवमानवैः ॥ २६

वज्रादष्टगुणां विद्धि मच्छरीरे कठोरताम् ।
किमर्थं ताडितं विप्र! कोमलाङ्घ्रितलेन तत् ॥ २७

पादौ ते कोमलौ दिव्यौ मच्छरीरसमागमात् ।
कियद्दुःखं समापन्नौ न जानामि द्विजोत्तम!' ॥ २८

इत्युक्त्वा द्विजपादौ तौ प्रक्षाल्योष्णोदकेन वै ।
दधार शिरसा भक्त्या विप्रपादोदकं शुभम् ॥ २९

जगृहे सकुटुम्बश्च सर्वलोकं विडम्बयन् ।
विबुधा दर्शनेनैव पुनन्ति च जगत्त्रयम् ।
इत्युक्तो देवदेवेन ऋषिश्चागाद्धरातलम् ॥ ३०

## भगवतो भृगुकृतसात्त्विकदेवतात्वसमर्थनम्

ऋषीणामग्रजातीनां सभायां स ऋषिस्तदा ।
बोधयामास तान् सर्वान् 'हरिः सर्वोत्तमः स्वयम् ॥ ३१

हरिः सर्वोत्तमः साक्षाद्रमा देवी तदन्तरा ।
तदधो विधिवाण्यौ च तदधः शर्वपूर्वकाः ॥ ३२
एवं तरतमात् ज्ञेयाः सुरदैत्यनरेषु च' ।
इत्येवं बोधिता विप्रा भृगुणा तत्त्ववेदिना ।
हरिं निश्चित्य सर्वेशं चक्रुस्तस्मै मखार्पणम् ॥ ३३

## भृगुपादाहतिकुपितायाः लक्ष्म्याः करवीरपुरगमनम्

ततस्तु भगवान् देवः एकान्ते निजमन्दिरे ।
सार्धञ्च रमयाऽतिष्ठत् तदोवाच रमा हरिम् ॥ ३४
श्रीरमा— 'गच्छामि देवदेवेश! त्यक्त्वा त्वां जगदीश्वर! ।
ताडितोऽसि जगन्नाथ! ऋषिणा त्वं जगन्मयः ॥ ३५
मदालिङ्गस्थले देव! पादेनैव जगत्पते ।
करवीरपुरं दिव्यं गच्छामि गरुडध्वज' ॥ ३६
इति प्रेम्णा च कलहं कृत्वा तु हरिणा सह ।
रमा जगाम तत्क्षेत्रं करवीरपुराह्वयम् ॥ ३७

## लक्ष्म्यन्वेषणार्थं श्रीवेङ्कटाचलं प्रति भगवदागमनम्

यदा गता महालक्ष्मीः तदा नारायणो हरिः ।
'आविंशतितमे प्राप्ते द्वापरान्ते कलौ युगे ॥
यस्मिन् देशे यदा प्रेमकलहोऽस्याः प्रशाम्यति ॥ ३८
कर्मणा येन च यथा तत्तथा च करोमि तत्' ।
इति सङ्कल्प्य गोविन्दो लीलामानुषविग्रहः ॥ ३९
मायावी परमानन्दं त्यक्त्वा वैकुण्ठमुत्तमम् ।
गङ्गाया दक्षिणे देशे योजनानां शतत्रये ॥ ४०

सुवर्णमुखरी नाम नदीनां प्रवरा नदी ।
शुकस्य वरदा पुण्या ह्यगस्त्यमुनिपूजिता ॥ ४१
तस्या एवोत्तरे तीरे क्रोशार्धद्वयमात्रके ।
श्रीवेङ्कटगिरिर्नाम वर्तते पुण्यकाननः ॥ ४२
सुवर्णगिरिपुत्रस्तु सर्वतीर्थसमन्वितः ।
साक्षाच्छेषावतारोऽसौ सर्वधातुविराजितः ॥ ४३
वैकुण्ठसदृशो दिव्यो नारायणसमाश्रयः ।
शेषमारुतसंवादात् आगतः पुण्यकाननः ॥ ४४
योजनत्रयविस्तीर्णः त्रिंशद्योजनमायतः ।
वदनं वेङ्कटगिरिः नृसिंहाद्रिश्च मध्यमः ॥ ४५
श्रीशैलः पुच्छभागस्थः सर्वक्षेत्रमयो गिरिः ।
सर्ववृक्षसमाकीर्णः सर्वधातुविभूषितः ॥ ४६
कुन्दमन्दारपनसप्लक्षोदुम्बरकिंशुकैः ।
पिचुमन्दैः पारिजातैः तिन्त्रिणीजम्बुमण्डलैः ॥ ४७
सरलैश्च महावृक्षैः कृष्णागरुभिरञ्चितः ।
तालहिन्तालपुन्नागैः देवदारुभिराश्रितः ॥ ४८
हंसकारण्डवाकीर्णः बककोकशुकैर्युतः ।
कपोतैः क्षीरहंसाद्यैः मृगषण्डैश्च भूषितः ॥ ४९
सिंहशार्दूलशरभक्रोडमातङ्गवानरैः ।
जम्बुकैश्चैव भल्लूकैः कस्तूरीमृगमाहिषैः ॥ ५०
उरगैर्व्यालखड्गैश्च गोमायुभिरपि श्रितः ।
मल्लिकामालतीजातिनन्द्यावर्तैर्विराजितः ॥ ५१
चम्पकाशोकपुन्नागकेतकैः स्वर्णकेतकैः ।
एवं मनोहरः श्रीमान पर्वतः पुण्यकाननः ॥ ५२

तरवो दैवतगणाः मृगाश्च ऋषिपुङ्गवाः ।
पितरः पक्षिणः सर्वे पाषाणा यक्षकिन्नराः ॥ ५३

एवं प्रभावोऽस्य गिरीन्द्रजन्मनः
श्रीवेङ्कटाद्रेस्तु हरेस्तथैव ।
जानन्ति न ब्रह्मशिवेन्द्रपूर्वकाः
अत्यल्पवीर्या मनुजास्तु किं पुनः ? ॥ ५४

इति श्रीभविष्योत्तरपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये
भगवतः श्रीवैकुण्ठाद्वेङ्कटाचलागमनवर्णनं
नाम द्वितीयोऽध्यायः ।



अथ तृतीयोऽध्यायः



## श्रीस्वामिपुष्करिणीमाहात्म्यम्

शतानन्दः–

तस्योपरि वरा दिव्या स्वामिपुष्करिणी शुभा ।
मत्स्यकच्छपसम्बाधा जलकुक्कुटभूषिता ॥ १
शिंशुमारगणाकीर्णा मण्डूकस्वरहुङ्कृता ।
तीरजैर्वृक्षसङ्घैश्च तुङ्गैराचुम्बिताम्बरा ॥ २
गङ्गादिसर्वतीर्थानां जन्मभूमिर्विराजते ।
तस्यां ये स्नान्ति मनुजाः ते धन्याः पुण्यवर्धनाः ॥ ३
धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।
काङ्क्षन्ति विबुधश्रेष्ठाः मज्जनं तज्जले शुभे ॥ ४

काङ्क्षन्ति मनुजाः स्नानं इति भोः! किं वदामि ते ।
येऽत्र श्राद्धादिकर्माणि पितॄणां कुर्वते द्विजाः ॥ ५
तेषाञ्च पितरस्तुष्टाः नृत्यन्ति हरिमन्दिरे ।
जन्मना किमनेनेह व्यर्थेन भवनामहो! ॥ ६
स्नानदानेन तत्तीर्थे मनुजा भाग्यशालिनः ।
शङ्खो नाम नृपः कश्चित् स्नानमात्रेण राज्यगः ॥ ७
पुरा नारायणो नाम ब्राह्मणोऽङ्गिरसः सुतः ।
स्वामिपुष्करिणीतीर्थे महिम्ना स्नानजेन हि ॥ ८
वरं लब्ध्वा हरिं दृष्ट्वा जगाम हरिमन्दिरम् ।
रामोऽपि तत्र स्नानेन हृतां सीतामगात्पुरा ॥ ९
एवं तीर्थवरा तत्र स्वामिपुष्करिणी शुभा ।
तस्याः पश्चिमदिग्भागे वराहवदनो हरिः ॥ १०
धरामालिङ्ग्य वल्मीके आस्ते पिप्पलराजिते ।
त्रिकोटितीर्थजातानां जन्मस्थानं स भूधरः ॥ ११
एवं गिरिवरं प्राप्य भगवान् वेङ्कटाचलम् ।
वैकुण्ठादधिकं मत्वा विचचार ततस्ततः ।
न प्राप किञ्चिदास्थानं गूहनार्थं रमापतिः ॥ १२

## श्रीनिवासस्य स्वामितीर्थपश्चिमतीरस्थवल्मीकप्रवेशप्रकारः

इत्थं विचार्यमाणे तु स्वामिपुष्करिणीतटे ।
दक्षिणे विमलं दिव्यं वल्मीकं दृष्टवान् मुदा ॥ १३
तिन्त्रिणीवृक्षमूलस्थं भगवान् जगदीश्वरः ।
मत्वेदं परमं स्थानं तत्र लीनोऽभवद्धरिः ।
एवं देवे स्थिते तत्र विगतं वत्सरायुतम् ॥ १४

अतीते द्वापरे चैव त्वष्टाविंशतिमे कलौ ।
अतीते वत्सरे कश्चित् चोलराजो नृपोत्तमः ॥ १५
अवतारं समापन्नो नागकन्योदरे तथा ।
तस्मिञ्छासति भूखण्डं बहुपुण्यफलप्रदम् ॥ १६
बहुक्षीरप्रदा गावः पुत्रा वै पितृवत्सलाः ।
काले ववर्ष पर्जन्यः सस्या वै बहुधान्यदाः ॥ १७
नार्यः पतिव्रताः सर्वा पुरुषाश्च सतीव्रताः ।
इत्थं शासति राज्यस्मिन् जना आनन्दतत्पराः ॥ १८

## आकाशनृपगृहे ब्रह्मादीनां धेन्वादिरूपेण स्थितिः

तस्मिन् काले विधिः साक्षात् धेनुरूपं समाश्रितः ।
ब्रह्मा धेनोः पालिकाऽभूत् गोपाली कमलाऽलया ॥ १९
साक्षाद्रुद्रो वत्सरूपी ताभ्याञ्चेयं समागता ।
पश्यन्ती पतिमार्गन्तु चोलराजं समभ्यगात् ॥ २०
चोलराजगृहं प्राप्य सा मौल्येन सवत्सकाम् ।
विक्रीय गां महालक्ष्मीः जगाम निजधाम च ॥ २१
गृहीत्वा तां महीपालो मुदमाप प्रियान्वितः ।
बहुक्षीरप्रदां तां सः पुत्रार्थमकरोत्तदा ॥ २२
ततो धेनुसहस्रेण साकं श्रीवेङ्कटाचले ।
सा गौर्जगाम नित्यन्तु रमानाथं विचिन्वती ॥ २३
तत्र तत्र समाजिघ्रन् भूधरेन्द्रे वृषाकपिम् ।
विचिनोति स सर्वत्र धेनुरूपी विधिस्तदा ॥ २४
ततः कालेन महता स्वामिपुष्करिणीतटे ।
वल्मीकस्थं हरिं ज्ञात्वा तुतोष मनसा विधिः ॥ २५

समसिञ्चच्च वल्मीकं समन्तात् क्षीरधारया ।
तदाप्रभृति नित्यं तु राजधेनुगणैः सह ॥ २६
तत्र गत्वा च भक्त्यैव वल्मीके क्षीरसेचनम् ।
जगन्नाथस्य सम्प्रीत्यै धेनुरूपी पितामहः ॥ २७
चकारानुदिनं गेहे नैव क्षीरं ददौ तदा ।
चिरमेवं गते काले चोलराजसती स्वयम् ॥ २८
धेनुपालं समाहूय वचनं चेदमब्रवीत् ।
'गवां पालक! दुर्बुद्धे! पयोऽस्याः किं करोषि रे? ॥ २९
किं त्वं भुङ्क्षेऽथ वा वत्सो भुङ्क्ते? तद्वद मे द्रुतम्' ।
इति तस्या वचः श्रुत्वा गोपालो भयविह्वलः ।
उवाच वचनं मन्दं राजभार्यां सगद्गदम् ॥ ३०

## गोक्षीरपायिनं श्रीनिवासं प्रति गोपालकृतताडनम्

'न जानेऽहञ्च तत्कर्म न मया पीयते पयः ।
स्वयं पिबति वा धेनुः वत्सो वेति न विद्महे ॥ ३१
सत्यं वचनमेतद्धि विचारं कुरु भामिनि!' ।
इति गोपवचः श्रुत्वा सा सती विह्वलेक्षणा ॥ ३२
ताडयामास तं गोपं रज्जुभिश्चर्मनिर्मितैः ।
ततः परदिने प्राप्ते ताडितो राजभार्यया ॥ ३३
कण्ठाङ्घ्रिबद्धरज्जुं तां त्यक्त्वा तत्पृष्ठतो ययौ ।
धेनुः प्राप्याथ वल्मीकं दिव्यं तद्धरिमन्दिरम् ॥ ३४
अभ्यषिञ्चत् पयोभिश्च स्वपयोधरसम्भवैः ।
तां दृष्ट्वा धेनुपः कोपात् कुठारं हस्तमात्तकम् ॥ ३५

उद्धृत्य तरसा तस्याः वधोद्योगं समाचरत ।
तदा वल्मीकगः स्वामी वात्सल्यं दर्शयन् हरिः ॥ ३६
'स्वभक्तहननं लोके स्वात्मार्थं सहते तु यः ।
स एव नरकं भुङ्क्ते यावदाचन्द्रतारकम् ॥ ३७
मदर्थे च कुठारेण हनिष्यति च गां खलः' ।
इति मत्वा रमाकान्तः श्रीनिवासो निरामयः ॥ ३८
तुलसीदलमालेण मामकेनैव यः पुमान् ।
पूजयेद्भक्तिभावेन तं रक्षामीति मत्पणः ॥ ३९
इयं तु भक्त्या मां नित्यं सिञ्चति क्षीरधाया' ।
इत्थं विचार्य गोविन्दः तत्प्रहारं निगृह्य च ॥ ४०
स्वयं जग्राह तं घातं मौलौ स्वे च जगत्पतिः ।
कुठारेणातितीक्ष्णेन ताडिते वेङ्कटेश्वरे ॥ ४१
शिरःस्फोटं समापन्ने कुठारेण तदोत्थिता ।
सप्ततालप्रमाणेन रक्तवृद्धिरभूत्तदा ॥ ४२
स तं कोलाहलं दृष्ट्वा गोपालो मरणं ययौ ।
हते गोपे तदा सा गौः अवरुह्य गिरेस्तटात् ॥ ४३
राजानं समनुप्राप्य वत्सहीनेव दुःखिता ।
लुण्ठनं परिचक्रेऽथ राजाग्रे राजमन्दिरे ॥ ४४

## मृतगोपविलोकनार्थं श्रीवेङ्कटाचलं प्रति नृपागमनम्

तां दृष्ट्वा विह्वलां गां सः लुठन्तीं चारमब्रवीत् ।
'किमर्थं लुठतीयं गौः त्यक्ता गोसन्ततिः कुतः? ॥ ४५
गवासार्धं गच्छ चार! मेलयैनां गवां गणे' ।
इति राज्ञा समाज्ञप्तः चारस्तत्पृष्ठतो ययौ ॥ ४६

आरुह्य वेङ्कटगिरिं वल्मीकाग्रमुपाश्रितः ।
पतितं धेनुपं दृष्ट्वा वल्मीकाग्रात् समुत्थिताम् ॥ ४७
रक्तवृद्धिं घोरतरां सप्ततालप्रमाणिकाम् ।
संवीक्ष्य नृपचारोऽथ जगाम नृपमन्दिरम् ॥ ४८
चारस्तमानम्य नरेन्द्रसन्निधौ गोपालकृत्यं सकलं जगाद ।
गोपालघातेन कृतं सरक्तं वल्मीकरन्ध्रं तमुवाच दीनः ॥ ४९
रक्तवृद्धिं ततः श्रुत्वा राजा विस्मितमानसः ।
आरुह्य नरयानञ्च शीघ्रमागात् वृषाचलम् ॥ ५०
वल्मीकस्यान्तिके स्थित्वा स इदं वाक्यमब्रवीत् ।
'किमिदं भो महत्कष्टं केन पापेन वै कृतम् ॥ ५१
धेनुपालस्य मरणं वल्मीकं रक्तपूरितम् ।
गवा वृत्तान्तकथनं किमिदं वेङ्कटाचले' ।
इति राजवचोऽश्रौषीत् वल्मीकस्थो जगत्पतिः ॥ ५२
उद्भिद्य वल्मीकमनन्तवीर्यवान् अनन्तशैलेन्द्रतलं समाश्रितः ।
श्रीस्वामितीर्थस्य च दक्षिणे तटे वल्मीकगः श्रीभगवानुवाच ॥ ५३
सगद्गदोत्कण्ठसमाकुलाननः सरक्तबाष्पोदकपूर्णलोचनः ।
चोलं नृपेन्द्रं बहुनिष्ठुरं गिरा सशङ्खचक्रप्रतिमां समाश्रितः ॥ ५४

## नृपं प्रति वल्मीकनिर्गतश्रीनिवासशापः

श्रीभगवान्—

'पापिष्ठोऽसि दुराचार! राज्यगर्वमदोन्नत! ।
अनाथं भक्तहीनं मां दरिद्रं वनचारिणम् ॥ ५५
पितृमातृविहीनञ्च भार्याबन्धुविवर्जितम् ।
सुभ्रातृहीनं कुटिलः कुठारेणासिधारिणा ॥ ५६

अताडयत् नृपश्रेष्ठ! तद्दुःखमतुलं ह्यभूत् ।
धेनुपालायुधाघाताज्जातं दुःखं महाद्भुतम् ॥ ५७
शिरो भिन्नं धेनुपेन दयाहीनेन दुर्मते! ।
यजमानो गृहे यस्तु न विचारपरो भवेत् ॥ ५८
स्त्रीपुत्राद्यैः कृतं कर्म तस्यानिष्टकरं विदुः' ।
इत्युक्त्वा भगवान् देवः शशाप नृपपुङ्गवम् ॥ ५९
'पिशाचो भव दुर्बुद्धे! मद्दुःखाधानकर्मणा' ।
इत्थं शप्तो नृपश्रेष्ठः पतितः शापमूर्छितः ।
मुहूर्तान्ते समुत्थाय प्रोवाच जगदीश्वरम् ॥ ६०

इति श्रीभविष्योत्तरपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये स्वामितीर्थपश्चिमतीरस्थवल्मीकात् श्रीनिवासाविर्भाववर्णनं नाम तृतीयोऽध्यायः ।

---

अथ चतुर्थोऽध्यायः

---

## नृपं प्रति श्रीनिवासकृतशापहेतूपन्यासः

राजा–
'किमर्थमशपो देव! माऽपराधविवर्जितम् ।
अविचार्य जगन्नाथ! किं मयाऽऽचरितं तव ॥ १
न जानेऽहं किञ्चिदपि दुःखदं ते रमापते! ।
हा कष्टमतुलं प्राप्तं कथमत्र जगत्पते!' ॥ २
इति तेन स विज्ञप्तः श्रीनिवासोऽतिदुःखितः ।
उवाच मन्दं वचनं राजानं शापमूर्च्छितम् ॥ ३
श्रीनिवासः–'पापिष्ठोऽहं दुराचारोऽस्म्यविचारी नृपोत्तम! ।
अज्ञानेनातिदुःखेन वृथा शापो मयाऽर्पितः ॥ ४

तथाऽपि मां विदुर्देवाः भगवन्तं सनातनम् ।
यतोऽतो मद्वचः सत्यं मद्भक्ता मामुपासते ॥ ५
मच्छापो ह्यनृतो न स्यात् इति वेदविदो विदुः ।
भक्तवात्सल्यदोषेण दुःखितोऽहं भवामि च ॥ ६
यावत्कलियुगं तिष्ठेत् तावद्दुःखी भवान् नृप! ।
उभौ दुखं समापन्नौ सत्यसङ्कल्पदोषतः ॥ ७
भविष्यति नृपश्रेष्ठ आकाश इति नामवान् ।
सोऽपि मे दास्यते कन्यां नाम्ना पद्मावतीं शुभाम् ॥ ८
कन्यादानस्य काले च ददाति वरदक्षिणाम् ।
किरीटं शतभारश्च रत्नवज्रसमाकुलम् ॥ ९
शुक्रवारे तु मायाह्ने किरीटं धारयाम्यहम् ।
किरीटधारणे स्यातां नेत्रे मे जलपूरिते ॥ १०
घटिकाषट्कमात्रं ते सुखं तत्र भविष्यति' ।
इति कालावधिं कृत्वा राज्ञः स्वस्य च माधवः ॥ ११
सुखस्य कालं संसूच्य स्वावतारप्रयोजनम् ।
स्वावतारस्य चरितं कलौ कन्यापरिग्रहम् ॥ १२
इति सम्भाष्य राजानं तत्राऽस्ते भगवान् हरिः ।
क्षतशान्त्यर्थमाकाङ्क्षन् वैद्यशास्त्रविशारदम् ॥ १३
गुरुं सुरपतीनाञ्च सस्मार जगदीश्वरः ।
आगतञ्च गुरुं दृष्ट्वा 'स्वौषधं वद मे द्रुतम्' ॥ १४

### भगवत्क्षतापनोदनाय गुरुकृतचिकित्साप्रकारः

इति तेन समाज्ञप्तो जीवो जीववतां वरः ।
'क्षीरमौदुम्बरं देव! तथा कार्पासमर्कजम् ॥ १५

मेलयित्वा रमाकान्त! तरक्षतोपरि धार्यताम्' ।
इत्येवं गुरुणाऽऽज्ञप्त· तच्चकार यथोदितम् ॥ १६

## श्रीवेङ्कटाचलस्य अयोध्यामथुरादितौल्यवर्णनम्

एवं कुर्वन् रमानाथः तत्र लीनोऽभवद्धरिः ।
कौसल्या कीटकगृहं तिन्त्रिणी दशदिग्रथः ॥ १७
गिरिरूपोऽनुजः साक्षात् अयोध्याऽभूदधित्यका ।
इत्थं रामावतारेण समां क्रीडामकल्पयत् ॥ १८
वल्मीकं देवकी साक्षात् वसुदेवोऽथ तिन्त्रिणी ।
बलभद्रः शेषशैलो मथुराऽभूदधित्यका ॥ १९
स्वामिपुष्करिणी तत्र यमुना च व्यराजत ।
यादवाश्च मृगाः सर्वे खगा वै गोपिकादयः ॥ २०
एवं श्रीकृष्णरूपेण क्रीडितो वेङ्कटाचले ।
'अरायिकाणे विकटे गिरिं गच्छेति तं विदुः ॥ २१
एवं वेदमयः साक्षात् गिरीन्द्रः पन्नगाचलः ।
छन्नवल्मीकदेहाढ्यो वैकुण्ठादधिको ह्यभूत् ॥ २२
सुवर्णमुखरी नाम नदी सा विरजा नदी ।
वैकुण्ठो वेङ्कटगिरिः वासुदेवो रमापतिः ॥ २३
मुक्ता अजाः पक्षिगणाः मुक्ता रुद्रामृतोत्तमाः ।
सनत्कुमारप्रमुखाः वानराद्या द्विजोत्तमाः ॥ २४
मानुषं जन्म चाऽऽस्थाय यः पुमान् वेङ्कटाचलम् ।
गन्तुमिच्छति धर्मिष्ठः तेन सर्वमनुष्ठितम् ।
प्रीतो भवेद्रमानाथः सर्वदेवनमस्कृतः ॥ २५

श्रीवेङ्कटाद्रेर्महिमानमुत्तमं जानन्ति न ब्रह्मशिवेन्द्रपूर्वकाः ।
किमल्पवीर्या मनुजास्तमोगताः जानन्ति विष्णोः स्थलमद्भुतं हि तत् ॥ २६

इति श्रीभविष्योत्तरपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये नृपंप्रति श्रीनिवासकृतशापहेतूपन्यासादिवर्णनं नाम चतुर्थोऽध्यायः ।

अथ पञ्चमोऽध्यायः ।

## पद्मावतीपरिणयोपोद्घातः

ऋषयः—

'सूत ! सूत ! महाभाग ! सर्वशास्त्रविशारद ! ।
श्रुतं श्रीवेङ्कटेशस्य माहात्म्यं पापनाशनम् ॥ १
अवतारप्रभावश्च चोलराजनिबन्धनम् ।
वैकुण्ठाच्चैवागमनं चरितं लौकिकं परम् ॥ २
कृपालोऽसि दयासारः शिष्यप्रीतिपरायणः ।
तत्कल्याणविधिं ब्रूहि को वाऽऽकाशनृपोत्तमः ॥ ३
कथं पुत्र्यभवत्पूर्वं कथं जामातृतां गतः ।
योगिनां मनसाऽचिन्त्यः श्रीनिवासः सतां गतिः ॥ ४
तत्त्वेन ब्रूहि भगवन्! साङ्गं वैवाहिकं शुभम् ।
यः पुमान् वेङ्कटेशस्य महिमर्क्षरसागरे ।
स्नानाचारपरो नित्यं स धन्यः पुण्यवर्धनः' ॥ ५
एवं मुनीनां वचनं निशम्य सूतो नितान्तं निजशिष्यसङ्घान् ।
उवाच भक्त्या ह्यतिनम्रदेहः साध्वित्यसौ तान् कृपयाऽभिनन्दन् ॥ ६

श्रीसूतः—

शृण्वन्तु मुनयः सर्वे भक्तिभावेन संयुताः ! ।
पन्नगाचलनाथस्य कन्यासङ्ग्रहणं शुभम् ॥ ७

कदाचिद्वेङ्कटेशस्तु स्वौषधार्थं स्वयं हरिः ।
गमनाभिमुखो भूत्वा निर्जगामारुणोदये ॥ ८

तस्मिन् काले वराहस्तु मृगयायां स सूकरः ।
श्यामाकहारिणं जित्वा दैत्यं वृषभनायकम् ॥ ९

समागच्छत्तदा देवो वेङ्कटेशं ददर्श सः ।
गर्जन्तः 'कोऽसि कोऽसीति' सूकरास्तत्र चाऽययुः ॥ १०

तान् दृष्ट्वा जगदीशस्तु तत्र लीनोऽभवद्धरिः ।
लीनं तं वेङ्कटे दृष्ट्वा वराहवदनो हरिः ॥ ११

वैकुण्ठादागतं मत्वा वेङ्कटेशं श्रियः पतिम् ।
उवाच वचनं देवं धैर्यमालम्ब्य बुद्धिमान् ॥ १२

सोऽपि श्वेतवराहं तं जानन् वल्मीकतस्तदा ।
निरीक्षमाणः सोत्कण्ठं निर्गत्योत्तरमभ्यधात् ॥ १३

ततोऽन्योन्यविलोकोत्त्थबाष्पसन्दिग्धलोचनौ ।
क्रोडनारायणौ साक्षात् रूपद्वन्द्वविराजितौ ॥ १४

ऊचतुर्भाषणञ्चोभौ कृतलोकविडम्बनौ ।
तयोस्तदद्भुतं कर्म दृष्ट्वा ब्रह्मपुरोगमाः ।
ववृषुः पुष्पवर्षाणि क्रोडनारायणोपरि ॥ १५

'यथायुगं यथादेशं यथाकालं यथावयः ।
तथाऽवतारमाकाङ्क्षन् रमते प्राकृतो यथा' ॥ १६

एवं वदन्तः सुरपुङ्गवास्ते विचित्रमायां जगदीशचेष्टाम् ।
स्तुवन्त ऊचुस्तमनन्तवीर्यं अनन्तशैलञ्च रमापतिञ्च ॥ १७

## श्रीवराहानुज्ञया श्रीनिवासस्य शेषाचलप्राप्तिः

इत्यन्योन्यं भाषमाणौ साक्षान्नारायणावुभौ ।
सकौतुकञ्च संवीक्ष्य स्तुत्वा स्वं स्वं पदं ततः ॥ १८
गते देवगणे तत्र वराहो हरिमब्रवीत् ।
श्रीवराहः– 'त्यक्त्वा वैकुण्ठलोकन्तु किमर्थं त्वमिहाऽऽगतः' ॥ १९
तद्वदस्व महाभाग ! जगदानन्दकारण !' ।
इति तेन समाज्ञप्तो न्यगदत्कोलरूपिणा ॥ २०
श्रीनिवासः–'भृगोरङ्घ्रिप्रपाताच्च रमा कोल्हापुरं गता ।
तेन दुःखेन सन्तप्तः त्यक्त्वा वैकुण्ठमुत्तमम् ॥ २१
आगतोऽस्मि धराकान्त ! वल्मीके तव दक्षिणे ।
निवसन्तञ्च मां देव! धेनुपालो ह्यताडयत् ॥ २२
कुठारेणासिधारेण तत्क्षतं मां प्रबाधते ।
औषधार्थं वराहात्मन्! गच्छामीह निरन्तरम् ॥ २३
दैवेन दृष्टवानस्मि त्वामद्येह धराधरम् ।
अत्रैव निवसामीति सङ्कल्पो मम वर्तते ॥ २४
स्थलं देह्यवनीकान्त! यावत्कलियुगं भवेत्' ।
इति तेन स विज्ञप्तो वराहवदनो हरिः ॥ २५
उवाच वचनं देवः 'स्थलं मौल्येन गृह्यताम्' ।
इति वाक्यं ततः श्रुत्वा प्रोवाच मधुरं वचः ॥ २६
'प्रथमं दर्शनञ्च स्यात् नैवेद्यं क्षीरसेचनम् ।
इदमेव परं द्रव्यं ददामि करुणानिधे! ॥ २७
दास्यामि यत्ते भूकान्त! तदङ्गीकुरु माधव! ।
वरं द्रव्यमिदं तात! कृपां कुरु कृपानिधे!' ॥ २८

इत्युक्तो हरिणा पोत्री हरये स्थानकाङ्क्षिणे ।
तदा ददौ स्थलं पादशतमात्रं रमापतेः ॥ २९

परस्परं विनोदेन कुर्वाणावेकरूपिणौ ।
मोहनार्थमभक्तानां भक्तानां भक्तिसिद्धये ॥ ३०

सङ्क्रीडाते वेङ्कटेशक्रोडरूपौ सुरोत्तमौ ।
तदारभ्य धराकान्तो वकुलां पाककारिणीम् ॥ ३१

अर्पयामास देवस्य सेवार्थं वेङ्कटेशितुः ।
भोजनार्थं रमेशस्य श्यामाकान्नं निरन्तरम् ॥ ३२

समधु प्रेषयन्नित्यं तया वकुलमालया ।
सा बाला भक्तिनिरता श्रीनिवासस्य सन्निधौ ॥ ३३

अन्नपानौषधाद्यैश्च पादसंवाहनादिभिः ।
पूजयामास गोविन्दं श्रीनिवासं निरामयम् ॥ ३४

ऋषयः— श्रुतं सूत महाभाग! देवागमनमुत्तमम् ।
न श्रुतं श्रीवराहस्य प्रथमं दर्शने फलम् ॥ ३५

श्रीनिवासस्य कृष्णस्य कल्याणं शुभदं महत् ।
पुनः श्रीवेङ्कटगिरौ वासः श्रीशार्ङ्गधारिणः ।
वकुला सेविका प्रोक्ता का सा पूर्वं वदस्व नः ॥ ३६

## वकुलमालिकाख्यभगवत्परिचारिकापूर्वजन्मवृत्तान्तः

श्रीसूतः— पुरा यशोदा वकुला कृष्णस्य जननी ह्यभूत् ।
अदृष्ट्वाऽनन्तरूपस्य कृष्णस्य तनयस्य सा ।
कल्याणं सुखदं स्वस्य तदयाचत तं हरिम् ॥ ३७

यशोदा— 'मनः सीदति मे कृष्ण! तव कल्याणवीक्षणे ।
दर्शयस्व रमानाथ! यशोदानन्दवर्धन! ॥ ३८

कल्याणादि महापुण्यं पावनं चरितं तव'।
तयेत्युक्तो रमानाथः सोऽवदन्मधुरं वचः ॥ ३९

श्रीभगवान्–'जन्मन्यनन्तरे देवि! तावकीनं मनोरथम्।
श्रीशैले पूरयिष्यामि किञ्चित्कालादनन्तरम्' ॥ ४०

देवेनेत्थं दत्तवरा साऽत्यजत्तेन हेतुना।
कलेवरं तु कल्याणी यशोदा नन्दवल्लभा ॥ ४१

तस्याः प्रीत्यै वासुदेवो ह्यष्टाविंशे कलौ युगे।
आविर्भूय यशोदाख्या· तोषकैर्गुणकर्मभिः ॥ ४२

क्रीडन्नास्ते जगद्योनिः निर्दोषोऽपीश्वरोऽपि च।
दैत्यानां वञ्चनायैव सुराणां मुक्तिहेतवे ॥ ४३

स्वभक्तानां हितार्थाय विरक्तानां विशेषतः।
मुक्तिमापादयन् देवः क्रीडते प्राकृताऽऽकृतिः ॥ ४४

इत्येवं कारणादेव यशोदा वकुलाऽभवत्।
सा करिष्यति कल्याणं हरेर्वेङ्कटवासिनः ॥ ४५

किमलभ्या हरौ तुष्टे ज्ञानविज्ञानसम्पदः।
कश्चिद्देवं पूजयति कश्चिद्देवेन पूज्यते ॥ ४६

हनूमता पूजितोऽपि स्वयमर्जुनमर्चति।
को वर्णयेद्धरेः क्रीडां विचित्रां जनपावनीम् ॥ ४७

नित्यशुद्धस्य वै विष्णोः यतोऽमुष्याभिवन्दने।
कृते पुण्यमृषीणामप्यकृते दोषसङ्ग्रहः ॥ ४८

तस्मात्पूज्यो हरिः सर्वैः ऋषिभिस्तत्त्वकोविदैः।
पितृभिर्भूमिपैर्विप्रैः मानवैः राक्षसैर्जडैः ॥ ४९

कलौ कलुषचित्तानां पापाचाररतात्मनाम्।
रक्षणार्थं रमाकान्तो रमते प्राकृतो यथा ॥ ५०

दैत्यानां मोहनार्थाय सुराणां मोदनाय च ।
क्रीडते बालकैर्बालो जगत्पालकबालकः ॥ ५१

जगन्मोहनसौन्दर्यलीलामानुषविग्रहः ।
नैतद्रूपं कृतं देवैः न कृतं विश्वकर्मणा ॥ ५२

स्वेच्छया क्रीडते तत्र स्वेच्छारूपविराजितः ।
क्षेत्रस्य महिमा दिव्यः तथा तीर्थस्य वैभवम् ॥ ५३

तत्र साक्षाद्रमाकान्तः किं तत्र सुकृतं कृतम् ? ।
बहुजन्मार्जितैः पुण्यैः लभ्यते क्षेत्रदर्शनम् ॥ ५४

तत्रापि वेङ्कटगिरेः दर्शनं मुक्तिदं परम् ।
दुर्लभं देवसङ्घानां मनुष्याणान्तु का कथा ? ॥ ५५

इति श्रीभविष्योत्तरपुराणे तीर्थखण्डे श्रीवेङ्कटाचलमाहात्म्ये
पद्मावतीपरिणयोपोद्घातादिवर्णनं नाम
पञ्चमोऽध्यायः ।

---

अथ षष्ठोऽध्यायः

## मृगयाविहारोद्युक्तश्रीनिवासालङ्कारवर्णनम्

श्रीसूतः– स कदाचिद्रमेशस्तु चिन्तयामास वै हयम् ।
मनसा चिन्त्यमाने तु हयः प्रत्यक्षतां गतः ॥ १

वायुरश्वत्वमापन्नो रज्जुस्तत्त्वाभिमानिनी ।
उपासर्पत्स्वयं लक्ष्मीः ततोऽश्वं तं स पूजयन् ॥ २

तस्योपरि समातिष्ठत् सर्वाभरणभूषितः ।
शुभ्रवस्त्रं पञ्चदशहस्तं बिभ्रत्तथोपरि ॥ ३

काञ्चीं बद्ध्वा रमाकान्तः काञ्चीदामविभूषितः ।
शुभ्रवर्णञ्चोत्तरीयं पञ्चहस्तं तथा दधत् ॥ ४
आदर्शालोकिते वक्त्रे धृत्वा शुभ्राञ्च मृत्तिकाम् ।
तन्मध्ये कुङ्कुमेनापि तिलकं सुमनोहरम् ॥ ५
पूगीफलञ्च ताम्बूलं चूर्णनिःक्षेपपात्रकम् ।
कर्पूरवासितैः पूगकाचैर्जातीफलैः शुभैः ॥ ६
लवङ्गैः पत्रसम्मिश्रैः गर्भितां रत्नपेटिकाम् ।
आदर्शमृत्तिकां शुभ्रां तथा कुङ्कुमभाजनम् ॥ ७
स्वर्णनिर्मितवस्त्रेण बद्ध्वा तु कटिमध्यतः ।
स्वर्णयज्ञोपवीताङ्गः कण्ठाभरणभूषितः ॥ ८
कङ्कणाङ्कितदोर्भ्याञ्च सम्पूर्णवरगात्रकः ।
भुजकीर्त्या रत्नमय्या राजमानोऽङ्गुलीयकैः ॥ ९
कुङ्कुमाक्तसुगन्धेन लिप्तोरोबाहुरञ्जितः ।
कबरीकृतकेशेषु रक्तवस्त्रं सुवेष्ट्य च ॥ १०
लम्बितैः पुष्पजालैश्च स्कन्धगैः परिभूषितः ।
सुवर्णरत्नसम्बद्धपादुकागूहिताङ्घ्रिकः ॥ ११
धनुर्बाणधरः श्रीमान् साक्षान्मन्मथमन्मथः ।
एवं मनोहरं रूपं धृत्वा श्रीवेङ्कटेश्वरः ॥ १२
हयं रत्नसमाकीर्णैः उपबर्हैर्विभूषितम् ।
सुवर्णतिलकोल्लासिवक्त्रं वायुमतोजवम् ।
नीलवर्णं पाण्डुपादं हस्तपञ्चदशोन्नतम् ॥ १३
आरुह्य देवमण्यादिसर्वलक्षणसंयुतम् ।
अवरुह्य गिरिश्रेष्ठात् मृगयार्थं जगाम सः ॥ १४

## मृगयाविहारसमये श्रीनिवासस्य कन्यादर्शनम्

मृगान् बहुविधाकारान् सिंहशार्दूलजम्बुकान् ।
मातङ्गान् शरभान् घोरान् तथा वै महिषानपि ॥ १५
जघान तान् वने देवः सञ्चरन् स इतस्ततः ।
तत्रैकं हस्तिनं दृष्ट्वा मदोन्मत्तं वनेचरम् ॥ १६
तं हन्तुमगमत्पृष्ठं अनुसृत्य रमापतिः ।
स जगाम वने दूरं भयाद्भीतो वृषाकपिः ॥ १७
स योजनार्धं गत्वा तु तत्र देवं जनार्दनम् ।
दण्डवत्पतितो भूत्वा शुण्डामुद्धृत्य गर्जयन् ।
यदा गतस्तदा कन्या दृष्टिमार्गमुपाश्रिता ॥ १८

ऋषयः—

'सा कन्या तस्य सम्बद्धा किमर्थं वनमागता ? ।
कस्येयं तनया कन्या ? तद्वदस्व महामुने !' ॥ १९
इति तैश्च स विज्ञप्तः सूतः परमधार्मिकः ।
उवाच वचनं भक्त्या सन्तोषोद्युक्तमानसः ॥ २०

श्रीसूतः—

शृण्वन्तु मुनयः सर्वे ! कन्याया जन्म पावनम् ।
पुरा तु द्वापरस्यान्ते पाण्डवानां महात्मनाम् ॥ २१
युद्धे तु भारतेऽतीते त्वष्टाविंशे कलौ युगे ।
विक्रमार्कादयो भूपाः स्वर्गलोकं यदा ययुः ॥ २२
तत्कालान्ते वत्सरेषु साहस्रेषु गतेषु वै ।
चन्द्रवंशे नृपः कश्चित् सुवीर इति विश्रुतः ॥ २३
जज्ञे सुधर्मस्तत्पुत्रः तत्सुतौ नृपपुङ्गवौ ।
आकाशतोण्डमानाख्यौ जातौ लोकयशस्करौ ॥ २४

धर्मिष्ठौ दृढभक्तौ तु नारायणपरायणौ ।
ज्येष्ठो वियन्नृपः साधुः कनिष्ठस्तोण्डमान् नृपः ॥ २५
तोण्डदेशाधिपो भूत्वा शशास पृथिवीमिमाम् ।
तस्मिन् शासति भूचक्रं इदं स्वर्ग इवाभवत्
निरातङ्कमभूत्सर्वं जगत् स्थावरजङ्गमम् ॥ २६
गावो बहुपयोदाश्च नार्यः पतिपरायणाः ।
कदाचित् पुत्रकाङ्क्षी स ह्येकान्ते भवने स्थितः ।
अपुत्रो नृपतिर्दुःखात् गुरुं प्रोवाच भक्तितः ॥ २७

## पुत्रालाभेन वियन्नृपानुभूतचिन्ताप्रकारः

'अनुभूतमिदं राज्यं हस्त्यश्वरथसङ्कुलम् ।
नानादानमकार्षञ्च तीर्थयात्रां विशेषतः ॥ २८
नानुभूतं पुत्रसुखं पितॄणां मुक्तिदं द्विज ! ।
किं मयाऽऽचरितं पापं कस्य पुत्रो हतः पुरा ? ॥ २९
केन पापेन विप्रेन्द्र ! न प्राप्तं पुत्रजन्म मे ? ।
नेत्राभ्यां नैव दृष्टञ्च पुत्रस्य मुखपङ्कजम् ॥ ३०
कर्णाभ्यां न श्रुतः शब्दः पुत्रेण रुदता कृतः ।
द्विजेन्द्रपितृबन्धूनां दुर्गतिश्च भवेत्तथा ॥ ३१
अपुत्रस्य गतिर्नास्तीत्येवं वेदविदो विदुः ।
पुत्रेण रुक्मपात्रे तु नान्नं भुक्तं मया सह ॥ ३२
कृतदोषेण न मया कदाचिल्लालितः सुतः ।
भूषणान्यादरात्कृत्वा न पुत्रोऽलङ्कृतो मया ॥ ३३
स सञ्जातो न मे यः स्यात् पुत्रः पितृहिते रतः ।
सुतार्थं कवचं कृत्वा त्वमेहीति स नोदितः ॥ ३४

पुत्रहीनञ्च मां दृष्ट्वा कर्षन्ति यमकिङ्कराः ।
'गच्छ राजन्! जवेनैव यमस्य भवनं त्वि'ति ॥ ३५
पाशकुण्ठितसर्वाङ्गः किमु वक्ष्याम्यपुत्रवान्? ।
चित्रगुप्तेन लिखितं अपुत्रत्वं महामते! ॥ ३६
मद्धर्मजेन सुकुलं मार्जितं तु कदा भवेत्? ।
'दुराचारोऽसि दुर्बुद्धिः अपुत्रे'ति यमेन च ॥ ३७
भाषितं वचनं श्रुत्वा कः पुमान् सुखमाप्नुयात्? ।
नष्टदीपोऽतिनैष्ठुर्यः कष्टोद्भूतकलेबरः ॥ ३८
वृथा जातोऽतिपापात्माऽस्म्यात्मनो नरकावहः ।
तन्तुहीनं कुलञ्चापि विगताम्बुञ्च वापिकाम् ॥ ३९
अङ्गनां भर्तृहीनाञ्च सन्तो निन्दन्ति संसदि ।
किं करोमि महीदेव क गच्छामीह का गतिः? ॥ ४०
कं देवं शरणं गत्वा भवाब्धिं प्रतराम्यहम्? ।
रुदन्तं पुत्रमालोक्य कदा प्रेम्णा तमाह्वये ॥ ४१
घण्टाञ्च प्रतिमां दत्त्वा पुत्रस्य फलकन्दुकौ ।
गजमारोप्य मां तात! कुर्वन् ग्रामप्रदक्षिणम् ॥ ४२
सभां गच्छाथ राजेन्द्र! तथा तालस्वनेन च ।
इति पुत्रेण सोत्कण्ठं कृतां मञ्जुलभाषिणा ॥ ४३
कदाचिदपि नैवाहं श्रुतवान् प्रार्थनामिति' ।
अजातपुत्रः शोकेन मूर्च्छामाप महीपतिः ॥ ४४
पुनः संज्ञामवाप्याथ विललाप सुदुःखितः ।
'कवचं कारयित्वा तु शिरोभूषणमप्यथ ॥ ४५
केशभूषणमत्यर्थं रत्नवज्रसमाकुलम् ।
कदाचिदङ्कमारोप्य न मयाऽलङ्कृतः सुतः ॥ ४६

नोपनीतोऽपि च प्रीत्या सुतो मे पञ्चवार्षिकः ।
अष्टमे वाऽथ दशमे न कृतो दारसङ्ग्रहः ॥ ४७

बालस्य जातकर्माऽपि नाकार्षं नापि चाभिधाम् ।
पुत्रार्जितं धनं ब्रह्मन्! नोपजीवितमद्य मे ॥ ४८

अभिषिच्य सुतं राज्ये भार्यया कृतभोजिना ।
न गतश्च वनं विद्वन्! पारम्पर्यक्रमान्मया ॥ ४९

अहो दरिद्रस्य महानुभाव! मे पुत्रेण हीनस्य कथं गतिर्भवेत्? ।
वृथा शरीरं घटकुड्यसन्निभं जातं सुधर्मस्य कुले सुपावने ॥ ५०

मनुष्याणामनाथानां दुर्लभं पुत्रजन्म च ।
बहुपुण्यवशात्पुत्रो जायते मानवोदरे ॥ ५१

कन्यकाऽपि न सम्भूता ह्यस्माकमतिपाप्मनाम् ।
सत्पुत्राः क्व नु जायेरन् धर्मसन्तानसंज्ञिकाः! ॥ ५२

वरदाच्युत रङ्गेश! जगन्नाथ जगद्गुरो! ।
सुब्रह्मण्य सुराधीश! राम! कृष्ण! नमोऽस्तुते ॥ ५३

वेङ्कटेश! रमाकान्त! वराहवदनाच्युत! ।
नारायण! रमाधीश! कृपां कुरु कृपानिधे! ॥ ५४

सुपुत्रवन्तः खलु भाग्यवन्तो ह्यपुत्रवन्तो भुवि दुःखवन्तः ।
संसारसिन्धोस्तरणेऽस्म्यशक्तः का मे गतिः कर्मफलानुभोगिनः'॥ ५५

एवमुक्त्वा महीदेवं विरराम महीपतिः ।
'पापिष्ठोऽहं दुराचारः पुत्रेणाहं दरिद्रितः ॥ ५६

हा कान् लोकान् गमिष्यामि क्रूरं वा नरकं गुरो! ।
क उपायो महाप्राज्ञ! पुत्रलाभे द्विजोत्तम!' ।
इति राजवचः श्रुत्वा गुरुर्वाक्यमुवाच ह ॥ ५७

## धरणीतलात् पद्मावत्युत्पत्तिवर्णनम्

गुरुः– 'यज्ञं कुरु नृपश्रेष्ठ! पुत्रस्तेन भविष्यति'।
गुरोर्वाक्यं समाकर्ण्य यज्ञायाशोधयद्धराम् ॥ ५८
स्वर्णलाङ्गलसङ्घैश्च द्विजमन्त्रिगणैस्तथा।
शोध्यमाने धरापृष्ठे तत्र पद्मं ददर्श सः।
सहस्रपत्रं राजेन्द्रः 'किमेत'दिति विस्मितः ॥ ५९
कन्याञ्च पत्रेषु रमाकृतिं शुभां दृष्ट्वाऽतिसन्तुष्टमना बभाषे।
'देवेन दत्ता त्वियमिन्दिराभा कन्याकुमारी कमलाभनेत्री' ॥ ६०
इत्थं समाभाष्य नृपोत्तमोऽसौ हस्ते प्रगृह्याऽशु बभाण दीनः।
'माया महेशस्य दुरत्यया हरेः केयं तु या सम्प्रति गृह्यते मया' ॥ ६१
इत्येवं संशयानं तं आकाशाख्यं नराधिपम्।
उवाचाऽकाशगा वाणी 'पुत्रीयं तव वल्लभा ॥ ६२
संरक्षैनां महाभाग! बहुकीर्तिफलप्रदाम्'।
इत्यनन्तगतां वाणीं श्रुत्वा राजाऽतिहर्षितः ॥ ६३
तां कन्यां प्रतिगृह्याऽशु स्वभार्यां प्रत्युवाच ह।
'शृणु भद्रे! महाप्राज्ञे! देवदत्तामिमां शुभाम् ॥ ६४
संवर्धय वरां पुत्रीं गर्भजातां सुतामिव'।
इत्युक्त्वा तत्करे दत्त्वा बहुदानमथाकरोत् ॥ ६५

## वियन्नृपस्य वसुदानाख्यसुतोत्पत्तिः

कन्याऽऽगमनपुण्येन सा देवी गर्भमादधे।
गर्भिणीं स्वसतीं दृष्ट्वा चक्रे पुंसवनं पतिः ॥ ६६
पञ्चमासे तु सञ्जाते सीमन्तं नृपपुङ्गवः।
कारयामास विधिना ब्राह्मणैर्यजुषां गणैः ॥ ६७

ततः कालेन सा साध्वी नवमासे गते सती ।
मासे तु दशमे प्राप्ते सुषुवे पुत्रमुत्तमम् ॥ ६८
कन्याराशिगते भानौ दशम्यां रोहिणीयुजि ।
पक्षे तु प्रथमे देवी सायंकाले गुरोर्दिने ॥ ६९
पुत्रोत्पत्तिप्रवक्तॄणां सर्वस्वं दत्तवांस्तदा ।
गवां कोटिसहस्राणि चाश्वानामयुतं तथा ॥ ७०
नवधान्यानि वस्त्राणि विना स्वे छत्रचामरे ।
दानं कृत्वा नृपश्रेष्ठः स्वस्तिवाचनमाचरत् ॥ ७१
जातकर्मादिकं कर्म कृतवांस्तत्क्षणं नृपः ।
दिने च द्वादशे प्राप्ते कृत्वा पुत्राभिधां तथा ॥ ७२
यन्नाम्ना वसुदातेति लोके ख्यातिं गमिष्यति ।
तद्दिने बहुविप्रौघान् अन्नाद्यैः पर्यतोषयत् ॥ ७३
ऋषयः– श्रुतं पुत्रस्य चरितं न श्रुतं व्यासवल्लभ ! ।
अयोनिजायास्तत्पुत्र्याः किं नाम च तदाऽकरोत् ॥ ७४
श्रीसूतः— पद्मोदरीं पद्मगर्भां पद्मजातां वराननाम् ।
पद्माया अवतारां तां मत्वा तस्यास्तदाऽकरोत् ॥ ७५
अनुरूपं नामकर्म नाम्ना पद्मावतीति च ।
वर्धमानौ सुतौ दृष्ट्वा राजा सन्तोषमागतः ॥ ७६
अकलङ्केन्दुसदृशौ रमाचन्द्रमसाविव ।
किं तेन सुकृतं राज्ञा बहुजन्मसु सञ्चितम् ॥ ७७
अग्रजां पुत्रिकां दृष्ट्वा तदन्ते पुत्रमुत्तमम् ।
दृष्ट्वा तुतोष मनसा सम्पूर्णानन्दविभ्रमः ॥ ७८
इत्थं काले गते तस्मिन् सा बाला यौवनं गता ।
यौवनाढ्यां विशालाक्षीं दृष्ट्वा राजाऽप्यचिन्तयत् ॥ ७९

विचारयन् स नृपतिः पुत्र्यर्थं वरमुत्तमम् ।
न प्राप दुःखसन्तप्तः 'कस्मै देया मया सुता' ॥ ८०
इति चिन्ताऽब्धिमग्नोऽसौ पुत्रीपरिणये तदा ।
असम्मतोऽकरोत्पुत्रं परं संस्कारसंस्कृतम् ॥ ८१
श्रुत्वा राजसुता बाला ब्राह्मणैरनुजं परम् ।
तदोपनीतं सद्योऽभूत् पुत्री यौवनपीडिता ॥ ८२
सा कदाचिद्वनं बाला सखीभिः परिवारिता ।
जगाम पुष्पाण्याहर्तुं कन्या कमललोचना ॥ ८३
वसन्तमागतं वीक्ष्य वने ताभिर्भयाकुला ।
पुष्पाण्याहारयामास तरुमूलमुपाश्रिता ॥ ८४
तदाऽऽगतो नारदस्तु वृद्धो भूत्वा जटाधरः ।
धूलीधूसरिताङ्गश्च कर्पूरसदृशद्युतिः ॥ ८५
आगतं तं मुनिं दृष्ट्वा विस्मयाऽकुलमानसा ।
पद्मावती सखीः प्राह चटुला भृशकातरा ॥ ८६
'कोऽसौ भयङ्करो बालाः! क यात्यत्र विचार्यताम्' ।
इत्युक्तास्तास्तदा कन्याः पप्रच्छुः स्थविरं द्विजम् ॥ ८७
'कोऽसि विप्र महाप्राज्ञ! किमर्थं त्वमिहागतः' ।
वाक्यं तासां समाकर्ण्य गुरुः प्रोवाच सद्वचः ॥ ८८
नारदः— 'अहं कुलगुरुः साक्षात् युष्माकं वरयोषिताम् ।
हस्तं दर्शय मे पुत्रि! लक्षणानि वदामि ते' ।
उवाच लज्जया देवी 'किं वदिष्यसि हे द्विज!' ॥ ८९
नारदः— 'विद्धि त्वं पितृतुल्यं मां मनसा निर्मलेन च' ।
इत्युक्ता मुनिना तेन दत्त्वा हस्तं वराङ्गना ।
प्राह भावि शुभं श्रोतुं निजलक्षणलक्षितम् ॥ ९०

पद्मावती—

'सत्यं वद महाप्राज्ञ ! लक्षणानि विलोक्य मे'।
ततो दृष्ट्वा पाणितलं प्राहस्माजतनूभवः ॥ ९१

## नारदोक्तपद्मावतीशरीरसल्लक्षणानि

नारदः—

'पतिर्भवति धर्मज्ञो त्रिलोकेशो रमापतिः ।
पाणी पद्मदलोपेतौ पादौ ते स्वस्तिकायतौ ॥ ९२
मुखं चन्द्रसमाकारं चक्षुः कमलकुड्मलम् ।
तिलपुष्पसमाकारा नासिका ते विराजते ॥ ९३
कपोलौ मुकुराभौ ते भ्रुवौ ते धनुषा समे ।
दन्ता दाडिमबीजाभाः आस्यं कर्पूरभाजनम् ॥ ९४
अधरं रक्तपद्माभं जिह्वा मृदुतरा शुभा ।
अरालालकसम्बद्धा श्यामला भाति वेणिका ॥ ९५
ललाटं रत्नपीठाभं श्रोत्रे शष्कुलिकासमे ।
तनुस्ते मन्मथाकारप्रतिमाऽप्रतिमप्रभा ॥ ९६
कण्ठः सूर्यांशुसदृशताम्बूलरसदर्शकः ।
स्तनौ पीनौ घनौ कुब्जौ शुभौ ते मग्नचूचुकौ ॥ ९७
उदरं कदलीपर्णसदृशं निम्ननाभिकम् ।
कटिस्तव करिध्वंसिकटिसाम्ययुता शुभा ॥ ९८
रम्भास्तम्भसमाकारं तवोरुयुगुलं रमे ! ।
पृष्ठं ते वेदिवद्भाति किं त्वया सुकृतं कृतम् ! ॥ ९९
गमनं करिराजस्य सदृशं ते वरानने'।
इति सम्भाष्य तां देवीं देवर्षिः पद्मसम्भवाम् ॥ १००

अन्तर्दधे नारदस्तु सर्वासां पुरतो मुनिः ।
संस्तुत्य कमलां देवीं मनसा चिन्तयन् रमाम् ।
मनसा वन्दनं कृत्वा जगामाथ ऋषिस्तदा ॥ १०१

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये मृगयाविहारोद्युक्त-
श्रीनिवासालङ्कारादिवर्णनपूर्वकमाकाशनृपतेः कन्यापुत्र-
प्राप्तिवर्णनं नाम षष्ठोऽध्यायः ।

— —

अथ सप्तमोऽध्यायः

## पद्मावत्याः पुष्पापचयसमये श्रीनिवासदर्शनम्

श्रीसूतः—

'कन्याया जननं प्रोक्तं कुमारस्यापि वै ततः ।
तस्याश्चरित्रं वैवाहं पुण्यवर्धनम् ॥ १
करीन्द्रसङ्गेन समागतो हरिः तुरङ्गमास्थाय वराङ्गनानाम् ।
श्रीगन्धलेपारुणचारुवक्षाः बालार्कभाः सोऽथ समीपमाययौ ॥ २
गर्जन्तं गजराजं तं दृष्ट्वा पद्मावतीमुखाः ।
वनस्पतिमुपाश्रित्य तत्र लीनास्तदाऽभवन् ॥ ३
निमील्य नेत्रवर्त्मानि व्यूहं कृत्वा वराङ्गनाः ।
पश्यन्त्योऽथ तरुच्छन्नाः पुनः पुनरवस्थिताः ॥ ४
तदन्तरेऽबलाः सर्वाः ददृशुर्हयमुत्तमम् ।
बालार्कसदृशाकारं स्वर्णाभरणभूषितम् ॥ ५
पुरुषेण समायुक्तं मन्मथाकारतेजसा ।
तं दृष्ट्वा गजराजोऽपि हयस्थं पुरुषोत्तमम् ॥ ६

नमस्कृत्य यथान्यायं जगाम विपिनं नदन् ।
तं दृष्ट्वा योषितः सर्वाः विस्मयाऽकुलमानसाः ॥ ७
करसम्पुटमापन्नाः चलितास्तु भयातुराः ।
वृक्षमूलं गता बालाः अन्योन्यं वाक्यमब्रुवन् ॥ ८
'कोऽयमत्र वरारोहे ! सखि ! कञ्जायतेक्षणे ! ।
कोऽसौ किरातरूपी च किं न दृष्टस्त्वया पुरः ॥ ९
तुरङ्गोपरि संस्थाय य आगच्छति हे सखि !' ।
एवं वदन्त्यस्तास्तस्थुः सा च पद्मावती शुभा ॥ १०
उवाच मन्दं वचनं सखीस्तास्तु ततो द्विजाः ! ।
'पृच्छन्तु तस्य वृत्तान्तं पितृमातृस्वबान्धवान् ॥ ११
देशं वृत्तं कुलं शीलं नामगोत्रादिकं तथा' ।
इति सख्या समाज्ञप्ताः ता ऊचुर्वचनं स्त्रियः ।
आगतं पुरुषं दृष्ट्वा 'कोऽसि कोऽसी'ति चाब्रुवन् ॥ १२

कन्याः–

'किमर्थमागतोऽसि त्वं किं ते कार्यं वद प्रभो ! ।
न सन्ति पुरुषा ह्यत्र गच्छ गच्छेति' चाब्रुवन् ।
तासां तद्वचनं श्रुत्वा हयस्थो वाचमूचिवान् ॥ १३

श्रीभगवान्–

'अस्ति कार्यं वरारोहाः ! राजपुत्र्याः समीपके' ॥ १४

स्त्रियः–

'किं कार्यं वद शीघ्रं त्वं यत्ते मनसि वर्तते ।
क्व ते वासश्च किं नाम का ते माता च कः पिता ॥ १५
को भ्राता का च भगिनी किं कुलं गोत्रमेव च ?' ।
इति तासां वचः श्रुत्वा न्यगदज्जगदीश्वरः ॥ १६

## पद्मावतीश्रीनिवासयोः परस्परसंवादः

श्रीनिवासः–

‘कन्यापेक्षा मुख्यकार्यं तदन्ते प्रवदामि वः’।
इति ताः प्रोच्य चोवाच देवीं पद्मावतीमथ ॥ १७

‘सिन्धुपुत्रकुलं प्राहुः अस्माकं तु पुराविदः।
जनको वसुदेवस्तु देवकी जननी मम ॥ १८

अग्रजः श्वेतकेशस्तु सुभद्रा भगिनी मम।
पार्थोऽपि मे सखा देवि! पाण्डवा मम बान्धवाः ॥ १९

षण्णां तु मृतपुत्राणां कृतनाम्नां महात्मनाम।
वियोगतप्तौ पितरौ सप्तमं राम इत्यथ ॥ २०

चक्रतुः संस्कृतं नाम्ना पितृलिङ्गमुपागतम्।
जातोऽहमष्टमोऽष्टम्यां सुभद्रा मदनन्तरम् ॥ २१

मातृवर्णश्च मे देवि! कृष्णपक्षे जनिर्मम।
तस्मात्कृष्णेति मां देवि! चक्रतुर्नाम संस्कृतम् ॥ २२

वर्णतो नामतश्चापि कृष्णं प्राहुर्मनीषिणः।
वृत्तान्तो ह्यखिलो मत्तो ज्ञेयः पण्डितनन्दिनि! ॥ २३

युष्माभिरुच्यतां वार्ता गोत्रनामकुलादिकम्’।
इति तेन समाज्ञप्ता प्रोवाच नृपनन्दिनी ॥ २४

पद्मावती–

‘आकाशराजतनयां निषादाधिप! विद्धि माम्।
नाम्ना पद्मावतीं कृष्ण! कुलं शीतकरस्य च।
अत्रिगोत्रं किरातेन्द्र! शीघ्रं गच्छे’ति चाब्रवीत् ॥ २५

श्रीनिवासः–‘किमर्थं निष्ठुरं वाक्यं मन्दं किं न प्रभाषसे?।
अन्नं काङ्क्षन्ति वै लोकाः यो ददाति नरोत्तमः ॥ २६

स पुमान् पुण्यमाप्नोति जलदोऽपि फलं लभेत् ।
अदिशन् मृदुभाषी च न तु निष्ठुरभाषणः ॥ २७
अथाहं काममुद्दिश्य पात्रभूतोऽस्मि साम्प्रतम् ।
सुखमेष्यसि दानेन त्वन्ते स्वर्गं गमिष्यसि ॥ २८
आत्मानं दिश मह्यं त्वं किं वृथा निष्ठुरोक्तिभिः' ।
सा तस्य वचनं श्रुत्वा क्रोधात्ताम्रविलोचना ॥ २९

पद्मावती–

'अवाच्यं वदसे मूढ! जीवनेच्छा न विद्यते ।
आकाशराजस्त्वां दृष्ट्वा हनिष्यति न संशयः ।
यावन्नायाति तावत्त्वं गच्छ शीघ्रं स्वमालयम्' ॥ ३०

श्रीनिवासः–

'कार्यान्ते मरणं सौख्यं कार्यहानौ मृतिः कुतः ।
कथं हन्यात् स राजेन्द्रस्त्वधर्माभिमुखो हि माम् ? ।
त्वं कन्याऽहं वरो देवि! कोऽत्रान्यायो महीसुते!' ॥ ३१

पद्मावती–

'शृणु मूढ! न जानासि बालभावेन किं वृथा ।
त्वां दृष्ट्वाऽऽकाशराजोऽपि कृत्वा ते गलबन्धनम् ।
बध्नीयान्निगडैर्मूर्ख! भविष्यत्प्रवदाम्यहम्' ॥ ३२

श्रीनिवासः–

'निश्चित्य मरणं देवि! रन्तुकामोऽस्म्यहं त्वया ।
जातस्य मरणं नित्यं पूर्वकर्मफलानुगम् ।
आकाशराजो धर्मात्मा कथं हन्यादनागसम्' ॥ ३३

पद्मावती– 'गौरवं यन्निषादेन्द्र! नृपस्यास्य हरेर्यथा ।
वरदस्याथ रङ्गस्य वेङ्कटाचलवासिनः ॥ ३४

तद्रक्ष त्वं महाबाहो! सुखं गच्छ स्वमालयम्' ।
इत्युक्तोऽपि तया देव्या निषादेन्द्राकृतिर्हरिः ॥ ३५
निराकृत्य च तद्वाक्यं हयस्थः पुनरापतत् ।
हयमग्रागतं वीक्ष्य सा बाला वाक्यमब्रवीत् ॥ ३६

पद्मावती–

'त्यक्त्वा च पितरौ बन्धून् भ्रातृमुख्यान् वने चरन् ।
अनाथो म्रियसे व्यर्थं किमर्थं काकभाजनम्' ।
इति तस्या वचः श्रुत्वा तामूचे वारिजेक्षणः ॥ ३७

श्रीनिवासः–'विधिना लिखितं यत्तु न तद्व्यर्थं भविष्यति ।
जयो वाऽपजयो वा स्यात् त्वयि भोगं करोम्यहम्' ॥ ३८
इत्युक्ता कोपताम्राक्षी सखीभिः परिवारिता ।
तर्जयन्ती जगद्योनिं शिलापाणिः समागमत् ॥ ३९
ताडयामास गोविन्दं शिलौघैः शीघ्रगत्वरैः ।
ताड्यमानः शिलावर्षैः न्यपतद्घोटराट् स्वयम् ॥ ४०
त्यक्त्वाऽसुं स हयं दृष्ट्वा मुक्तकेशो मुहुर्मुहुः ।
पश्यन् पश्यन् दिशः सर्वाः भ्रभ्रमद्भिभ्रमन्निव ॥ ४१
'हयो वै सङ्कटं प्राप्तो ममात्वकृतसन्निधेः' ।
इत्युच्चरन् रमाकान्तो जगामोत्तरदिङ्मुखः ॥ ४२
आरूढसोपानगणो गिरेर्विभुः विडम्बयन् लोकमवाप शय्याम् ।
प्राप्याधिमानन्दयुतोऽपि माधवो यथा युगान्ते वटपत्रशायी ॥४३

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये पद्मावतीश्रीनिवासयोः परस्परं संवादादिवर्णनं नाम सप्तमोऽध्यायः ।



अथ अष्टमोऽध्यायः

## पद्मावतीपराजितश्रीनिवासं प्रति वकुलमालिकासान्त्ववचनम्

श्रीसूतः—

शयनं प्राप पर्यङ्के श्रीनिवासो वृषाकपिः ।
तदा गता च सा देवी सेवार्थं वकुला शुभा ॥ १
षड्विधान्नं समादाय सूपापूपरसान्वितम् ।
रमापतेस्तु बहुलभक्तिभावेन संयुता ॥ २
शयानं श्रीनिवासञ्च वल्मीकस्थानसंस्थितम् ।
श्वसन्तं दीर्घनिःश्वासं रुदन्तं नेत्रबिन्दुभिः ।
अभाषमाणं श्रीकान्तं बभाषे वकुला शुभा ॥ ३

वकुला— 'उत्तिष्ठोत्तिष्ठ गोविन्द! किं शेषे पुरुषोत्तम! ।
न कदाऽपि दिवाऽस्वाप्सीः नाकार्षीः रोदनं हरे! ॥ ४
किमर्थं दुःखमेणाक्ष! आर्तवद् दृश्यसे कुतः? ।
मनोगतं वा किं देव! तद्वदस्व यथार्थतः ॥ ५
परमान्नं कृतं देव! भोक्तुमागच्छ माधव!' ।
इत्युक्तं वचनं श्रुत्वा नोवाच वचनं हरिः ।
हरिं दृष्ट्वा हिरण्याङ्गी पुनर्वाचमुवाच ह ॥ ६

वकुला— किं दृष्टं विपिने कृष्ण! किमर्थं दुःखमुल्बणम् ।
आर्तिहीनोऽपि देव! त्वं आर्तवद्दृश्यसे कुतः? ॥ ७
मनोगतं वदाऽदेशं गौरवं मयि मा कृथाः ।
गौरवं बलरामे स्यात् देवकीवसुदेवयोः ॥ ८
दुःखं भवति दृष्ट्वा त्वां अभुक्तं भूतभावन! ।
सर्वलोकार्तिसंहर्तः! पुण्यमूर्ते! नमोऽस्तु ते ॥ ९

का दृष्टा कन्यका कृष्ण! गान्धर्वी वा सुरोत्तम! ।
कस्याः सङ्गं समापेक्ष्य चित्तवैकल्यमद्य ते? ॥ १०

का च पुण्यवती बाला बाल भक्तवशं हरिम् ।
मोहयामास कामार्ता? न जानामि जगद्गुरो! ॥ ११

वद गोविन्द! ते कार्यं क्षणमात्रात्करोम्यहम् ।
मृगं दृष्ट्वा भयं वाऽऽत्तं चोरं वा क्रूररूपिणम् ॥ १२

पिशाचभूतप्रेतान् वा न जानामि रमापते! ।
मन्त्रं वा यन्त्रपूगान्वा मूलिकाजौषधान्यपि ॥ १३

कारयित्वा यथाशास्त्रं तत्सर्वं शमयाम्यहम्' ।
इत्युक्तेऽपि हरौ तूष्णीं स्थिते वकुलमालिका ॥ १४

आनीतं तत्र निःक्षिप्य तत्समीपमुपाश्रिता ।
पादसंवाहनं कृत्वा सान्त्वयामास चासकृत् ॥ १५

सान्त्वयन्त्या तयाऽऽयासस्विन्नं देहं समन्ततः ।
आपादमौलिपर्यन्तं कराभ्यां परिमृज्य च ॥ १६

बोधितोऽपि रमाकान्तो नोवाच वचनं यदा ।
तदा सा वकुला खेदात् उवाच वचनं हरिम् ॥ १७

पृथक्कृत्वा छन्नवस्त्रं हस्तेन परिमृज्य च ।
'देवदेव जगन्नाथ! पुराणपुरुषोत्तम! ॥ १८

मनोगतं करिष्यामि नात्र कार्या विचारणा ।
सत्यं वद मनःस्थं ते मा लज्जां मा भयं कृथाः ॥ १९

पूरयाम्यविलम्बेन यावन्मे वर्तते बलम्' ।
इति तद्वचनं श्रुत्वा हरिरुष्णं समुच्छ्वसन् ॥
उवाच चातिदुःखेन मन्दं मन्दं मनोगतम् ॥ २०

## वकुलां प्रति श्रीनिवासोक्तस्वमनोनिर्वेदहेतुवर्णनम्

श्रीनिवासः–

'नामोहयन्मां गान्धर्वी नर्षिपुत्री न राक्षसी ।
न पिशाचा भूतगणाः प्रेता वा मे भयावहाः ॥ २१
मृगाश्चारण्यकाश्चोरः न क्रूरा मे कदाचन ।
मन्नामस्मरणादेते विद्रवन्ति दिशो दश ॥ २२
ततस्तेभ्यो भयं नेह मृत्युमृत्योर्ममानघे !
मया दृष्टा वरा कन्या नाम्ना पद्मावती शुभा ॥ २३
तां दृष्ट्वा मे मनो भ्रान्तं काममोहवशं गतम् ।
सुरूपां सुन्दरीं सुभ्रूं नीलालकविराजिताम् ॥ २४
पूर्णेन्दुवदनां श्यामां नीलमाणिक्यविग्रहाम् ।
साक्षाद्रमासमां कन्यां घटयाऽशु वरानने ॥ २५
बहुजन्मार्जितेनैव पुण्येनैषा हि लभ्यते ।
मत्पुण्यं पक्वतां यातं दर्शनेन सुलोचने ! ॥ २६
मानुषं देहमासाद्य तां कन्यां कः पुमाँस्त्यजेत् ? ।
लोके विना जडमतिं अन्नपानविवर्जितम् ॥ २७
जीवनेन किमेतेन कार्यहीनेन मे सखि ! ।
घटयाऽशु वराङ्गीं तां आकाशनृपनन्दिनीम् ॥ २८
तां विना न हि जीवामि सत्यमित्यवधारय ।
ताडितोऽहं शिलावर्षैः हताश्वोऽस्मि वरानने ! ॥ २९
मज्जीवनं वृथा मातः जातं वै वेङ्कटाचले ।
यतोऽभूदवतारोऽत्र पद्मावत्यर्थमेव मे ॥ ३०
पुत्रो मे वैरमापन्नः किं कृतं पूर्वजन्मनि ? ।
दृष्टिहीनेन विधिना निर्मिता कन्यका वरा ॥ ३१

अनायासेन मे सा स्यात् इति मे निश्चिता मतिः ।
किं दृष्टं ब्रह्मणा पूर्वं मत्पापं घोरदर्शनम् ॥ ३२
यत्पापमनुसृत्यैवं घटनं नाकरोद्विधिः ।
मद्भागस्थो विधिस्त्वं हि साहाय्यं कुरु मेऽङ्गने! ॥ ३३
न करोषि यदा बाले! तदा मे मरणं ध्रुवम् ।
मरणे जीवनोपायं ये कुर्वन्ति नरोत्तमाः ॥ ३४
ते दिवं यान्ति यानेन पुण्यमार्गेण कन्यके! ।
इत्थं धर्मार्थकामास्त्वं धर्ममार्गमुपाश्रय ॥ ३५
किमुक्तेन विशेषेण विदिताशाऽसि सङ्गमे ।
त्वं मे माता पिता देवि भ्राता मातुल एव च ॥ ३६
त्वं प्रह्लादस्त्वमक्रूरः त्वं ध्रुवस्त्वं गजेश्वरः ।
त्वमुद्धवोऽतिभक्तो मे त्वं किरीटी बलिस्तथा ॥ ३७
अजामिलो द्रौपदी च भक्तो मे त्वं विभीषणः ।
त्वां दृष्ट्वा मे मनो हर्षं गच्छतीह निरन्तरम् ॥ ३८
मद्दुःखव्यपनोदाय निर्मिता विधिनाऽङ्गना ।
गवां कोटिसहस्रेण हयानामयुतैस्तथा ॥ ३९
सुवर्णतिलदानैश्च समं माङ्गल्यवर्धनम् ।
कन्यां दृष्ट्वा तु सन्तोषं लभसे नात्र संशयः' ।
इति तेन समाज्ञप्ता वकुला वाक्यमब्रवीत् ॥ ४०

वकुला–

'कुत्राऽस्ते जगदाधार! त्वया याऽत्र निरीक्षिता ।
तन्मार्गं वद गोविन्द! गच्छामि करुणानिधे! ॥ ४१
का सा पूर्वं किमर्थञ्च कन्यका जनिता भुवि ।
तद्वृत्तमखिलं ब्रूहि सत्येन मम केशव!' ॥ ४२

इत्याज्ञप्तो विरिञ्चेशविनताङ्घ्रिसरोरुहः ।
उवाच मन्दं वचनं वकुलां धरणीधरः ॥ ४३

## वकुलां प्रति श्रीनिवासदर्शितपद्मावतीपूर्वजन्मोदन्तः

श्रीनिवासः–

"शृणु बाले पुरावृत्तं पद्मावत्या जनेः! शुभम् ।
त्रेतायां रामरूपेण त्ववतारमहं गतः ॥ ४४
पितृमातृवचः श्रुत्वा दण्डकारण्यमागतः ।
लक्ष्मणेन सह भ्रात्रा सीतया वकुले! शुभे! ॥ ४५
तदा तु रावणो नाम राक्षसो लोककण्टकः ।
लोकभर्तुः सतीं हृत्वा लङ्कां गन्तुमवर्तत ।
लक्ष्मणोऽप्यग्रजं द्रष्टुं सीतया प्रेषितो बलात् ॥ ४६
तत्कालमालक्ष्य स राक्षसेन्द्रो विमानमारोपयितुं हि सीताम् ।
प्रावर्ततैषा च तदा रुराव 'हा राम हा लक्ष्मण राघवे' ति ॥ ४७
तदार्तरावेण तदा वनौकसो विचुक्रुशुस्तत्र वनान्तरस्थिताः ।
तद्वाक्यमाकर्ण्य च हव्यवाहनः पातालोकादुदगाद्धरातलम् ॥
समायान्तं दुराधर्षं आकर्षन्तञ्च जानकीम् ।
सम्भाष्य रावणं क्रूरं पातालादुपगम्य च ॥ ४९
रावणेन च पापेन सहितः सीतया तया ।
रावणं बोधयामास नानावाक्यगणैस्तदा ॥ ५०
'इयं जनकपुत्री न विप्रपत्नी तु खेचर! ।
राघवस्त्वद्भयाद्रक्षन् जानकीं मम सन्निधौ ॥ ५१
संस्थाप्य विपिने रामो व्यचरत्सहलक्ष्मणः ।
शिष्योऽसि परमोदार! मम कल्याण रावण! ॥ ५२

प्रियोऽसि मा गमो विप्रपत्न्यां सीताभ्रमं वृथा ।
इति प्रतारयन् रक्षः छद्मना जनकात्मजाम् ॥ ५३
इत्थं स्वलोकमादाय तां सम्पूजयितुं द्रुतम् ।
स्वाहायां सन्निवेश्याथ नाम्ना वेदवतीं शुभाम् ॥ ५४
प्राग्रावणापचारेण प्रतिश्रुत्य च तद्वधम् ।
कृतप्रवेशां क्रोधेन समिद्धे जातवेदसि ॥ ५५
तत आरभ्य समयं आकाङ्क्षन्तीं स्थितां सतीम् ।
सीताऽऽकृतिधरां कृत्वा मायया मेषवाहनः ॥ ५६
प्रदर्शयन्नुवाचाथ रावणं प्रीणयन्निव ।
'इमां सीतां समादाय गच्छ शीघ्रं निशाचर'! ॥ ५७
इत्युक्तः पावकेनायं तामादायागमद्द्रुतम् ।
हरे चाग्नौ विशेषेण भक्तिर्वै रावणस्य च ॥ ५८
तस्मादग्निवचः श्रुत्वा त्वेवं तां जानकीं तदा ।
अज्ञानान्मन्यमानोऽसौ रावणो मोहदर्पितः ॥ ५९
लङ्कां गत्वाऽशोकवने शिंशुपावृक्षमूलतः ।
सीताकृतिं तां संस्थाप्य विष्णवाविष्टां स राक्षसः ॥ ६०
कृतकृत्यं तदाऽऽत्मानं मेने वै कालचोदितः ।
रामो गत्वा तु तं हत्वा रावणं सगणं खलम् ॥ ६१
सीतां प्राप्य जगन्नाथो युद्धान्ते पर्यचिन्तयत् ।
तान्तु लोकापवादेन पावकेन विशोधिताम् ॥ ६२
जिघृक्षुणा राघवेण सीता चाग्नौ प्रवेशिता ।
सीताद्वन्द्वं तत्र दृष्ट्वा प्रोवाच निजभामिनीम् ॥ ६३

‘ का सा देवी तव समा तव रूपसमन्विता? ।
न जानेऽहं वराङ्गीं तां तव बिम्बनिभां शुभाम् ’ ।
राघवेणैवमुक्ता सा जानकी वाक्यमब्रवीत् ॥ ६४

जानकी—

‘ मद्दुःखं ह्येतया भुक्तं निर्निमित्तं दयालुना ।
या सा वेदवती देव! स्वाहायाः सन्निधौ स्थिता ॥ ६५
तामङ्गीकुरु गोविन्द! विवाहं विधिपूर्वकम् ’ ।
इति सीतावचः श्रुत्वा रामो वचनमब्रवीत् ॥ ६६

श्रीरामः— ‘ एकपत्नीव्रतं मेऽद्य कृतं जानासि भामिनि! ।
द्वापरेऽङ्गीकरोमी’ति बहूनां वरदो यतः ॥ ६७
तव वाक्यं करिष्यामि त्वष्टाविंशे कलौ युगे ।
तावदेषा ब्रह्मलोके ब्रह्मणा पूजिता भवेत् ’ ॥ ६८
श्रुत्वैवं रामवाक्यं सा जगाम भवनं विधेः ।
पद्मावत्याः कारणं तु भणितं तव सुव्रते! ॥ ६९
न मे वाक्यमसत्यं स्यात् इति वेदविदो विदुः” ।
श्रुत्वा तज्जनने हेतुं वकुलाऽऽनन्दनिर्भरा ।
कौतूहलसमाविष्टा श्रीनिवासमभाषत ॥ ७०

## श्रीनिवासानुज्ञया नारायणपुरं प्रति वकुलागमनम्

वकुला—

‘ गच्छामि राजेन्द्रसभां सभासदो
यत्राऽऽसते सर्वकलाविशारदाः ।
आकाशराजस्य पुरीं सुरोत्तमैः
संस्तूयमानाञ्च रमां विगूहिताम् ’ ॥ ७१

इत्येवमुक्तो भगवान् जगद्गुरुः
सम्प्रेषयिष्यन् वकुलां स्वकारणात् ।
उत्थाय तल्पस्तिमितान्तरङ्गः
तस्थौ तदानीं भृशहृष्टचेताः ॥ ७२

भुक्त्वाऽन्नमुत्तममसौ वकुलाप्रदत्तं
आनन्दपूर्णसुमनाः सुरवृन्दवन्द्यः ।
तस्थावलङ्कृतवपुश्च विभूषणौघैः
मुक्ताफलैः सुरुचिरैरथ पुष्पसङ्घैः ॥ ७३

दिव्यां तुरङ्गीमारुह्य निर्मितां देवमायया ।
मार्गं विज्ञातुकामा तं आपृच्छ्य वकुलाऽवदत् ॥ ७४

वकुला–

'मार्गं वद रमाधीश! गच्छामि नृपसत्तमम्' ॥ ७५

श्रीनिवासः–"अस्मादेव वरान्मार्गात् अवरुह्य गिरेस्तटात् ।
त्वं गच्छाधःप्रदेशे च कापिलं लिङ्गमुत्तमम् ॥ ७६

तत्राऽऽस्ते तीर्थराजो यः कपिलेश्वरसन्निधौ ।
तत्र स्नात्वा यथायोग्यं मदर्थं तीर्थपुङ्गवे ॥ ७७

कपिलेश्वरमासाद्य याच्यतां वरमव्ययम् ।
'श्रीनिवासेन बालेन सदा कल्याणकाङ्क्षिणा ॥ ७८

प्रेषिताऽहं तदर्थं वै कुरु मेऽभीप्सितं प्रियम्' ।
एवमुक्त्वा शिवं देवि! ततः पद्मतटं गता ॥ ७९

तत्र दृष्ट्वा कृष्णरामौ नत्वा तौ भक्तिभावतः ।
पद्मतीर्थसमुद्भूतैः कमलैः कमलानने! ॥ ८०

पूजां कुरु मदर्थं तौ भ्रातृभूतौ हि मे मतौ ।
सुवर्णमुखरीं तीर्त्वा तत्र गच्छ यथासुखम् ॥ ८१

उचितं कुरु कल्याणि! कन्याऽर्थे कमलानने!" ।
आज्ञप्ता देवदेवेन त्वित्थं वकुलमालिका ॥ ८२
जगाम शनकैः शेषशैलादुत्तीर्यचाङ्गना ।
यदुक्तं श्रीनिवासेन तच्चकार तदाऽऽबला ॥ ८३
हयमारुह्य वकुला सुवर्णमुखरीं तदा ।
तीर्त्वाऽगस्त्याश्रमं प्राप्य सखीस्तस्या व्यलोकयत् ॥ ८४
शिवालये शिवं द्रष्टुं आगतायास्तु तत्र वै ।
तत्र दृष्ट्वा वराः कन्याः 'का यूय'मिति चाब्रवीत् ।
तया सम्भाषिता बालाः ऊचुरेनां तथोत्तरम् ॥ ८५

## वकुलां प्रति पद्मावतीसखीज्ञापितपद्मावत्युदन्तः

कन्याः—

'वयमाकाशराजस्य सन्निधानगताः सदा ।
इतः पूर्वदिने कश्चित्पुरुषं तुरगाऽस्थितम् ॥ ८६
पद्मावत्याः समीपञ्च सम्प्राप्तं मन्मथाऽकृतिम् ।
दृष्टवत्यो वयं सर्वाः किराताकृतिशोभनम् ॥ ८७
दृष्ट्वा पद्मावती भीत्या ज्वरतापविमूर्छिता ।
तत्तापस्योपशान्त्यर्थं राज्ञाऽऽज्ञप्ता वयन्त्विह ॥ ८८
अगस्त्येशाभिषेकार्थं वसामोऽद्य समागताः ।
इदानीं कन्यकारूपां त्वान्तु वीक्षामहे वयम्' ।
इति तद्वचनं श्रुत्वा वकुला वाक्यमब्रवीत् ॥ ८९

वकुला—

'कोऽसौ किरातरूपी च भवतीभिश्च सङ्गतः ।
वदध्वं कन्यकाः सर्वाः तद्वृत्तमखिलं मम' ॥ ९०

कन्याः— 'पद्मावत्या च सहिताः कदाचिद्वयमागताः ।
पुष्पापचयनं कर्तुं आरब्धास्तु वनान्तरे ॥ ९१
तत्र कश्चित्पुमान् प्राप्तः विचित्रतुरगान्वितः ।
अस्मान् प्रत्युदितं तेन ह्यवाच्यवचनं तदा ॥ ९२
तच्छ्रुत्वा तनया राज्ञो रुष्टा वचनमब्रवीत् ।
तयोः कलह आपन्नः कलहे ताडितो हयः ॥ ९३
निपपात तदाऽश्वस्तु शिलाभिर्हतचेतनः ।
स घोटं सम्परित्यज्य जगामोत्तरदिङ्मुखः ॥ ९४
गते किराते कमलोद्भवाऽथ
मूर्च्छामुपागम्य पपात भूमौ ।
कन्यां ततस्तां उपवेश्य याने
वयं स्वकं राजपुरं गताः स्मः ॥ ९५
तामागतां यानगतां सुतां नृपः
चिन्तामुपागम्य रुरोद दीनः ।
अङ्के निधायाऽऽत्मसुताञ्च पश्यन्
मुखं मुदा हीनमभाषणञ्च ॥ ९६
का वाऽभवन्मे दुहितुर्दुरासदा
विभीषिका विश्वविनाशकारिणी ? ।
तस्या वि·ाशं न विजानते नराः
गुरुं विनेति प्रसमीक्ष्य भूमिपः ॥ ९७
ततः सुराणां गुरुमात्तकम्पः
समानयत्तत्र सुतेन शीघ्रम् ।
शीघ्रं प्रपन्नो नृपमन्दरञ्च
तद्वाक्यमाकर्ण्य गुरुर्धरातलम् ॥ ९८

प्राप्तं गुरुं प्राणमिवागतं तदा
प्राप्येव पुण्यं परिपक्वमागतम् ।
दत्त्वाऽऽसनं रत्नमयं समर्पयन्
सुसाधनैः साध्यसुपुष्पभोजनैः ॥ ९९
कृताऽतिथेयो द्विजमाबभाषे
सुतानिमित्तं गगनाभिधो नृपः ।
तद्वाक्यमाकर्ण्य गुरुः सतां पतिः
सम्प्रीणयन् वाक्यमुवाच भूपम् ॥ १००

बृहस्पतिः– ' दुहितुस्तव सङ्कष्टनिमित्तं श्रृणु भूमिप ! ।
पुष्पार्थन्तु गता बाला भीता पुरुषदर्शनात् ॥ १०१
तस्य शान्तिं प्रवक्ष्यामि श्रूयतामवधानतः ।
कारयन्त्वधुना विप्राः अभिषेकं शिवस्य च ॥ १०२
अगस्त्येशस्य वै रुद्रैः त्वमेकादशभिः प्रभो ! ' ।
एवमुक्तोऽथ गुरुणा राजा विप्रान् समादिशत् ॥ १०३
सम्पाद्य सर्वसम्भारान् वयं विप्रसमन्विताः ।
तत्पुत्री ज्वरतापेन शायिता निजमन्दिरे ॥ १०४
तच्छान्त्यर्थं वयं प्राप्ताः अभिषेकार्थमङ्गने ! ।
धिषणेन समाज्ञप्ताः द्विजवर्याः समागताः ॥ १०५
तस्माद्देशाद्वयं प्राप्ताः कैलासपतिमन्दिरम् ।
गच्छसि त्वं कुत्र बाले ! किमर्थं त्वमिहाऽगता ।
वदादेश ' मिति स्त्रीभिः वकुला चोदिताऽब्रवीत् ॥ १०६

## पद्मावतीसखीः प्रति वकुलाऽवेदितस्वागमनवृत्तान्तः

वकुला– ' श्रृण्वन्तु कन्यकाः सर्वाः मद्वाक्यमविचारतः ॥ १०७

प्रभावमात्मानुभवस्य विष्णोः यूयं न जानीथ पुराणपुंसः ।
कृष्णं मुकुन्दं तनयं विदन्त्याः वृथा शरीरं पुनरागतं मम ॥ १०८
जगद्विधीशानमहेन्द्रपूर्वं सृजन्नयं मानुषवद्विभाति ।
युष्मान् सहास्माभिरिहान्यदैवततान् सम्प्रार्थयन्तीः स्वशुभं करोत्यसौ ॥
हरिरेव बलं यस्मात् सर्वार्थानामलं भवेत् ।
ध्रुवं ततो नृणां मोहात् कुपथोऽन्यसमाश्रयः ॥ ११०
हरेर्वममृतं यस्मात् कुपदञ्च तदाश्रयम् ।
लालयामि ततो मां वै वकुलामवगच्छताम् ॥ १११
मा मां लालयतीत्येवं मालामप्यवगच्छत ।
अहं श्रीवेङ्कटाधीशदासीभूताऽस्मि साम्प्रतम् ॥ ११२
धरण्याश्च समीपे मे किञ्चित्कार्यन्तु वर्त्तते ।
नारायणपुरं दिव्यं अभेद्यं परदेशिभिः ॥ ११३
भवतीसङ्गमात्रेण करिष्यन्ति प्रवेशनम्' ।
इत्थमुक्त्वा स्थिता बाला कन्याभिः सा च सङ्गता ॥ ११४

## श्रीनिवासस्य पुल्कसीरूपेण नारायणपुरगमनम्

एवं गतायां तस्यान्तु न विश्वासमगाद्धरिः ।
'एकपुत्रो ह्यपुत्रः स्यात् एकनेत्रो ह्यनेत्रवान् ॥ ११५
स्त्रीभिस्तु यत्कृतं कर्म न तत्कार्यं फलप्रदम्' ।
इति सञ्चिन्त्य गोविन्दो लीलामानुषविग्रहः ॥ ११६
स्वयं श्रीवेङ्कटाधीशो वनितारूपमाययौ ।
चीरवस्त्रं ततो बद्ध्वा छिद्रकञ्चुकरञ्जिता ॥ ११७
ब्रह्माणञ्च शिशुं कृत्वा यष्टिं कृत्वा महेश्वरम् ।
ब्रह्माण्डं जगदाधारं त्रैगुण्यं गुल्ममेव च ॥ ११८

आकीर्य केशपुञ्जानि पञ्चाशद्वर्षसंयुता ।
गुञ्जामणिविभूषाङ्गशङ्खबद्धसुहारिका ॥ ११९
वेणुगुल्मं स्वशिरसि दधाना धान्यपूरितम् ।
लम्बोदरी लम्बकर्णा लम्बितार्धपयोधरा ॥ १२०
अदन्ता शुष्कवदना तदाऽभूद्धर्मदेवता ।
ब्रह्माणं नाभिसञ्जातं सप्तमासवयोयुतम् ॥ १२१
रुदन्तं शुष्कवदनं कृशाङ्गी दीर्घबाहुकम् ।
शिशुं बद्ध्वा चीरवस्त्रे नृत्यन्ती जगदीश्वरी ॥ १२२
यष्टिं धृत्वा करे चाऽगात् सबाला धर्मदेवता ।
नारायणपुरं प्राप्ता नारदाब्जजवन्दिता ॥ १२३
पुरीं समागत्य जगर्ज चेत्थं
'पतीन् सुतान् बन्धुगणान् ददामि' ।
श्रुत्वा वचस्तद्गदितं पुराङ्गनाः
ऊचुस्तदा तां नृपवल्लभां प्रति ॥ १२४

## पुल्कसीरूपधारिभगवता पद्मावतीजनन्याश्चान्योन्यसंवादः

ग्रामिकाः– 'धर्मदेवी समायाता नरनारायणाश्रमात् ।
वृद्धा सा वर्तते ह्यम्ब! मितभाषेव दृश्यते ॥ १२५
मनोगतं वदामीति वदतीयं पुनःपुनः ।
तामाहूय महाभागे! धर्मदेवीं पतिव्रताम्' ॥ १२६
तामित्थमावेदितचित्तवेदिताविद्यां निजग्रामभवाङ्गनागणैः ।
आह्वापयत्तत्र सखीभिरादरात् सम्प्राप्तभाग्याहमिति स्मरन्त्यसौ ॥
आज्ञप्ता धरणीदेव्या सखीभूता वराङ्गनाः ।
ऊचुस्तामग्रगाः सर्वाः सबालां धर्मदेवताम् ॥ १२८

ग्रामिकाः– 'याहि मङ्गलदे! देवि! राजभार्यामिमा' मिति ।
सा श्रुत्वा वचनं तासां मन्दमाह मनस्विनी ॥ १२९

धर्मदेवी– 'अहं दरिद्रा कुटिला सबालाऽभाग्यसंयुता ।
आह्वानं किं विनोदार्थं हास्यार्थं हसिताननाः! ॥ १३०

मद्वस्त्रं पश्यत च्छिद्रं मदाभरणमण्डलम् ।
नवधान्यसमाकीर्णगुल्मं गुञ्जाविभूषितम् ॥ १३१

अन्नहीनं शिशुं माञ्च दृष्ट्वा देव्येति नो ध्रुवम् ।
नागच्छामि विशालाक्ष्यः! किं कार्यं राजमन्दिरे' ॥ १३२

धर्मदेवीवचः श्रुत्वा जग्मुस्ता धरणीं प्रति ।
यथोक्तं धर्मदेव्या तु तदाचख्युश्च तां प्रति ॥ १३३

तासां तद्वचनं श्रुत्वा धरणी तां ययौ स्वयम् ।
उवाच धर्मदेवी तां धरणी राजसुन्दरी ॥ १३४

धरणी– 'एहि भद्रे महाभागे! साक्षात्त्वं धर्मदेवता ।
दैवयोगादागताऽसि मम कल्याणवर्धिनी ॥ १३५

मनोरथो मनःसंस्थः तथ्यं मे कथ्यता' मिति ।
भाषिता राजपत्न्या सा सत्यमाह धरां प्रति ॥ १३६

धर्मदेवी– 'कठिनं मम वाक्यन्तु शृणु राजन्यवल्लभे! ।
मया तु गदितं वाक्यं असत्यञ्चेन्मनस्विनि! ॥ १३७

पुरान्निष्कास्य मां देवि! जिह्वायाश्छेदनं कुरु ।
नरनारायणः स्वामी मद्भर्ता राजसुन्दरि! ॥ १३८

तद्वीर्यजातपुत्रन्तु प्रजापतिमिमं विदुः ।
तेनाऽज्ञप्ता त्वदर्थे च सम्प्राप्ता तव मन्दिरम् ॥ १३९

भूतं भव्यं भविष्यच्च जानामि जगदीश्वरि!' ।
इत्युक्ता धर्म देव्या सा राजपत्नी पतिव्रता ॥ १४०

सुवचोभिः सान्त्वयित्वा धरणी धर्मदेवताम् ।
प्रापयद्भवनं स्वस्याः मन्दंमन्दं मुदाऽन्विता ॥ १४१

तामादाय गृहं प्राप्य वरं सिंहासनं ददौ ।
सिंहासनगता सा च धर्मदेवी वचोऽब्रवीत् ॥ १४२

धर्मदेवी– 'मज्जनं कुरु कल्याणि! वस्त्रालङ्कारभूषिता ।
गुरुदेवनमस्कारं कुरु देवि! हरिप्रियम्' ॥ १४३

एवमुक्ताऽथ कल्याणी तथा चक्रे यथोदितम् ।
तस्याश्चाभिमुखीभूय पश्चाद्वाक्यमुवाच सा ॥ १४४

धरणी– 'किं कार्यं वद भद्रे मे करोमि तव शासनात्?' ।
पुलिन्दा– 'वायनं देहि कल्याणि! देवानां प्रीतिसाधकम्' ॥ १४५

इत्थं पुलिन्दावचनं श्रुत्वा सा धरणी तदा ।
स्वर्णशूर्पं समादाय मुक्तातण्डुलपूरितम् ।
निःक्षिप्य पुरतः शीघ्रं धर्मदेवीं वचोऽब्रवीत् ॥ १४६

धरणी—

'सत्यं वद महाप्राज्ञे! मम दुःखं प्रणोदय' ।
धरणीवाक्यमाकर्ण्य धर्मदेवी वचोऽब्रवीत् ॥ १४७

धर्मदेवी– 'सत्यं वदामि सुश्रोणि! शिशोरन्नं प्रयच्छ मे ।
अहःकृतं रात्रिकृतं सुपक्वरससंयुतम्' ॥ १४८

श्रुत्वा तद्वचनं रम्यं त्वरयाऽऽनीय भामिनी ।
क्षीरान्नं स्वर्णपात्रस्थं अर्भकाय ददौ नृप! ॥ १४९

तद्दृष्ट्वा स्वर्णपात्रस्थं मानुषान्नं न भुक्तवान् ।
रुरोद च शिशुस्तस्याः धर्मदेव्याः स भूमिप! ॥ १५०

रुदन्तमात्मजं दृष्ट्वा विनिन्द्य च तताड सा ।
'दरिद्रोऽसि दुराचार! कन्दमूलफलाशनः ॥ १५१

कथं न भोक्ष्यसे मृष्टं क्षीरान्नं राजनिर्मितम् ।
सदाऽपि रोदनं मातः ! किं करोमी'ति भूमिप ! ॥ १५२
शिशुं तं भर्त्सयित्वाऽथ सम्भोज्यान्नमनुत्तमम् ।
'ममोदरगतं चान्नं पुत्रस्य हितकारणम्' ॥ १५३
इत्युक्त्वा सा धर्मदेवी शिशोर्दत्तं नृपोत्तम ! ।
क्षीरान्नं स्वर्णपात्रस्थं भुक्त्वा स्वस्था तदाऽब्रवीत् ॥ १५४
'सत्यं वदामि सुश्रोणि ! ताम्बूलं देहि मेऽङ्गने !' ।
इत्युक्ता धरणी देवी धर्मदेव्या पुलिन्दया ॥ १५५
एलालवङ्गकर्पूरनागवल्लीदलैर्युतम् ।
ताम्बूलमर्पयामास पुलिन्दायै पतिव्रता ॥ १५६
ततः सा प्राङ्मुखी भूत्वा पुत्रमङ्के निधाय च ।
निःक्षिप्य पुरतो गुल्मं पादावास्तीर्य संस्थता ॥ १५७
एवंरूपं गतं कृष्णं श्रीनिवासं सुरोत्तमाः ।
द्रष्टुकामाः समायाताः वैखरीं प्राकृतोचिताम् ॥ १५८
सम्पश्यन्तस्तस्य खस्थाः सविमानगणास्तथा ।
संलापं चक्रुरन्योन्यं सम्भ्रमात् कौतुकान्विताः ॥ १५९
किं तया सुकृतं राज्या कृतं पूर्वं ययाऽधुना ।
लक्ष्मीसहायो भगवान् क्रीडते प्राकृतो यथा ॥ १६०
एवं हरेश्चित्रविचित्रकर्म गायन्ति कञ्जोद्भवशम्भुशक्राः ।
कलौ युगे पापकृतां नराणां ह्युद्धारणार्था जगदीशचेष्टाः ॥ १६१

इति श्रीभविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये श्रीनिवासस्य
पुलिन्दस्त्रीरूपवर्णनं नाम अष्टमोऽध्यायः ।

---

अथ नवमोऽध्यायः

## धरण्यै पुलिन्दोक्तपद्मावतीदेहशोषणनिवृत्त्युपायः

शतानन्दः—

भोजनान्तेऽस्मरद्देवी देवान् स्वकुलपूजितान् ।
आदौ नारायणं ध्यात्वा पश्चाल्लक्ष्मीं पितामहम् ॥ १

सरस्वतीमुमाकान्तं उमामिन्द्रमतः परम् ।
शचीमग्नियमाद्यांश्च सदारान् दिक्पतीनथ ॥ २

देवानृषीन् पितॄन् राजन्! गन्धर्वान् राजसत्तमान् ।
काशीशं विश्वनाथञ्च बिन्दुमाधवमेव च ॥ ३

विष्णुपादं प्रयागञ्च गोदातीरनिवासिनम् ।
नारसिंहं जगन्नाथं पाण्डुरङ्गमहोबिलम् ॥ ४

पम्पाध्यक्षं विरूपाक्षं श्रीशैलं पुण्यकाननम् ।
श्रीवेङ्कटगिरीशञ्च कालहस्तीश्वरं हरम् ॥ ५

घटिकाचलसंस्थानं वृद्धाचलनिवासिनम् ।
वरदं सर्वलोकेशं श्रीरङ्गं श्वेतरूपिणम् ॥ ६

कुम्भघोणालयं कृष्णं शार्ङ्गपाणिं महीपते! ।
सेतुं रामकृतं राजन्! पद्मनाभं जनार्दनम् ॥ ७

सुब्रह्मण्यं कुमाराख्यं मधुसूदनशङ्करौ ।
चन्द्रेश्वरञ्च गोकर्णं तथा हरिहरौ नृप! ॥ ८

गङ्गां गोदावरीं कृष्णां तुङ्गभद्रां मलापहाम् ।
कावेरीं कपिलां क्षीरां सुवर्णमुखरीं तथा ॥ ९

मूकाम्बिकां भैरवञ्च कालभैरवमेव च ।
कामाक्षीञ्च विशालाक्षीं मत्स्याक्षीमपि सौख्यदाम् ॥ १०

सस्मार लोकभावेन चोवाच मधुरं वचः ।
'रमे! कोल्हापुराध्यक्षे! पाहि मां परदेशगाम्' ॥ ११
इति स्वकीयभावेन स्मरन्ती धर्मदेवता ।
कृत्वा मौक्तिकराशींस्त्रीन् 'मध्यराशौ विचिन्त्य ताम्' ॥ १२
हस्ते दत्त्वा परां यष्टिं 'एष्वेकमनया स्पृश' ।
इत्युक्तया तया देव्या मध्यराशौ विलोडिते ।
भावसाम्यं ततो ज्ञात्वा प्रहृष्टा वाक्यमब्रवीत् ॥ १३

धर्मदेवी—

'वदेयं कारणं देवि! दुहितुस्तेऽङ्गशोषणे ।
आगतः पुरुषेणास्याः येनकेनाप्युपद्रवः ॥ १४
इतः पूर्वदिने कश्चित्पुरुषं तुरगाऽस्थितम् ।
दृष्ट्वा मोहवशं याता कामज्वरसुपीडिता ॥ १५
शृणु मातः! सविस्तारं शपे गुल्मं सपुत्रकाम् ।
भर्तारं बदरीवासं मातरं पितरं गुरुम् ॥ १६
पतिं श्रीवेङ्कटाधीशं कर्तुमिच्छति ते सुता ।
तथा भविष्यति शुभं वागियं नान्यथा भवेत् ॥ १७
स्वात्मानं तु शपे राज्ञि! सत्यमित्यवधारय ।
सत्यं वदामि सुश्रोणि! ताम्बूलं देहि मेऽङ्गने! ॥ १८
एलालवङ्गकर्पूरजातीपत्रैः सपूगकैः ।
नागवल्लीदलैर्युक्तं पुनर्देहि वरानने!' ॥ १९
इत्युक्ता धरणी देवी ताम्बूलं पुनरप्यदात् ।
पुनरालोचयन्ती सा पुलिन्दा वाक्यमब्रवीत् ॥ २०

पुलिन्दा— 'योऽसौ तुरगमारूढः पुरुषः पूर्वमागतः ।
किरातरूपधारी स साक्षान्मन्मथमन्मथः ॥ २१

तं दृष्ट्वा मोहमायाता कामज्वरसुपीडिता ।
दुहिता तेऽभवद्राज्ञि! ततोऽस्या अङ्गशोषणम् ॥ २२
तच्छान्त्यर्थं वरारोहे! तस्मै सा सम्प्रदीयताम्' ।
इत्युक्ता धरणी देवी धर्मदेवीं वचोऽब्रवीत् ॥ २३

धरणी—
'काऽस्ते किरातरूपी स दुहितुर्मेऽङ्गशोषकः ।
वद तन्नाम किं भद्रे! वरं दास्ये तवेप्सितम्' ।
इति पृष्टा धर्मदेवी धरणीं वाक्यमब्रवीत् ॥ २४

धर्मदेवी— "वैकुण्ठस्थो हरिः साक्षात् वर्तते वेङ्कटाचले ।
'श्रीनिवास' इति ख्यातो विद्यावान् धनवान् बली ॥ २५
तस्याश्वं त्वत्सुता बाला ताडयामास चाश्मभिः ।
आरामद्वारनिकटे पतितः स हयोत्तमः ॥ २६
अश्मभिस्ताडितोऽत्यन्तं विह्वलः पृच्छ तत्सखीः ।
गौरवाद्राजपुत्र्यास्तु क्षमेत पुरुषः स तत् ॥ २७
इति मे सत्यवचनं दत्त्वा तां सुखमेष्यसि ।
अदत्त्वा दुःखमाप्नोषि न मे वाणी मृषा भवेत् ॥ २८
अदाने दिनमात्रेण सा म्रियते न संशयः' ।
इति तस्या वचः श्रुत्वा धरणी पुनरब्रवीत् ॥ २९

धरणी— 'किं मां वदसि दुर्वाक्यं असत्यं वामलोचने! ।'
इति तस्या वचः श्रुत्वा पुनराह मनस्विनी ॥ ३०

धर्मदेवी— 'नासत्यं वचनं देवि! मयोक्तं पूर्वमेव तत्' ।
इति भीता तद्वचनात् राज्ञी वाक्यमथाब्रवीत् ॥ ३१
'अयाचिता मया कन्या कथं देया भविष्यति' ।
इति चिन्तापरा राज्ञी धर्मदेवीं वचोऽब्रवीत् ॥ ३२

धर्मदेवी– 'अद्यैव घटिकान्ते त्वां आगमिष्यति काचन ।
अबला बहुवृद्धा च धर्मार्थकुशला भुवि ॥ ३३
मद्वाक्यं विश्वसन्ती त्वं राजानं परिचोदय ।
तोण्डमानञ्च ते भर्तुः भ्रातरं ससुहृद्गणम् ॥ ३४
सम्बोध्य साधुमार्गं त्वं समाश्रय नृपप्रिये ! ।
सन्निधौ मम सङ्कल्पं कुरु कन्यानिमित्तकम्' ॥ ३५
धरणी– 'येन केनाप्युपायेन जीविता स्यात् सुता मम ।
सुतां तस्यैव दास्यामि गिरिगह्वरवासिनः' ॥ ३६
धर्मदेवी– 'एवं चेत् ते सुता राज्ञि ! जीविष्यति न संशयः ।
पतिर्मे वर्तते यत्र देवि ! तत्र व्रजाम्यहम्' ॥ ३७
इत्युक्त्वा तद्वचः सत्यं द्रष्टुकामा धराऽब्रवीत् ।
धरणी– 'तदा ते वचनं सत्यं यद्येवं सम्भविष्यति' ॥ ३८
इत्युक्ताऽसौ जगामाशु निजधाम वराऽङ्गना ।
साऽपि तां 'बाढ'मित्युक्त्वा निर्जगाम पुराद्बहिः ॥ ३९
कक्षे बद्ध्वा सुतं राजन् ! स्वर्णशूर्पं सगुल्मकम् ।
जगामोत्तरमभ्येत्य पुलिन्दा मिथिलेश्वर ! ॥ ४०
पुलिन्दायां गतायान्तु धरणी वामलोचना ।
पुत्र्या निकेतनं प्राप्य रुदन्ती भृशदुःखिता ॥ ४१
'किं ते मनोगतं पुत्रि ! यत्त्वमिच्छसि तद्वद ।
न च मातृसमं मित्रं पुत्रीणामस्ति नन्दिनि ! ॥ ४२
किन्नु कार्यमकार्यं वा तन्ममाचक्ष्व भामिनि ! ।
पूरयामि मनःस्थञ्च किमर्थं तव शोषणम् ॥ ४३
अभाग्याऽहं महाभागे ! विषपानं करोमि च' ।
इत्युक्ता सा पराधीना दुःखिता रुदिताऽभवत् ॥ ४४

दुःखितां जननीं दृष्ट्वा मन्दमाह मनोगतम् ।
पद्मावती– 'किं वदिष्यामि हे मातः! सूतिकादुःखमागतम् ॥ ४५
अथवा पुत्रलाभं किं प्रवदामि निगूढजम् ।
नाकृत्यं तादृशं किञ्चित् जाता कापि तु मे वरे ॥ ४६
काङ्क्षा सम्प्रति तामद्य वक्तुं शक्नोमि न स्वयम् ।
तथाऽपि तव वक्ष्यामि मातृत्वात् शृणु भामिनि! ॥ ४७

## पद्मावतीकथितभगवल्लक्षणतद्भक्तलक्षणानि

'त्वयाऽऽज्ञप्ताऽगमं मातः! पुण्यारामं सखीयुता ।
तत्राऽयातः पुमान् कश्चित् पुराणपुरुषोत्तमः ॥ ४८
मातः! स्मरामि तद्वक्त्रं पुण्डरीकनिभेक्षणम् ।
तं विना न हि जीवामि सत्यमित्यवधारय ॥ ४९
चरितं तस्य कृष्णस्य जानन्ति विबुधेश्वराः ।
पातालजाश्च मनुजाः न जानन्ति हरिं परम् ॥ ५०
सत्यं सर्वोत्तमः साक्षात् स एव पुरुषोत्तमः ।
दक्षिणं पाणिमाश्रित्य राजते चक्रमुत्तमम् ॥ ५१
तथा सव्ये शङ्खराजो राजते राजवल्लभे! ।
यत्कण्ठे कौस्तुभं रत्नं श्रुत्योर्मकरकुण्डले ॥ ५२
यस्य चक्रप्रभावेण दग्धा वाराणसी पुरी ।
यस्य शङ्खध्वनिं श्रुत्वा विद्रवन्त्यसुरादयः ॥ ५३
तद्भक्तलक्षणं वक्ष्ये शृणु मातः! सविस्तरम् ।
वेदशास्त्रपरा ये च स्वधर्माचरणे रताः ॥ ५४
वेदोक्तं कर्म कुर्वन्ति तद्भक्तान् विद्धि वैष्णवान् ।
शङ्खचक्राङ्किता ये चाप्यूर्ध्वपुण्ड्रधराश्च ये ॥ ५५

नासत्यवचना ये तु पितृमातृमते स्थिता ।
तद्भक्तलक्षणं त्वेतत् तं विना को नु जीवति ?' ॥ ५६

तनयावचनं श्रुत्वा साऽनन्दा वाक्यमब्रवीत् ।
धरणी– 'सत्यं वद महाप्राज्ञे! श्रमो वा ज्वरकारणम्' ॥ ५७

पद्मावती– 'सत्यं वदामि मातर्यः दृष्टपूर्वो महाप्रभुः ।
तद्दर्शनधिया मेऽद्य जायते देहशोषणम्' ॥ ५८

शतानन्दः– सान्त्वयित्वा सुतां भद्रा भर्तुर्भवनमभ्यगात् ।
पाकार्थं परमानन्दा भरिता भाग्यसम्पदा ॥ ५९

पुत्र्यङ्गशोषं संक्षुब्धं कृच्छ्रसन्तापसंयुतम् ।
अवदत्स्वपतिं प्राप्य पुत्रीकायविशोषणे ॥ ६०

कारणं धर्मदेव्युक्तं अथ तच्छान्तिकारणम् ।
सर्वं सम्बोधयामास पुत्र्या हृद्गतमादरात् ॥ ६१

## धरणीशं प्रति पद्मावतीसखीभिः सह वकुलागमनम्

एतस्मिन्नेव समये कन्याश्च वकुलाऽन्विताः ।
अभिषिच्याप्यगस्त्येशं शङ्करं ब्राह्मणैः सह ॥ ६२

सम्भारान् शिरसा धृत्वा ब्राह्मणैः सपुरोहितैः ।
राजधानीं समासाद्य भर्तुर्भवनमभ्ययुः ॥ ६३

समागतान् द्विजान् सर्वान् सम्पूज्य विधिपूर्वकम् ।
गन्धपुष्पाक्षताद्यैश्च वस्त्रालङ्कारभूषणैः ॥ ६४

विप्राशीर्वादमन्त्रैश्च मार्जयित्वा स्वकां सुताम् ।
अभुङ्क्त च स्वयं राजा ब्राह्मणानामथाऽज्ञया ॥ ६५

सा भुक्त्वाऽथ महाभाग! धरणी बहिरागता ।
ददर्श तां महाराज! वकुलां नवरूपिणीम् ॥ ६६

धर्मदेव्या वचः स्मृत्वा तत्समीपमुपागमत् ।
पप्रच्छ तास्तदा कन्याः एतद्वृत्तान्तकोविदाः ॥ ६७

धरणी— 'कैषा कस्मादुपायाता पूज्येव प्रतिभाति मे ।
पृच्छयतां कन्यकाः ! अस्याः किमागमनकारणम्' ॥ ६८

एवमुक्ताः कन्यकास्तु धरणीमब्रुवंस्तदा ।
कन्यकाः— 'वासः पन्नगशैलेऽस्याः स्वामी श्रीवेङ्कटेश्वरः ॥ ६९

तदाज्ञाकारिका काचित् नाम्ना वकुलमालिका ।
अनया 'धरणादेव्याः सन्निधौ मम किञ्चन ॥ ७०

कार्यमस्ती'ति कथितं ततस्तु सहितास्तया ।
वयं प्राप्ता महाभागे ! त्वत्समीपमिहाधुना ॥ ७१

पृच्छयतां सैव वृत्तान्तं तदागमनकारणम्' ।
एवमुक्ताऽथ कल्याणी वकुलां समभाषत ॥ ७२

'तिष्ठ भद्रे ! वरारोहे ! रत्नपीठे सुनिर्मले' ।
इत्युक्ताऽऽनन्दभरिता वकुला तत्र संस्थिता ॥ ७३

मेने कृतार्थमात्मानं साफल्यं जन्मनोऽपि च ।
धरणी— 'स्वागतं ते वरारोहे ! मम पुण्यसमुच्चयात् ॥ ७४

मन्ये कृतार्थमात्मानं सफलं साधुसङ्गमात् ।
निर्देष्टव्यं भवत्कर्म तदद्य विदधीमहि ॥ ७५

किमर्थमागमो मातः ! शीघ्रं तत्कथ्यता'मिति ।
बभाषे वकुला भार्यां राज्ञस्तस्य महात्मनः ॥ ७६

## धरणीं प्रति वकुलोक्तस्वागमनकारणम्

वकुला— 'कन्यापेक्षा मुख्यकार्यं पुनः कार्यशतेन किम् ?' ।
मुख्यकार्यं ततः श्रुत्वा वकुलामब्रवीदिदम् ॥ ७७

धरणी— 'सम्यगुक्तं त्वया देवि! वरापेक्षाऽपि वर्तते ।
को वरः कश्च देशोऽस्य गोत्रं नक्षत्रकश्च किम्? ॥ ७८
किं नाम? जनकश्चास्य माता चापि महात्मनः ।
किं कुलं? कोऽस्य चाऽचारो? जातिर्वा तस्य का? वद' ।
कुलाऽचारादिकं पृष्टा वकुला वाक्यमब्रवीत् ॥ ७९

वकुला—

'शृणु राज्ञि! सविस्तारं गोत्रं बन्धुजनं तथा ।
देवकी जननी तस्य जनकः शूरनन्दनः ॥ ८०
निशाकरकुलं तस्य नाम कृष्ण इति स्मृतम् ।
वसिष्ठगोत्रे चोत्पत्तिः नक्षत्रं श्रवणं तथा ॥ ८१
आवासो वेङ्कटगिरिः विद्यावान् धनवान् बली ।
बहुलाऽचारसम्पन्नो वयसा पञ्चविंशकः ॥ ८२
पाणिग्रहणकाले तु तं दृष्ट्वा तोषमेष्यसि ।
किमत्र बहुनोक्तेन दर्शनात्ते सुखं भवेत्' ।
तद्वृत्तमखिलं श्रुत्वा तामाहाऽनन्दनिर्भरा ॥ ८३

धरणी—

'शङ्का जाता वरारोहे! मम ते वचनात्सखि! ।
सभाग्यश्च कुलीनश्च बुद्धिमांश्च युवा बली ॥ ८४
वाग्मी चोक्तोऽस्य चैतावत् विवाहो न कृतः कुतः? ।
सा तद्वचनमाकर्ण्यानपत्यमनुचिन्त्य तम् ।
धैर्येण वचनं प्राह धरणीं राजवल्लभाम् ॥ ८५

वकुला—

'कृतवैवाहिको देवि! बाल्ये भागीरथीपिता ।
तत्रापत्यमनालोक्य द्वितीयं कर्तुमुत्सुकः ॥ ८६

न दोषमितरं विद्धि श्रीनिवासे निरामये ' ।
तद्वृत्तमखिलं श्रुत्वा समाहूय स्वकं सुतम् ॥ ८७
नृपमाह्वापयामास धरणी पतिमात्मनः ।
एकान्ते राजशार्दूलं इद वचनमब्रवीत् ॥ ८८

## धरण्युक्तचा वियन्नृपकृतपद्मावत्याश्वासनप्रकारः

धरणी– ' कन्यार्थमागता राजन्! वकुला वेङ्कटाचलात् ।
सुतं सम्प्रेक्ष्य चापि त्वं स्वपुरोहितमन्त्रिभिः ॥ ८९
वरस्यापि विचार्याशु कुलविद्याबलादिकम् ।
गोत्रऋक्षाद्यानुकूल्यं ब्राह्मणैर्वेदपारगैः ॥ ९०
विचार्य वरवध्वोश्च योनिनाडीसुसङ्गतिम् ।
सर्वं सम्यक्समालोच्य कन्यादानं कुरु प्रभो ! ॥ ९१
कन्यार्थमागता साध्वी दुहितुर्विदितं मनः ।
तमेवेच्छति ते पुत्री वेङ्कटाचलवासिनम् ॥ ९२
धर्मदेवीवचः सत्यं शुभं शीघ्रं विधीयताम् ' ।
इति पत्न्या वचः श्रुत्वा सोऽभूदानन्दनिर्भरः ॥ ९३
आकाशराजः-'अहो मङ्गलमस्माकं सम्प्राप्तं पूर्वपुण्यतः ।
अस्माकं पितरः सर्वे कृतार्था मुक्तिभागिनः ॥ ९४
त्वद्वाक्यामृतपानेन रोमहर्षस्तु जायते ।
कदा पश्यामि कल्याणं वधूवरसमागतम् ॥ ९५
सभर्तृकां राजपुत्रीं राजसिंहासने स्थिताम् ।
कदा पश्यामि नेत्राभ्यां बन्धुमण्डलमध्यगाम् ' ॥ ९६
इत्युक्त्वा भवनं चागात दुहितुर्दुहितृप्रियः ।
नृपः पद्मावतीं प्राह सान्त्वयन् वचसा सुताम् ॥ ९७

नृपः– ' भद्रे ! दुःखं मनस्स्थं ते त्यज शीघ्रमतः परम् ।
हृदये तव कल्याणि ! काऽपेक्षा वर्तते वद ॥ ९८
तामद्याहं करिष्यामि नात्र कार्या विचारणा ' ।
जनकस्य वचः श्रुत्वा जननीं वाक्यमब्रवीत् ॥ ९९

पद्मा–

' मातस्ते कथितं सर्वं जनकाय वचो मम ।
समाचक्ष्वाद्य सङ्कोचात् नाहं वक्तुं समुत्सहे ' ।
पुत्रीगिरं विदित्वा सा भर्तारं वाक्यमब्रवीत् ॥ १००

धरणी– ' साधयस्व महाभाग ! विवाहं विधिपूर्वकम् ।
विलम्बो नैव कर्तव्यः शुभार्थन्तु शुभानन ! ॥ १०१

राजा–

' तस्मै दास्यामि कृष्णाय श्रीनिवासाय धीमते ' ॥ १०२
इत्याश्वास्य सुतां राजा पुत्रमिन्द्रनिकेतनम् ।
प्रेषयामास राजेन्द्र ! गुर्वानयनकाङ्क्षया ॥ १०३
विलिख्य पत्रिकां राजा पुत्रीकल्याणसूचिकाम् ।
सम्प्रेषयामास तदा स्वपुत्रेण वियन्नृपः ॥ १०४

## वियन्नृपाज्ञया धरातलं प्रति बृहस्पत्यागमनम्

स गत्वा वायुवेगेन चन्द्रांशत्वात्तु भूमिप ! ।
अवन्दताऽनन्द्रपूर्णो गुरुमिन्द्रस्य च क्षणात् ॥ १०५
सपत्रं राजपुत्रञ्च समालोक्यागतं गुरुः ।
प्रतिष्ठाप्यासने तञ्च तेनानीतां तदा शुभाम् ॥ १०६
पपाठ च महाराज ! पत्रिकां शुभसूचिकाम् ।
तत्क्षणादागमद्राजन् ! राजानं स पुरोहितः ॥ १०७

प्राप्तं पुरोहितं दृष्ट्वा कृत्वाऽर्चां विधिपूर्वकम् ।
कालोचितं वाचयित्वा वन्दमान उवाच सः ।
राजा– 'तवाऽज्ञया करिष्यामि विवाहं दुहितुर्मम ॥ १०८
श्रीनिवासस्य सम्बन्धो विदितस्य प्रशस्यते ।
कन्यार्थमागता साध्वी विदिते गोत्रनामनी ॥ १०९
तथाऽपि तव वाक्येन विवाहं कर्तुमुत्सहे' ।
स राज्ञो वचनं श्रुत्वा राजानं प्रत्यभाषत ॥ ११०
गुरुः– 'सफलं वृक्षमाश्रित्य जीवन्ति बहवो भुवि ।
तथा वयञ्च जीवामः तव भाग्यावलम्बिनः ॥ १११
अहं कदाचिदेवात्र समागच्छामि भूतलम् ।
न जानामि ततः सम्यक् शुक आश्रितवान् सदा ॥ ११२
स जानाति महाराज! स्थितिमेतस्य शार्ङ्गिणः ।
अत्रैवोत्तरदिग्भागे पञ्चक्रोशमिते नृप! ॥ ११३
शुकोऽस्ति व्यासतनयः श्रीनिवासपरायणः ।
तमाहूय महाराज! शीघ्रं ते पृथिवीपते! ।
स वक्ष्यत्यात्मनः सौख्यं वृत्तान्तं तस्य चादितः' ॥ ११४

## बृहस्पत्युक्त्या वियन्नृपकृतशुकाह्वानम्

एवमुक्तोऽथ गुरुणा भ्रातरं ब्राह्मणप्रियम् ।
सन्दिदेश महाराज! शुकाश्रममरिन्दमः ॥ ११५
स गत्वा वायुवेगेन रथेनादित्यवर्चसा ।
ध्यानयोगादुत्थितं तं दृष्ट्वा शुकमुवाच ह ॥ ११६
तोण्डमान्– 'शृणु तापसशार्दूल! वचनं राजभाषितम् ।
पद्मावती विवाहार्हा सम्पन्ना गुरुपूजिता ॥ ११७

